# Literature connected with Tatparyachandrika.

## *Commentaries on Tatparyachandrika.*

1. Brihadgururajiya.
2. (Laghu) Gururajiya.
3. Saradendu.
4. Tatparyachandrika Prakasa.

| *Works of criticism on Tatparyachandrika* | *Works in defence of Tatparyachandrika* |
|---|---|
| (1) Tatwamartanda | (1) Saradagama |
| (2) Sankarapada Bhushana | (2) Dwaita Bhushana<br>(3) Katte Narsimhacharya's work |
| (3) Madhwa chandrika Khandana | (4) Tatparya chandrika Mandana<br>(5) Tatparya chandrika Prakasa Prasara |
| (4) Advaita Dipika | (6) Advaita Dipika Vatagama |

॥ ॐ ॥

# ॥ भूमिका ॥

अस्पृष्टदोषगन्धाय कल्याणगुणसिन्धवे ।
नमोनमोभक्तमुक्तिदायिने शेषशायिने ॥ १ ॥
तातपादान्संप्रणम्य गुरुभक्तिनियन्त्रितः ।
तत्कृतेः भूमिकां तन्वे तत्प्रसादबलोन्नतेः ॥ २ ॥

अद्वैतदीपिकावातागमाभिधोऽयं निबन्धः विद्वत्कुलतिलकमहीधरकुलोत्पन्नवासुदेवाचार्यात्मजैः पण्डितरत्नबिरुदाङ्कितैःगौडगिरिवेंकटरमणाचार्यैर्निरमायि। ब्रह्ममीमांसाशास्त्रविशारदा एते आचार्याःविद्यापीठमारूढैर्मठाधीशैर्महीशूरमहाराजैर्बरोडाधीशैः ट्रावङ्कूरमहाराजैश्च पाण्डित्यानुगुणं संमानिताः । एतेषां वेदांतशास्त्ररहस्यसमीक्षाऽस्मिन्प्रबन्धे सम्यक्प्रकटीकृता । एतद्ग्रन्थभूमिकारचनव्याजेन तात्पर्यचन्द्रिकायाः मध्वचन्द्रिकाखंडनाभिधस्य तत्खंडनस्य तात्पर्यचन्द्रिकाप्रकाशप्रसरस्य अद्वैतदीपिकायाः एतद्ग्रन्थस्यच चरितं संक्षेपेण यथामति लिख्यते । तत्र तात्पर्यचन्द्रिकायाश्चरितंकिंचित्प्रपञ्च्यते । यद्यपि तात्पर्यचन्द्रिकाप्रकाशप्रसरस्तात्पर्यचन्द्रिकाप्रकाशमुपजीव्य रचितस्तथापि तस्य चरितं भूमिकाविस्तरभयान्नेह प्रतन्यते । किंतु द्वैतवेदांताध्येतॄणां तात्पर्यचन्द्रिकाप्रकाशकारकृतमुपकारभारमभिदधत्पद्यमेकं तात्पर्यचंद्रिकाव्याख्यानामनिरूपणावसरे लिख्यते ॥

अदौ तावत्तात्पर्यचंद्रिकायाश्चरितमित्थं प्रवर्तते.—

श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितब्रह्मसूत्रभाष्यस्य निर्मलायागंभीरायाश्च टीकाया व्याख्यानां धुरि कीर्तनीयायास्तात्पर्यचंद्रिकाया रचयि-

तारः पदवाक्यप्रमाणशास्त्रसंप्रदायार्थकोविदाश्चंद्रिकाचार्या इति सुप्रसिद्धा व्यासराजमुनयः । ये सन्मार्गप्रवर्तकेभ्यस्सदाविष्णुपदासक्तेभ्यो ब्रह्मण्य-भास्करेभ्यो लब्धयत्याश्रमाः [१] । येषां च विद्यागुरव[२]स्सर्वशास्त्रविशारदाः ज्ञानवैराग्यभक्त्यादिगुणशालिनः श्रीपादराजाइति प्रख्याता लक्ष्मीनारायण-मुनयः। सतीर्थ्याः वादरत्नावलीकर्तारो विष्णुदासाचार्याः। अन्तेवासिनश्च चतुरधिकशतानां ग्रन्थानां निर्मातारो विजयींद्रसंयमींद्राः, गुर्वर्थदीपिकायुक्तिमल्लिकादीनां बहूनां ग्रन्थानां कर्तारो वादिराजस्वामिनः, अन्येच बहव आसन् । एते क्रिस्तशकषोडशे शतमाने भारतभूमिमिमामलञ्चक्रुरिति शासनै[३]र्निश्चीयते। एतेषां व्यसराजस्वामिनां कृतिषु अधः प्रदर्शिता अष्टौ ग्रंथास्सुप्रसिद्धाः ।

१. न्यायामृतम्
२. तर्कतण्डवम्
३. तात्पर्यचन्द्रिका
४. भेदोज्जीवनम्
५. तत्वविवेकटीकामन्दारमञ्जरी
६. मायावादखण्डनटीकामंदारमञ्जरी
७. उपाधिखंडनटीकामंदारमञ्जरी
८. मिथ्यात्वानुमानखंडनटीकामंदार[मञ्जरी ।

---

१. कंसध्वंसिपदाम्भोजसंसक्तो हंसपुंगवः । ब्रह्मण्यगुरुराजाख्यो वर्ततां मम मानसे ॥ (तात्पर्यचन्द्रिका)

२. ज्ञानवैराग्यभक्त्यादिकल्याणगुणशालिनः । लक्ष्मीनारायणमुनीन् वंदे विद्यागुरून्मम ॥ (न्यायामृतं)

३. विजयनगराधीश कृष्णदेवराजेन गौरापुराभिधो ग्रामः व्यासराजस्वामिभ्यः नवचत्वारिंशदधिकचतुश्शतोत्तरैकसहस्रतमे शकाब्दे दत्त इति शासने दृश्यते ॥

स्वेषामेभिर्ग्रन्थैरुपकुर्वतामेतेषां सर्वे मध्वमतानुयायिनोऽधमर्णा एव । एते गुरुवर्या एवं स्तूयन्ते—

मायातंत्रामरारिस्मयमपनयतो मध्वसिद्धांतनाम्नो
नेत्राणीव त्रयोपि त्रिजगति नृहरेरिन्धते यत्प्रबन्धाः ।
यद्वागद्वैतविद्याचलकुलकुलिशप्रौढिमाढौकते सः
श्रेयो भूयो विदध्यात्सुमहितमहिमा संप्रति व्यासराजः

महात्मनामेतेषां चरितं प्राचीनैस्सोमनाथकविभिः काव्यपद्धतिमनुरुध्य नानालंकारभूषितायां व्यासयोगिचरिता[४]भिधायां स्वकृतौ विस्तरेण वर्णितमतो नेह वितन्यते ।

एते व्यासराजस्वामिनो जयतीर्थार्यकृततत्वप्रकाशिकाव्याख्याव्याजेनाधिसूत्रं प्रवर्तमानेषु ग्रंथेषु दुर्गमानर्थान्सुगमान्विधित्सवस्तात्पर्यचंद्रिकाख्यंग्रंथरत्नं रचयामासुः । यत्रैतेषां पदवाक्यप्रमाणरहस्यसर्वंकषमनीषाविशेषः, संप्रदायार्थकौशल्यं, परपक्षप्रतिक्षेपप्रौढिमा च सम्यक्प्रकटीकृतानि ।

इमे ग्रंथकारा व्याख्यापद्धतौ मिथ्यासिद्धांतदुर्ध्वांतविध्वंसनविचक्षणानां जयतीर्थाख्यतरणीनां टीकाचार्याइति सुप्रसिद्धानां मार्गमेवानुसरन्ति । यैर्जयार्यैः कृते विदग्धगोष्ठीसुप्रसिद्धे न्यायसुधाख्ये गन्थरत्नेऽस्मिन्प्रस्तावे समुपलब्धानि वाक्यान्युद्धृत्याधः प्रदर्शयिष्यन्ते.—

"यावदापातरमणीयं परेषां व्याख्यानं शिष्याः पश्येयुः नतावदसदुक्ते सूत्राणां निजांशेप्यंजसादरंकुर्युः किमसौ सूत्रार्थः किं वायमिति संदेहावस्कंदनात् । निराकृतेत्वपव्याख्याने नैरंतर्यादराभ्यामसदुक्तमेव सूत्रार्थमुपा-

---

४. सोमनाथकवयः क्रिस्तशकषोडशे शतमाने आसन्निति तत्कृतितो ज्ञायते ॥

दाय शास्त्रार्थमीमांसायां निर्विचिकित्साः प्रवर्तेरन् । ततो मानामभूदयं सूत्रार्थस्तथापि सूत्रार्थग्रहणोपायत्वात् व्यकरणादावुदाहरणप्रत्युदाहरणप्रदर्शनादिवन्नकञ्चन दोषमावहति किन्नाम गुणहेतुरेवेति ॥ [५]

१. वादिराजस्वामिकृता गुर्वर्थदीपिका.
२. राघवेंद्रकृतःभावदीपः.
३. सत्यनाथयतिकृता अभिनवचंद्रिका.
४. सुमतींद्रकृतः भावरत्नकोशः.
५. शर्कराश्रीनिवासतीर्थकृता वाक्यार्थमञ्जरी.
६. विठलसुतश्रीनिवासरचिता प्रमेयसुक्तावली.
७. विठलसुतश्रीनिवासकृता वाक्यार्थमुक्तावली.
८. सत्यप्रिययतिकृता तत्वप्रकाशिकाविवृतिः.

यद्यपि पार्श्वे प्रदर्शितास्तत्वप्रकाशिका - व्याख्याः सुप्रसिद्धास्तथापि तास्सर्वाः प्रायस्तात्पर्यचंद्रिकासुपजीव्यरचिताः । यत्र तत्वप्रकाशिकाया आशयस्सम्यक् प्रदर्शितः ॥तदुक्तंः—

तत्वप्रकाशिकाकूतं चंद्रिकातः प्रकाशितं [६] । इति॥

व्यासराजस्वामिनस्तत्वप्रकाशिकाव्याख्याने हेतुं स्वप्रवृत्तेः प्रयोजनं च तात्पर्यचंद्रिकाया आदिभागेऽधः प्रदर्शितश्लोकैर्निरूपयंति ॥

श्रीमद्भाष्यस्य टीका या जयतीर्थार्यनिर्मिता ।
गंभीरा निर्मला चेमां व्याकरिष्ये यथामति ॥
सूत्रे भाष्येऽनुभाष्ये च सन्नचायविवृतौ तथा ।
टीकासु च यदस्पष्टं तच्च स्पष्टीकरिष्यते ॥
प्रतिसूत्रं प्रकाश्येते घटनाघटने मया ।
स्वीयान्यपक्षयोस्सम्यग्विदांकुर्वंतु सूरयः ॥ इति ॥

---

५. न्यायसुधा—पृष्टं—१२३.

६. तत्वप्रकाशिकाभावदीपः—पृ. १.

अस्यां तात्पर्यचंद्रिकायां व्यासराजस्वामिनस्तत्वप्रकाशिकायाः प्रथम मध्यायं द्वितीयं च विवृण्वन्ति। शेषचंद्रिकाख्ये ग्रंथे तत्वप्रकाशिकायास्तृतीय तुरीयाध्यायौ रघुनाथयतिभिरशेषचंद्रिकाचार्या इति प्रख्यातैर्महात्मभिर्विवृतौ।

ब्रह्मसूत्रे तद्भाष्येऽनुभाष्ये न्यायविवरणे तत्वप्रदीपे तत्वप्रकाशिकायां सन्नयायरत्नावल्यां न्यायसुधायां चास्पष्टार्थस्यस्पष्टीकरणं - अधिसूत्रं प्रवर्तमानानां ग्रंथानामविरोधसमर्थनं- बाधकसाधकभावाभावप्रदर्शनेन परपक्षं प्रतिक्षिप्य साधकबाधकभावाभावप्रदर्शनपूर्वकं स्वपक्षं प्रसाध्य जगज्जन्मादिकारणे सकलगुणपरिपूर्णे समस्तावद्यगंधविधुरे परे ब्रह्मणि विष्णौ समस्तश्रुतीनां शक्ति तात्पर्यनिर्णायकलिंगसंघैर्मुख्यया वृत्त्या महातात्पर्यनिरूपणं चास्य महाग्रन्थस्यासाधारणा धर्माः ॥

अस्मिन्ग्रन्थे प्रत्यधिकरणं, यथासंभवं शास्त्राध्यायपादश्रुत्यधिकरणसंगतयः, गतार्थताशङ्कातन्निरासः, विषयः, विशयः, पूर्वपक्षः, तत्रफलफलीभावः, सिद्धांतः, तत्रफलफलीभावः, सूत्रक्रमविचारः, सूत्रकृत्यं, अस्पष्टस्थलेषु सूत्राक्षरार्थाः भाष्याक्षरार्थाष्टीकाक्षरार्थाश्च, परपक्षे संगत्यभावपूर्वपक्षानुत्थानसिद्धांतानुपपत्यादिदोषाः, स्वपक्षेसर्वसामंजस्यं, पादांते पादप्रतिपादितविषयसंग्रहः, स्वकृतसंग्रहश्लोकैस्स्वसिद्धांतस्य तत्रतत्रनिरूपणं च सूपपादितानि । भूमिकागौरवभयाद्वैतसिद्धांतरीत्या जीवकर्तृत्वविचारपराः केचन संग्रहश्लोकाः तात्पर्यचंद्रिकात उद्धृत्याधः प्रदर्शयिष्यंते ॥

कर्तृत्वमात्रं जीवस्य ममापीष्टं घटादिषु ।
अन्यानधीनकर्तृत्वे स्याद्धिताकरणादिकम् ॥ १ ॥
कथं न कुर्यात्प्रेक्षावान्स्वतंत्रः स्वहितं सदा ।
कथं च स्वाहितं कुर्यात्तथा च सकलो जनः ॥ २ ॥
पूर्णानंदश्च निर्दुःखः सर्वदैव प्रसज्यते ।
कर्मकालादिकस्यापि जडत्वान्नस्वतंत्रता ॥ ३ ॥

नैव बध्नाति पुरुषं स्वयं हि निगडादिकं ।
जीवस्ततो दारुयोषावदन्याधीनचेष्टितः ॥ ४ ॥
चेतनोप्यस्वतंत्रोऽस्तु सूत्रप्रोतशुकादिवत् ।
प्रत्यक्षं चास्वतंत्रत्वं मृतिसुप्त्युद्भवादिषु ॥ ५ ॥
यत्रेशेच्छानुसारेण स्वस्यापीच्छोपजायते ।
कार्योपसंहृतिं काकतालीयां तत्र वीक्ष्यतु ॥ ६ ॥
देहादियंतुश्च हरेरगृहीत्वा ततो भिदां ।
स्वतंत्रकर्तृतां स्वस्य मन्यते ह्यबुधो जनः ॥ ७ ॥
चार्वाकस्य यथा देहे जडे स्वातंत्र्यधीस्तथा ।
(यथैवात्मपराधीने देहे स्वातंत्र्यधीस्तथा) ।
जीवबिंबेश्वराधीने जीवे स्वातंत्र्यविभ्रमः ॥ ८ ॥
आविर्भावतिरोभावौ शक्तियोगात्पिशाचवत् ।
ईश्वरस्योपपद्येते सर्वत्रावस्थितस्य च ॥ ९ ॥
गौरवंतन्नभाराय यत्प्रमाणस्य संमतम् ।
न हि भाराय भवति कांक्षितं भूषणादिकम् ॥ १० ॥
प्रत्युत—प्रामाणिकेशकर्तृत्वत्यागादप्रमितस्य च ।
जीवे तस्य स्वीकृतेश्च गौरवं पूर्वपक्षिणः ॥ ११ ॥[७] इति-

अधिसूत्रं प्रवर्तमानानां ग्रंथानामविरोधसमर्थनप्रस्तावे प्रथमसूत्रावयवस्यान्येषां च सूत्राणामंगस्योंकारस्यान्वयविषयेऽनुभाष्यव्याख्यानयोस्सन्नचायरत्नावलीन्यायसुधयोरविरोधसमर्थनपर एक एव भागस्तात्पर्यचंद्रिकात उद्धृत्याधोलिख्यते—

सुधायां च "स्रवत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यत" इति श्रुतिबलात्प्रतिसूत्रं ब्रह्मविद्यात्वादाद्यंतयोरोंकारस्योहः कार्यः। न चोह्यमानं वाक्या-

७. तात्पर्यचंद्रिका—पृ. ८८४–८८५.

त्पृथक् । मंत्रेष्वप्यूह्यमानस्य तदनवयवत्वप्रसंगात् । ओंकारार्थस्य प्रथमसूत्र वाक्यार्थे समन्वयेनावयवत्वनिश्चयाच्च । असंहिततयानिर्देशस्तु सर्वसूत्रेष्वनु गतिसूचनार्थं" इत्युक्तं[८]

सन्नचायरत्नावल्यां तु "ओंकारस्तु पृथगुच्चारितो वेदितव्यः । नाथ शब्दवत्सूत्रोपनिबद्ध" इति सूत्रात्पार्थक्यमेवोक्तं ॥

तत्रानुव्याख्याने ओतत्ववाच्यादिना तदर्थकथनं सर्ववेदव्याख्येयोंकारा-र्थवाचकश्रीनारायणपदवाच्यस्य सर्ववेदार्थत्वाच्छास्त्रविषयत्वमित्यभिप्रेत्य । न तु सूत्रार्थतया । अन्यथा भर्गादिपदानामपि सूत्रावयवत्वं स्यात् । स एव भर्गशब्दार्थ इति तदर्थस्यापि कथनादिति भावः । यद्वा मास्तु "स्रवत्य नोंकृत" मित्यनेन साधारणोंकारस्याद्यसूत्रावयवता । तथापि "ओंकारश्चाथ शब्दश्च तस्मात्प्राथमिकौ क्रमात् । तद्धेतुत्वं वदंश्चापि तृतीयोत उदाहृतः । अतश्च पूर्वमुच्चार्याः सर्व एते सतां मताः" इति भाष्योदाहृतस्मृत्याऽथातश्श ब्दतुल्यतयाऽऽद्यसूत्रावयवताया उक्तत्वादनुव्याख्याने तत्रताराथमूलत्वमित्य-थशब्दतुल्यतयोंकारस्याऽऽद्यसूत्रावयवत्वोक्तिर्युक्ता । एवं च सन्नचायरत्ना-वली स्रवतीत्यादिश्रुतिप्रापितसाधारणोंकारविषया । सुधा तु ओंकारश्चेत्यादि स्मृतिप्रपितासाधारणोंकारविषयेतिद्रष्टव्यं । यद्वा सन्नचायरत्नावल्युक्तं पृथ-क्त्वंमूह्यमानत्वं न तु वाक्येऽनन्वय इत्यविरोध इत्यादि द्रष्टव्यं[९] ॥

परपक्षे बाधकानुपन्यस्य साधकाभावं च प्रदर्श्य स्वसिद्धांतस्थापन-प्रस्तावे जिज्ञासाधिकरणेऽद्वैत्यंगीकृतशुद्धाभानवादमधिकृत्य प्रवृत्ते विचारेऽद्वैत मतसंश्लिष्टदोषोद्धाटनपरः भागः द्वैतसिद्धांतप्रतिपादकभागश्चोद्धृत्याधोलिख्येते॥

इदमत्रबोध्यं ॥ चन्द्रिकाकाराः परोक्तदूष्यांशस्यार्थानुवादं कृत्वा द्वैतभाष्यसूचिताद्वैतमतलग्नदूषणानि दर्शयिष्यंति । तदुक्तं ॥

---

८. तात्पर्यचंद्रिका–पृ. ९०.

९. तात्पर्यचंद्रिका–पृ. ९७–९८

परोक्षे दूष्यएवांशो मितैश्शब्दैरनूद्यते ॥

दूषणंचापि हनुमद्भाष्यसूचितमुच्यते ॥ १०

शुद्धाभानवादमधिकृत्य प्रवृत्ते विचारेऽद्वैतमतलग्नदोषोद्घाटनपरो भागः ॥

तत्रभामत्युक्तमधिकरणं ॥ प्रत्यगात्मन एव ब्रह्मत्वात्तस्य चाहमिति प्रकाशमानत्वेनासंदिग्धत्वान्न विषयत्वं । नाप्यविद्यानिवृत्तिः प्रयोजनं । उक्त रीत्याऽऽत्मनि भासमानेपि तदनिवृत्तेः । न च वाच्यमहंप्रत्ययः स्थूलोऽहं कर्ता भोक्ता दुःखीति गृह्णाति । तद्विपरीतश्च वेदांतप्रतिपाद्यः संदिग्ध इति विषयादिसिद्धिरिति । वेदांतानामध्ययनविध्यापादितप्रयोजनवदर्थावबोधनानामपि प्रबलाहंप्रत्ययबाधितत्वेन जपमात्रोपयोगित्वेनाविवक्षितार्थत्वादुपचरितार्थत्वाद्वा । तथा च वेदांतविचारोनारब्धव्य इति पूर्वपक्षः ॥ सिद्धांतस्तु ॥ वेदांतवाक्यैर्ज्ञानानंदैकरसाद्वितीयोदासीनस्वभावआत्मोपक्रमादिभिः प्रतिपाद्यते । न च क्रियासमभिहारेणेदृगात्मतत्वमभिदधति तत्पराणिसंति युक्तमुपचरितार्थानीति वक्तुं । प्रत्यक्षं तु संभावितदोषमपौरुषेयेण निर्दोषेणागमेन बाध्यते । तेन वेदांतवेद्यः शुद्धोऽहंप्रत्यये न भातीति विषयादिसिद्धिरिति ॥

तन्न । तथाहि ॥ शुद्धो न भातीति कोर्थः । किमात्मस्वरूपे किंचिद्भाति किंचिन्नभातीति । किंवात्मस्वरूपमेव न भातीति यद्वाऽनात्मापि भातीति । आद्येऽभासमानोंशः शरीरादिभ्यो भेदो वा । कर्तृत्वभोक्तृत्वाद्यभावो वा ब्रह्मत्माभेदो वा द्वितीयमात्राभावो वा । अत्मभिन्नः सत्यश्चेदपसिद्धांतः । अभावद्वैतंत्वन्यत्र निरस्तं । मिथ्याचेन्न तत्वावेदकशास्त्रवेद्यः । आत्ममात्रत्वे तु द्वितीयपक्षांतर्भावः । तथापि कल्पितभेदेनागृहीत इव भातीति चेन्न । तत्वतोगृह्यमाणेधिष्ठाने भेदकल्पनाया अगृहीतत्वारोपस्य चायोगात् । ................ । अत एव न द्वितीयः ॥

---

१०.तात्पर्यचंद्रिका– पृ. १९.

तस्य स्वप्रकाशत्वेनाभानायोगात् । स्वप्रकाशस्याप्यविद्यावशादभानेऽविद्यादे-
र्दुःखादेश्च प्रकाशो न स्यात् । तस्य चैतन्यप्रकाशाधीनप्रकाशत्वोपगमात् ।
................ । न तृतीयः ॥ अनात्मनोधिकस्य भानेप्यात्मनोसंदिग्ध
त्वेनाविषयत्वतादवस्थ्यात् । अधिष्ठाने तत्वतः स्फुरत्यनात्मारोपायोगाच्च ॥
इति. ११

द्वैतसिद्धांतप्रतिपादकभागः—

सिद्धांतसंक्षेपस्तु ॥ जिज्ञास्यब्रह्मशब्देन गुणपूर्त्यभिधायिना ॥ अपूर्णत्वेनानुभूताज्जीवाद्भिन्नं प्रतीयते ॥ १ ॥ जिज्ञास्यमेव ब्रह्म । तद्विजिज्ञासस्व तद्ब्रह्मेत्यादिश्रुतेः । श्रौतब्रह्मशब्दोक्तया गुणपूर्त्याऽल्पगुणत्वेनानुभूयमाना-जीवाद्भिन्नत्वेन संदिग्धत्वाच्च । निर्दोषश्रुतिसाक्षिभ्यां प्रमिते ब्रह्मजीवयोः । गुणपूर्त्यल्पगुणते मिथ्येति च न युज्यते ॥ १ ॥ न केवलमथकस्मादुच्यते ब्रह्मेति बृहंतोह्यस्मिन्गुणा इति श्रुत्या गुणपूर्तिः ब्रह्मशब्दार्थः । किं तु ब्रह्म शब्दावयवशक्त्यापि । अपरिच्छेदे हि तस्यावयवशक्तिः परस्यापि संमता । गुणपरिच्छेदोपि चापरिच्छेद एव । न च संकोचे हेतुरस्ति । अन्यथा कालमात्रापरिच्छेदस्तदर्थः स्यात् । वक्ष्यते चैतत्सौत्रब्रह्मशब्दव्याख्यानाव-सरे । टीकायां तु देशमात्रापरिच्छेदार्थत्वेपि तावतैवाणोर्जीवाद्भेदसि-द्धेस्तदुपेत्योक्तं । ................ । तदेतदभिप्रेत्योक्तं न्यायविवरणे "तद्विजिज्ञासस्वतद्ब्रह्मेति ब्रह्मशब्देन पूर्णगुणत्वोक्तेर्नानुभवसिद्धाल्पगुण-जीवाभेद" इति १२ ॥

तात्पर्यचंद्रिकायामाहत्याधिकरणानि पंचनवतिर्निरूपितानि । तत्राद्या-

११. तात्पर्यचंद्रिका—पृ. २०.

१२. तात्पर्यचंद्रिका—पृ. ४६—५०.

ध्यायस्य प्रथमपादे द्वादशाधिकरणानि[१३] । द्वितीयपादे सप्त, तृतीये चतु-र्दश चतुर्थे सप्त[१४] । द्वितीयाध्याये प्रथमपादे एकादश, द्वितीये द्वादश, तृतीये एकोनविंशतिः तुरीये त्रयोदश इति विवेकः—

तात्पर्यचंद्रिकाया अंत्यानि वाक्यान्यधः प्रदर्शयिष्यन्ते –

इति श्रीमद्ब्रह्मण्यतीर्थपूज्यपादानां शिष्येण व्यासयतिना विरचितायां
श्रीमद्भाष्यटीकाविवृतौ तात्पर्यचंद्रिकायां द्वितीयाध्यायस्य
चतुर्थःपादः अध्यायश्च संपूर्णः ॥

॥ ग्रंथश्चायं संपूर्णः ॥

---

१. बृहद्गुरुराजीयं.
२. लघुगुरुराजीयं.
३. तात्पर्यचन्द्रिकाप्रकाशः.
४. शारदेंदुः.

तात्पर्यचंद्रिकाव्याख्यासु पार्श्व-प्रदर्शिताश्चतस्रः टिप्पण्यः सर्वविद्वद्विदिताः तासु राघवेंद्रस्वामिभिः कृता तात्पर्यचन्द्रिकाप्रकाशाख्या-व्याख्या सुप्रसिद्धा । या चन्द्रिकाध्येतॄनत्यंतमुपकरोति । द्वैतसिद्धांता-ध्ययनपराणां राघवेंद्रस्वामिकृतमुपकारमभिदधत्पद्यमेकमधोलिख्यते । –

व्यासेन व्युप्तबीजः श्रुतिभुवि भगवत्पादलब्धांकुरश्रीः
प्रत्नैरीषत्प्रभिन्नोऽजनि जयमुनिना सम्यगुद्भिन्नशाखः ॥
मौनीशव्यासराजदुदितकिसलयः पुष्पितोयं जयींद्रादद्य
श्रीराघवेंद्राद्विकसति फलितो मध्वसिद्धांतशाखी ॥ १ ॥

---

१३. तत्वप्रकाशिकारीत्याद्वादश - तत्वप्रदीपसन्नयायरत्नावलीरीत्या एकादश—तात्पर्यचंद्रिका–पृ. ३५६.

१४. अत्राधिकरणसंख्याविचारः तात्पर्यचन्द्रिकायांद्रष्टव्यः-तात्पर्यचन्द्रिका–पृ. ७५०.

तात्पर्यचंन्द्रिकायां प्रदर्शितानिपरपक्षलग्नानि वज्रकल्पानि दूषणान्यसहमानैः परपक्षावलंबिभिर्विशिष्टाद्वैतिभिरद्वैतिभिश्च स्वस्वमतप्रतिष्ठापयितुकामैः स्वसिद्धांतरक्षणाय तात्पर्यचन्द्रिकाखंडनरूपाः बहवः प्रबंधा निर्मिताः। ततो द्वैतसिद्धांतप्रतिष्ठापने निरता मध्वमतानुयायिनश्चन्द्रिकाखंडनस्य खंडने कृते चन्द्रिकासमर्थनमवर्जनीयतया कृतं भवतीति मन्वानाश्चन्द्रिकाखंडनखंडनरूपग्रंथान् बहून् रचयामासुः। यत्र चन्द्रिकाखंडनकृदुक्तदूषणानामाभासता चंद्रिकाकृदुक्तदूषणानां दुरुद्धरता च सम्यक्प्रकटीकृते। एते च चंद्रिकाखंडनरूपग्रंथाः चंद्रिकासमर्थनार्थं प्रवृत्ता ग्रंथाश्च प्राचीनैरर्वाचीनैश्च कृता बहवस्संति। तेषु विशिष्टाद्वैतिभिः कृतासु चंद्रिकाखंडनरूपकृतिषु तत्वमार्तांडाख्यो ग्रंथस्सुप्रसिद्धो वर्तते। चंद्रिकादूषणार्थं प्रवृत्तैर्विशिष्टाद्वैतिभिःकृतस्यग्रंथस्य दूषणार्थं द्वैतमतानुयायिभिर्विरचितश्चन्द्रिकासमर्थनक्षमरशरदागमाख्यः प्रबंधोपि सर्वविद्वद्भिर्विदित एव। चंद्रिकादूषणपरेष्वद्वैतग्रंथेषु रघुनाथसूरिभिः कृतश्शंकरपादभूषणाभिधो ग्रंथः शिलाक्षरैरंकितस्सुप्रसिद्धश्च। एतदद्वैतग्रंथं दूषयितुं प्रवृत्ताः श्रीनिवासाचार्याः कट्टेनरसिंहाचार्यौश्च चंद्रिकासमर्थनार्थं ग्रंथौ व्यरचयन्। नरसिंहाचार्याणां कृतिर्नमुद्रिता। श्रीनिवासाचार्याणां प्रबंधो द्वैतभूषणनाम्ना सुप्रसिद्ध आयसाक्षरैर्मुद्रितः प्रकाशिश्च ॥

तात्पर्यचंद्रिकाप्रकाशमुखा द्वैतभूषणांता ग्रंथाःप्रसक्तानुप्रसक्ता इति तेषां चरितमिह न लिख्यते। किन्नामावसरप्राप्तस्याद्वैतसिद्धांतप्रतिष्टापनार्थमर्वाचीनैः रचितस्य मध्वचंद्रिकाखंडनाख्यग्रंथस्य चरितं संक्षेपेण निरूप्यते ॥

तथाहि ॥ मध्वचंद्रिकाखंडनाभिख्याख्य निबंधस्य जन्मभूमिस्तिरुविशलूरग्रामवास्तव्या महामहोपाध्याय रामसुब्रह्मण्यशास्त्रिणः। एकोनविंशत्यधिकनवशताधिकैकसहस्रतमे क्रिस्ताब्देऽयंग्रंथो वाराणस्यामायसाक्षरै-

मुद्रितः प्रकाशितश्च । यद्यपि जयतीर्थार्यकृततत्वप्रकाशिकायाः व्यासराजस्वामिकृता व्याख्या मध्वसिद्धांतग्रंथेषु तात्पर्यचंद्रिकेत्येव सुप्रसिद्धा । तथापि शास्त्रिभिः कृतामध्वचंद्रिकेत्यस्याः कृतेर्नाम तैः कुत्रोपलब्धमिति त एव जानंति । ज्ञापकाभावात् शास्त्र्युत्प्रेक्षामात्रनिबंधनमित्यवगम्यते । तात्पर्यचंद्रिकाप्रोक्तमद्वैतमतसंश्लिष्टंदोषसंचयमुद्दिधीर्षवश्शास्त्रिणोऽद्वैतमंडनपूर्वकचंद्रिकाखंडनं शांकरीयमतसिद्धवर्त्मना रचयामासुरित्यस्याः कृतेरादिमश्लोकादेव स्फुटं ज्ञायते । अस्यग्रंथस्याद्यं पद्यमुद्धृत्याधो लिख्यते ॥

व्यासरायकृतमध्वचन्द्रिका रामसुब्बविदुषा विचाल्यते ।
शांकरीयमतसिद्धवर्त्मना जानकीशमभिवंद्य भक्तितः ॥ १ ॥

अस्मिन् ग्रंथे तात्पर्यचंद्रिकायाः प्रथमाध्यायाद्यपादगतविमतविषया एव विचारिताः । अद्वैतभाष्यरीत्याऽऽद्याध्यायस्य प्रथमपादे एकादशाधिकरणानि । तत्वप्रकाशिकारीत्या तु द्वादश । शांकरभाष्यस्थो ज्योतिर्नयस्तत्व प्रकाशिकारीत्या ज्योतिर्नय इति गायत्रीनय इति नयद्वयात्मको भवतीत्य वधेयं ॥

मध्वचंद्रिकाखंडनकारास्स्वग्रंथप्रयोजननिरूपणानंतरं जिज्ञासाधिकरणस्य पूर्वपक्षं राद्धांतं च भामतीरीत्या संग्रहेणोपपाद्य तात्पर्यचंद्रिकोक्तान् भामत्युक्तिलग्नान् दोषाननूद्य तानपाकर्तुं प्रयतंते । अस्मिन्प्रस्तावे मध्वचंद्रिकाखंडने उपलब्धानि वाक्यान्यधः प्रदर्शयिष्यंते ॥

सू ॥ अथातो ब्रह्मजिज्ञासा ॥ १ ॥

अत्राचार्यवाचस्पतिमिश्राः—

प्रत्यगात्मन एव ब्रह्मत्वात्तस्य चाहमिति प्रकाशमानत्वादसंदिग्धत्वेन न विचारविषयत्वम् । नाप्यविद्यानिवृत्तिः प्रयोजनम् , अहमिति आत्मनि भासमानेपि तदनिवृत्तेः । न च अहमिति प्रत्ययः "स्थूलोहंकर्ता भोक्ता दुःखी" इत्यात्मानं गृह्णाति, तद्विपरीतश्च वेदान्तप्रतिपाद्य इति विषयादिसिद्धि

रिति वाच्यं । वेदान्तानामध्ययनविध्यापादितप्रयोजनवदर्थावबोधकानामपि प्रबलाहंप्रत्ययबाधितत्वेन जपमात्रोपयोगितया अविवक्षितार्थकत्वात् । तथा च वेदान्तविचारो नाऽऽरम्भव्य इति पूर्वः पक्षः ॥

राद्धान्तस्तु—वेदान्तवाक्यैर्ज्ञानानन्दैकरसोऽद्वितीय आत्मा उपक्रमादिभिः प्रतिपाद्यते, न चाऽऽत्मतत्वमभिदधन्ति तत्पराणि सन्ति वेदान्तवाक्यानि युक्तमुपचरितार्थानीति वक्तुम्, प्रत्यक्षं तु सम्भावितदोषमपौरुषेयेणागमेन बाध्यते, तेन वेदान्तवेद्यः शुद्धोहंप्रत्यये न भातीति विषयादिसिद्धिरिति - प्राहुः ॥

यत्तु शुद्धो न भातीति कोर्थः ? किमात्मस्वरूपे किञ्चिद्भाति किञ्चिन्न भातीति वा ? आत्मस्वरूपमेव न भातीति वा ? यद्वा अनात्मापि भातीति वा ? आद्ये अभासमानोंऽशः शरीरादिभ्यो भेदो वा ? कर्तृत्वभोक्तृत्वाद्यभावो वा ? ब्रह्मात्माभेदो वा ? द्वितीयमात्राभावो वा ? अभासमानांशः आत्मभिन्नः सत्यश्चेत् अपसिद्धान्तः । मिथ्याचेन्न तत्वावेदकशास्त्रवेद्यः । आत्ममात्रत्वे तु द्वितीयपक्षांतर्भावः । तथापि कल्पितेन भेदेनाऽगृहीत इव भातीति चेत्, न, तत्वतोगृह्यमाणे अधिष्टाने भेदकल्पनायाः अगृहीततत्वारोपस्य वा अयोगात् । अत एव न द्वितीयः, तस्य स्वप्रकाशत्वेनाऽभानायोगात् । स्वप्रकाशस्याऽप्यभाने अविद्यादेर्दुःखादेश्च प्रकाशो न स्यात्, तयोश्चैतन्याधीनप्रकाशत्वोपगमात् । न तृतीयः, अनात्मनोऽधिकस्य भानेऽपि आत्मनोऽसंदिग्धत्वेन शास्त्रविषयत्वतादवस्थ्यात्, अधिष्ठाने तत्वतः स्फुरति अनात्मारोपायोगाच्च ॥

तन्न, "शुद्धः" इत्यस्य अविद्यातत्प्रयुक्तान्यतरभिन्नचिद्रूपइत्यर्थकत्वेन तस्याऽहंप्रत्यये भानाभावेन त्वदुक्तविकल्पदूषणानां शुद्धशब्दार्थाबोधविलसितत्वात् ॥

अत्रायंविमर्शः—शुद्धशब्दस्य स्वोत्प्रेक्षितार्थकथनेन तात्पर्यचन्द्रि-

कोक्तविकल्पदूषणान्युद्धृतान्यभवन्निति भ्रांता मध्वचंद्रिकाखंडनकाराः स्वपक्षं सिद्धवक्तृत्याद्वैतमतलग्नानां वज्रकल्पायितानां तात्पर्यचन्द्रिकोक्तदूषणविकल्पानां परिहारमकृत्वैव तात्पर्यचन्द्रिकोक्तदूषणांतरविचारे प्रसक्ता भवंति । परं तु शुद्धशब्दस्य मध्वचंद्रिकाखंडनकारोक्तार्थोऽङ्गीकर्तुं न शक्यते अनुपपत्तिपराहतत्वात् । शुद्धशब्दस्यैतदर्थांगीकरणे बहवो दोषाः अवतरंति । ताश्च तात्पर्यचन्द्रिकाप्रकाशप्रसरे स्फुटा इति नेह निरूप्यंते इति ॥

भूमिकाविस्तरभयात् शुद्धाभानवादमधिकृत्य प्रवृत्त एक एव विचार इह दर्शितः—

अनंतरं ग्रंथकार अत्रैवाधिकरणे विवरणकारमतानुसारेण द्वैतमतरीत्या च पूर्वपक्षं सिद्धांतं च संग्रहेण निरूप्य मध्वमते स्वबुद्धिमात्रपरिकल्पितान् कतिपयदोषानुक्त्वा जिज्ञासासूत्रस्याद्वैतभाष्योक्तार्थं समर्थयितुं प्रवर्तते । अवशिष्टेषु दशस्वप्यधिकरणेषु बहवो विवादाध्यासिता विषया शास्त्रिभिर्निरूपिताः । मध्वचंद्रिकाखंडनकाराः स्वग्रंथे तत्रतत्र द्वैतमते सूत्रार्थानुपपत्तिमुखान् बहून् दोषान् स्वोत्प्रेक्षामात्रनिबंधनान् प्रदर्शयितुं प्रयतंते ॥

अस्य ग्रंथस्यांते अधः प्रदर्शितं वाक्यं दृश्यते ॥—

इति सर्वतन्त्रस्वतन्त्रभगवत्कलावतार श्रीमदश्वत्थनारायणशास्त्रिणां
पौत्रेण तिरुविशल्लूरग्रामाभिजनेन रामसुब्रह्मण्यशास्त्रिणा
विरचितमद्वैतमण्डनपूर्वकमध्वचन्द्रिकाखंडनं
संपूर्णम् ॥

---

इदमत्रबोध्यं—श्रीउत्तरादीमठाधीशैः मध्वचंद्रिकाखंडनस्य खंडनात्मा चन्द्रिकामंडनाख्यो ग्रंथः रचितः । तस्य अल्प एव भागः मुद्रितः । मध्व-

चन्द्रिकाखंडनाख्योऽयं ग्रंथः गौडगेरीवेंकटरमणाचार्यैः स्वकृततात्पर्यचन्द्रिका-प्रकाशप्रसराभिधे निबंधे सम्यक्खंडितः ॥

क्रमप्राप्तं तात्पर्यचंद्रिकाप्रकाशप्रसरचरितमिदानीं लिख्यते ॥ तथाहि॥

व्यासराजस्वामिकृतायां तात्पर्यचंद्रिकायां सम्यक्प्रदर्शितानामद्वैत-मतलग्नदोषाणामुद्धरणार्थं निर्मितस्य मध्वचंद्रिकाखंडनाभिदस्य ग्रंथस्य खंडनेन तात्पर्यचंद्रिकोक्तदूषणानि सुस्थानि कर्तुं प्रणीतस्य तात्पर्यचंद्रिकाप्रकाशप्रस-राभिधस्यास्य निबंधस्य रचयितारः पंडितप्रवराणां महीधरकुलावतंसानां वासु-देवाचार्याणामात्मजाः पंडितरत्नपदलांछनाः गौडगेरीवेंकटरमणाचार्याः । एते ग्रंथकाराः मध्वचंद्रिकाखंडनाख्यं ग्रंथंप्रबलतर्कोपबृंहिताभिरुक्तिभिः प्रत्यक्षरं खंडयंति । एतद्ग्रंथकरणे हेतुं प्रयोजनं चाभिदधति ग्रंथस्थवाक्यान्युद्धृत्याधो लिख्यते ॥

पदवाक्यप्रमाणज्ञैः सर्वतंत्रस्वतंत्रकैः । चंद्रिकाचार्यवर्याधिरूढंविद्या-भिदामिदं ॥ हर्यक्षासनमारूढैः सत्सिद्धांतकप्रवर्तकैः । विद्यावारिधितीर्था-ख्यहंसराजैः कृपालुभिः ॥ आज्ञप्तेनाल्पबोधेन ह्याकारोक्तसुवर्त्मना । मही-धरकुलोद्भूतवासुदेवार्यसूनुना ॥ रमणाख्यां वेंकटाद्यां दधानेन यथामति । निर्मितोऽयंप्रबंधोऽद्य[१९] ............... ॥

यद्यप्यर्वाचीनेनोत्तानदृशाद्यप्रकाशितस्य प्राचीनाध्यात्मविद्दर्शनाचार्यै-राकरेषु व्यक्तं निरस्तप्रायस्य प्रायेण चिरंतनाद्वैतवाद्युत्प्रेक्षितस्यास्य चंद्रिका-खंडनापदेशस्य दूषणाभासस्येदानींतनं खंडनं मृतमारणमेव । तथापि विक्षिप्त संग्रहादिना प्राचीनाचार्यवचनविवरणाद्यर्थोयमारंभ इति ॥

अयं च ग्रंथः भागत्रयात्मकः । अस्य प्रथमे भागे जिज्ञासाधिक-रणविषयविचारः क्रियते । द्वितीये जन्माद्यधिकरणमारभ्यानंदमयनयांतं

---

१९. अत्रग्रंथकारवाक्यस्यकिंचिद्विकारःकृतः

विचारो निरूप्यते । तृतीये प्रथमाध्यायाद्यपादावशिष्टानामधिकरणानां विचारः प्रवर्तत इति विवेकः ॥

एतन्निबंधकाराः ग्रंथारंभे स्वेष्टदेवतां गुरूंश्च संप्रणम्य स्वकृतग्रंथस्य प्रयोजनं च निरूप्य मध्वचंद्रिकाखंडनोक्तानि तात्पर्यचंद्रिकोपरि दूषणान्युपपत्तिसचिवैर्हेतुभिः परिहृत्याद्वैतमतसंश्लिष्टानि तात्पर्यचन्द्रिकोक्तदूषणानि सुस्थानि कृत्वा मध्वचंद्रिकाखंडनस्यात्यन्तनिर्दलत्वं सम्यक्स्फुटीकुर्वंति । तात्पर्यचंद्रिकासमर्थनकार्ये एते ग्रंथकाराः प्रायस्तात्पर्यचंद्रिकाप्रकाशमुपजीव्य प्रवर्तंते । अत एवास्यनिबंधस्य तात्पर्यचन्द्रिकाप्रकाशप्रसर इति नाम सार्थकमित्यवगम्यते । अस्मिन्ग्रंथे मध्वचन्द्रिकाखंडनकारक्रममनुरुध्यैतद्ग्रंथकाराः प्रथमतः शुद्धाभानवादविषयकविचार एव प्रवृत्ताः । अनंतरमन्ये विषयाः क्रमेणैतैर्विचारिताः । अस्यां भूमिकायां प्रथमविषयविचारः सिद्धांतश्च संग्रहेण निरूप्येते ॥

मध्वचन्द्रिकाखंडनकारोक्तशुद्धशब्दार्थांगीकारे व्याहतिः, इतरेतराश्रयः, सगुणब्रह्मणः शुद्धत्वापत्तिः, शुद्धलक्षणस्य जीवे अतिप्रसंगः, अपसिद्धांतश्च तात्पर्यचन्द्रिकाप्रकाशप्रसरेऽस्मिन् प्रस्तावे सम्यग्दर्शिताः सोपपत्तिकं प्रसाधिताश्च । अहंप्रत्ययस्य विशिष्टविषयकत्वेनांगीकृतत्वात् विशेष्याविषयकविशिष्टप्रत्ययस्याभावेन विशिष्टविषयकेऽहंप्रत्यये विशेष्यभूतस्य शुद्धस्य भानमवर्जनीयतया प्राप्तमिति तात्पर्यचंद्रिकाप्रकाशप्रसरे स्फुटं । अत्र विवरणसंमतिं च दर्शयितुं ग्रंथकाराः विवरणवाक्यमुपन्यस्य मध्वचन्द्रिकाखंडनकारोक्तशुद्धशब्दार्थखंडनं सोपपत्तिकं सुव्यक्तं सविस्तरं च कुर्वंति । अस्मिन् प्रस्तावे प्रवृत्तानि तात्पर्यचंद्रिकाप्रकाशप्रसरवाक्यान्युद्धृत्याधो लिख्यंते ॥

किं च ब्रह्मण्यवस्थिता माया साविद्या जीवसंस्थिता । मायाबिंबो वशीकृत्य तांस्यात्सर्वज्ञईश्वर इत्यादि भवद्भाष्यकारादिवचनेन सगुणब्रह्मणः मायाप्रयुक्तत्वेपि स्वाश्रयव्यामोहकावरणशक्तिमदविद्याप्रयुक्तत्वाभावाच्छुद्धत्वापातः ।

अविद्याशब्देनाज्ञानमात्रोक्तावपि किंचिदुपकाराभावे तदधीनताया एव मृषात्वादित्युक्तरीत्या अनादिभावरूपे जीवे अविद्याया उपादानतया निमित्ततया वोपकारकत्वाभावेन जीवस्याप्यविद्याप्रयुक्तत्वस्य दुर्वचत्वेनासंभवात्तत्रातिप्रसंगश्च। अविद्यानाशनाश्यत्वेनाविद्याप्रयुक्तत्वंत्वन्योन्याश्रयान्नांगीकर्तुमुचितं। कथंचिदप्यविद्योपकार्यत्वाभावेनाविद्याप्रयुक्तत्वाभावान्न तन्नाशनाश्यत्वमनादिभावस्येतिवादिनं प्रति अविद्यानाशनाश्यत्वेनाविद्याप्रयुक्तत्वसाधने अन्योन्याश्रयस्य दुर्वारत्वात्। किं च "राद्धांतस्त्वित्यत्र वेदांतवेद्यःशुद्धोऽहंप्रत्यये न भाती"ति त्वयैवोक्तम्। तत्राद्वितीय इत्यत्र न तत्पुरुषः परस्याभिमतः। किं तु बहुव्रीहिः। ततश्चाद्वितीयपदेनैव द्वितीयाभावविशिष्टो वा-तदुपलक्षितो वा-तदुपहितो वा शुद्धशब्दार्थः संपन्नः। तत्र च शुद्धो न भातीत्युक्ते विशेष्यभूतआत्मांशो भाति - परंतु विशेषणोपलक्षणोपाध्यन्यतमः द्वितीयाभावो न भातीत्यभिप्रायो वा - आत्मांशोपि न भातीत्यभिप्रायोवेति विकल्पस्य - अद्वितीयशब्देन द्वितीयसामान्याभावो विवक्षितो वा - कर्तृत्वादिरूपतद्विशेषाभावो वेत्यभिप्रायेणाभासमानोंशः कर्तृत्वाद्यभावो वेत्यादिविकल्पस्य च सूपपन्नत्वात्तत्रोक्तविकल्पास्तद्दूषणानि च वज्रकल्पान्येव। किं च अस्तुवा अन्यत्र यथाकथंचित्व्यवस्था। तथापि त्वयैवाविद्यातत्प्रयुक्तान्यतरत्वाभावतादृशान्यतरप्रतियोगिकभेदादिभावेन शुद्धशब्दार्थोभिहितः। तथाच शुद्धशब्दार्थस्यद्व्यंशताया अवर्जनीयतयाप्राप्तत्वेन शुद्धो न भातीत्युक्ते शुद्धशब्दार्थो किंचित्चैतन्यस्वरूपविशेष्यांशो भाति किंचित् विशेषणांशो न भातीति वा उत विशेष्यांशोपि न भातीत्यादिविकल्पास्तद्दूषणानिचामंदबोधविलसितान्येवेति। किंचाविद्याप्रयुक्तत्वस्य तदुपादेयत्वरूपत्वासंभवेन प्रयोजकतानिरूपकत्वरूपतया अज्ञानस्य निमित्तत्वेनापि प्रयोजकत्वोपपत्या सत्यत्वेप्युक्तप्रयुक्तत्वसंभवादनादिदृश्यवज्जगतः सत्यत्वेपि स्वसमानविषयकाज्ञानतत्प्रयुक्तत्वान्यतरसंबंधावच्छिन्नात्मसाक्षात्कारनिष्ठकारणताकनाशप्रतियोगित्वोपपत्या अनादिभावसंग्रहायोक्तपरि-

ष्कारेद्वितीयमिथ्यात्वालाभात् अद्वैतहानिश्च । ततश्चाविद्याविलासः सर्वज्ञकल्पानां पदवाक्यप्रमाणविदां ग्रंथकृतां वा-स्वपरमतमविजानतोऽर्वाचीनस्याशुद्धभाषिणो वेति भवानेव निराग्रहो विचारयत्विति । तस्मादुक्तदूषणं सुस्थमिति सिद्धम् ॥

तात्पर्यचंद्रिकाप्रकाशप्रसरस्य प्रथमे भागे जिज्ञासाधिकरणमधिकृत्या नेके विषयाः सम्यग्विचरिताः सिद्धांतिताश्च । अत्र तात्पर्यचन्द्रिकोपरि मध्वचन्द्रिकाखंडनोक्तदूषणान्यपाकृत्य तात्पर्यचन्द्रिकोक्ताद्वैतमतलग्नदोषाः सुस्थाः कृताः । अस्य भागस्यांतेऽधः प्रदर्शितानि वाक्यान्युपलभ्यंते ।

तस्मात्तात्पर्यचन्द्रिकातत्प्रकाशयोरेवार्वाचीनोद्गीर्णदूषणाभासानां सम्यङ्नि-रस्तत्वात्केषांचिन्निर्दलत्वेनानायासेन खंडनीयत्वाच्च चंद्रिकोक्तस्वार्थसाधना-न्यन्यार्थदूषणानि चानवद्यानि सुस्थानीति साधूक्तं ॥ —

"प्रतिसूत्रं प्रकाश्येते घटनाघटने मया । स्वीयान्यपक्षयोः सम्य-ग्विदांकुर्वंतु सूरय" इत्युक्तमिति सिद्धमित्यशेषमतिमंगलं ॥

इति श्रीमत्तात्पर्यचंद्रिकाखंडनाभासस्य चन्द्रिकाप्रकाशप्रसराभिधे गौड-गेरीवेंकटरमणाचार्येण विरचिते निबंधेऽस्मिन् जिज्ञासाधिकरणम् संपूर्णं ॥

पदवाक्यप्रमाणज्ञैः सर्वतंत्रस्वतंत्रकैः । चन्द्रिकाचार्यवर्याधिरूढंविद्या-भिधादिमं । हर्यक्षासनमारूढैः सत्सिद्धांतप्रवर्तकैः । नीलार्च्यमूलगोपालकृष्ण-पूजाधुरंधरैः । श्रीमध्वार्चितपट्टाभिरामार्चनपरायणैः । विद्यावारिधितीर्थाख्य-हंसराजैःकृपालुभिः । आज्ञप्तेनाल्पबोधेन ह्याकरोक्तसुवर्त्मना । महीधर-कुलोत्पन्नवासुदेवार्यसूनुना । निर्मितेऽस्मिन्निबंधेऽद्यसंपूर्णो ह्यादिमो नयः ॥ रौद्रिसंवत्सरे मासिह्याषाढेऽसितपक्षते । आद्याधिकरणं पूर्णं द्वितीयामंदवासरे॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

अस्य द्वितीयभागे जन्माधिकरणमारभ्याऽऽनंदमयाधिकरणांतं पञ्चाऽधिकरणान्यधिकृत्य बहवो विषया निरूपिताः । तत्र जन्माधिकरणे त्रयो-

दशविषयाः, शास्त्रयोनिनये एकादशविषयाः, समन्वयाधिकरणे अष्टौविषयाः, ईक्षतिनये त्रयोविषयाः, आनंदमयनये सप्तविंशतिविषयाः सम्यक्प्रतिपादिताः । अस्यभागस्यांत्यनये बहुः ब्रह्मविषयविचारः कृतः । द्वितीयभागस्याद्यांशः एतदधिकरणमधिकृत्य प्रवृत्तः । इदमत्र बोध्यं ॥ आद्यसूत्रे ब्रह्मशब्देन जीवादिव्यावर्तकगुणपूर्तिं लक्षणत्वेन सूचयित्वा द्वितीये तस्य गुणपूर्तिवाचितासिद्धये जीवपरतानिरासाय कारणतां जिज्ञास्यब्रह्मलक्षणत्वेनोक्त्वा तृतीये पूर्तिकारणतयोरतिव्याप्तिपरिहाराय तत्र शास्त्रम् प्रमाणीकृत्य चतुर्थे तयोर्विष्णवेकनिष्टत्वाय शास्त्रस्यान्यपरतां निषिध्य सर्वशास्त्रस्य सर्वशब्द प्रवृत्तिनिमित्तसर्वगुणपूर्तिसिद्धये वचनवृत्या सर्वशास्त्रतात्पर्यविषयतायां चोक्तायां संशब्दार्थस्य वाच्यत्वस्य कार्त्स्न्यस्य चेक्षत्यधिकरणे आक्षिप्य समाधानात् जिज्ञासाधिकरणमारभ्य ईक्षतिनयातं पञ्चानां नयानां बद्धक्रमत्वाज्जिज्ञासानयादिपञ्चाऽधिकरणान्येका प्रघट्टिका पञ्चाधिकरणीति द्वैतग्रंथेषु सुप्रसिद्धा । पररीत्याचतुस्सूत्री एका प्रघट्टिका इति ॥

अस्य भागस्यांते उपलब्धानि वाक्यान्युद्धृत्याधोलिख्यंते ॥

तथाच परोक्तार्थस्यायुक्तत्वात्पदवाक्यप्रमाणविदामग्रेसरैरस्मद्भाष्यकारैः सप्रमाणकमुपवर्णित एव सूत्रार्थो हृद्योऽनवद्यश्चेति सर्वमनोरममिति ।

इति तात्पर्यचन्द्रिकाप्रकाशप्रसराभिधे चन्द्रिकाखंडनाभासस्य खंडनरूपे निबंधे आनंदमयाधिकरणम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

अस्यतृतीये भागे आद्यपादेऽवशिष्टानामधिकरणानां विचाराः सिद्धांताश्च निरूप्यंते । तत्रांऽतःस्थत्वाधिकरणे षोडशविषयाः, आकाशाधिकरणे पञ्चविषयाः, प्राणाधिकरणे षड्विषयाः, ज्योतिर्नये त्रयोविषयाः, पादांत्यप्राणाधिकरणे चत्वारोविषयाः प्रतिपादिताः । अस्य भागस्यांते

मध्वचंद्रिकाखंडनोक्तोऽनुपपत्तिसंचयः परिहृतः प्रबलतर्कोपबृंहिताभिरुक्तिभि-र्मध्वसिद्धांतः समर्थितश्च ॥

तात्पर्यचंद्रिकाप्रकाशप्रसरस्यांते उपलब्धानि वाक्यान्युद्धृत्याधोलिख्यंते—

इत्थं च तत्वतो दुरुद्धरेषु श्रीमत्तात्पर्यचंद्रिकोक्ताद्वैतमतसंश्लिष्टेषु बहुषु दोषेषु भ्रांत्या कतिपयदोषाणामुद्दिधीर्षया चंद्रिकाखंडनार्थं प्रवृत्तैः खंडनकारैः प्रागेव नूतनाद्वैतवाद्युत्प्रेक्षितदूषणाभासस्य स्वप्रकाशितस्य तत्ववादिभिः प्राचीनाचार्यैरेव सम्यङ्निरस्ततया स्वमुंडनमेव संपादितमिति चंद्रिकाखंडनेन तेषां तम परायणमिति सिद्धमित्यशेषमतिमंगलं ॥

इति श्रीमद्विद्वत्कुलतिलकमहीश्वरकुलोत्पन्नवासुदेवाचार्यात्मजेनगौडगिरी वेंकटरमणाचार्येण श्रीमदित्याद्यनेकबिरुदांकित श्रीमच्चंद्रिकाचार्यसंस्थानाधिपति श्रीमद्विद्यावरिधितीर्थपूज्यपादाज्ञानुवर्तिना संपादितचन्द्रिकाप्रकाशप्रसराभिधो निबंधः समाप्तः ॥

॥ श्रीकृष्णार्पणमस्तु ॥

---

क्रमप्राप्तमद्वैतदीपिकाचरितमिदानीं लिख्यते ॥

तात्पर्यचंद्रिकोक्तशांकरीयमतलग्नेषु दुष्परिहरेषु बहुषु दोषेषु भ्रांत्या कतिपयदोषाणामुद्दिधीर्षया तात्पर्यचंद्रिकाखंडनार्थं प्रवृत्तेषु मध्वचंद्रिकाखंडनकारेषु पक्षपातेन कल्कत्ताविश्वविद्यालयाध्यापका वेदांतविशारद बिरुदांकिता अनंतकृष्णशास्त्रिणः क्षोदाक्षमस्य मध्वचंद्रिकाखंडनरूपग्रन्थस्य समर्थनेन पुनस्तात्पर्यचंद्रिकाखंडनार्थं प्रवृत्तास्तदर्थं चंद्रिकामंडनं तत्पर्यचंद्रिकाप्रकाशप्रसरं च दूषयितुं प्रयतमाना अद्वैतदीपिकाभिधं प्रबंधमरचयन् । अस्य ग्रन्थस्य प्रथमे भागे जिज्ञासाधिकरणविषयाणां विचारः क्रियते । अत्रास्याद्यभागस्यैव चरितंलिख्यते । देवतानत्यनंतरं तात्पर्यचंद्रिकासमर्थनक्षमं तात्पर्यचंद्रिकाप्रकाशप्रसराभिधं ग्रन्थं चंद्रिकामंडनाख्यं ग्रन्थं च दूषयितुं ग्रन्थकाराः

स्वकृतौ पीठमारचयंति । अत्राद्वैतदीपिकायामुपलब्धानि वाक्यान्यधः लिख्यंते ॥

"श्रीमद्व्यासरायविरचितां मध्वचंद्रिकां श्रीमहामहोपाध्यायादिश्रीराम-सुब्बशास्त्रिचरणकृतं खंडनं तन्निरासद्वारेण चंद्रिकासमर्थनपरं श्रीगौडगिरी वेंकटरमणाचार्यसंपादितं चंद्रिकाप्रकाशप्रसरं श्रीमदुत्तरादिमठाधीशमध्वस्वामि-पादकृतिंचंद्रिकामंडनं च साक्षात्कृत्यात्यन्तमेवानंदिता वयमत्र किञ्चिद्विमृ-शामः" ॥ इति ॥

ततः शुद्धाभानवादमधिकृत्य प्रवृत्तो विचारः किंचिदत्र प्रपञ्चयते ॥

अद्वैतदीपिकाकारा अस्मिन् प्रस्तावे तात्पर्यचंद्रिकाप्रकाशप्रसरकृदुपरि

१. अनवसरप्राप्तस्य तात्पर्यचंद्रिकासमर्थनाक्षमस्य मध्वचन्द्रिका-खंडनोपरि दूषणजालस्य ग्रथनम् ॥

२. भामत्यनुक्तस्य विशिष्टविषयं ज्ञानं शुद्धविषयमपि भवतीति वादस्य वाचस्पतिसंमतिकथनम्

३. प्रकृतार्थसाधनाक्षमस्य विवरणवाक्यस्यात्रोपन्यसनम् ॥

४. भामतीकारासंमतस्य शुद्धविषयज्ञानस्योररीकरणम् ॥

इति चतुरो दोषानारोपयंति ॥

अस्मिन् प्रस्तावे तात्पर्यचंद्रिकामंडनोपरि ग्रन्थकाराः मध्वचंद्रिका-खंडनाशयानवबोधविलसितरूपं दोषमुद्घाटयंति ॥

शुद्धाभानवादविषये तात्पर्यचंद्रिकाकृदुक्तानि विकल्पदूषणानि सर्वा-ण्यनुक्तोपालंभनानीति तानपि दूषयितुमद्वैतदीपिकाकाराः प्रयतंते ॥

अत्राद्वैतदीपिकाकारैस्तात्पर्यचंद्रिकाप्रकाशप्रसराद्युपर्यारोपितानि दूष-णान्यभिदधति ग्रंथस्थान्येव वाक्यान्युद्धृत्याधः लिख्यंते ॥

नैतच्चंद्रिकासमर्थनार्थं ।........। न हीदमिदानीं चंद्रिकाखंडन-निरासार्थमेव प्रवृत्तानामवसरप्राप्तं । न हि भामतीकाराः कुत्रापि विशिष्ट-

विषयं ज्ञानं शुद्धचिन्निष्टमपि भवतीति निरूपयंति । ........ ॥ एव च ................विशिष्टनिष्टं ज्ञानं शुद्धचिन्निष्टमपि भवतीति विवरणवाक्यस्य चात्रोपन्यासो न भामतीदूषणसमर्थोभवेदित्युक्तविवरणसिद्धांतानुसारेण भामतीसिद्धांतनिरास आपातरमणीय एव ॥

न हि विवरणकारा इव भामतीकाराः शुद्धब्रह्मविषयं ज्ञानमूरीकुर्वंति । अखंडाकारसाक्षात्कारोऽपि वृत्त्युपहितविषय एवाज्ञाननिवर्तक इति खलु भामतीकाराणां मतम् ॥

यत्तु चंद्रिकामंडने—देहादिभिन्नचिद्रूप ........ इति वर्णितम् । तदिदं चंद्रिकाखंडनाशयानवबोधविलसितम् ॥

न हि भामत्यां पूर्वपक्षे सिद्धांते वा कुत्रापि शुद्धपदघटितं वाक्यमेकमपि समस्ति । तथा च शुद्ध इति कोर्थ इत्यादि विकल्पदूषणानि सर्वाण्यनुक्तोपालंभनानान्येवेति सिद्धं" ॥ इति

इदमत्र बोध्यम् ॥ अत्र दीपिकाकारानूदित "शुद्ध इति कोर्थ" इति वाक्यात् शुद्धशब्दार्थः कः इति प्रतीतिः स्यात् । सामाभूदिति "शुद्ध" इत्यनंतरं "न भाति" इति वक्तव्यम् । तात्पर्यचन्द्रिकायाः प्रचीनलिखितपुस्तुके ष्वधुनातनमुद्रितपुस्तुकेषु च "शुद्धो न भातीति कोर्थः" इति पाठस्यैव स्पष्टं दृष्टत्वात् । मध्वचंद्रिकाखंडनकारोक्तशुद्धशब्दार्थखंडनावसरे तात्पर्यचंद्रिकाप्रकाशप्रसरोक्तान्योन्याश्रयादिदोषानपाकर्तुमद्वैतदीपिकाकारा महताऽऽडंबरेण प्रयतंते । भूमिकाविस्तरभयादद्वैतदीपिकाकाराणामाशयाभिधायीनिवाक्यान्युद्धृत्यात्र न प्रदर्शितानि ॥

जिज्ञासाधिकरणे अद्वैतदीपिकायां बहवो विषया विचारिता अद्वैतरीत्या निर्णीताश्च । एतद्ग्रंथस्य प्रथमे भागे सर्वार्थसंग्रहेणोपसंहारः कृतः । अस्याः कृतेराद्यभागांते उपलब्धं वाक्यद्वयमधः लिख्यते ॥—

चंद्रिकाकृतां तदनुसारिणां प्रकाशप्रसरकारादीनां च जिज्ञासासूत्र-

मधिकृत्याद्वैतमते कृतानि सर्वाण्यपि दूषणानि निरालम्बनान्येवेति सिद्ध-मिति शम् ॥

इति मद्रपुरसंस्कृतकलाशालाऽन्तेवासिनः संप्रति कल्कत्ताविश्व-
विद्यालयाध्यापकस्य वेदान्तविशारदबिरुदाङ्कितस्य श्रीयुक्ता-
नन्तकृष्णशास्त्रिणः कृतिषु अद्वैतदीपिकायां
जिज्ञासाधिकरणं समाप्तम् ॥

अत्रेदं बोध्यम् । अयं ग्रंथः गौडगेरीवेंकटरमणाचार्यैः स्वकृताद्वैत-दीपिकावातागमाख्ये निबंधे सम्यक् खंडितः ॥

---

इदानीमवसरप्राप्तमद्वैतदीपिकावातागमाख्यनिबंधस्य चरितं लिख्यते। तथाहि ॥ अनवद्यविद्याप्रद्योतितात्मनां महात्मनां चंद्रिकाचार्याणामुक्तिं दूषयितुं प्रयतमानानां प्रमाणविरुद्धां व्यवस्थामुररीकृतवतां स्वोक्तित्रिसरण-शीलानां स्वदृष्टिपक्षपातिनामर्वाचीनानामद्वैतवादिनामुक्तीः परिभाव्य तात्पर्य-चंद्रिकाप्रकाशप्रसरकाराः प्रागेव नूतनाद्वैतवाद्युत्प्रेक्षितदूषणाभासेषु तत्ववा-दिभिः प्राचीनाचार्यैरेव सम्यङ्निरस्तेषु तात्पर्यचन्द्रिकोक्ताद्वैतमतसंश्लिष्टदूष-णेषु वज्रकल्पायितेष्वपि अद्वैतदीपिकाकारबुद्धिमात्रपरिकल्पितदूषणाभासा-नामत्यंतनिर्दलत्वेनातिहेयताप्रदर्शनेन तात्पर्यचन्द्रिकाप्रकाशप्रसरोक्तिं चन्द्रि-कामंडनोक्तिंच रक्षित्वा तात्पर्यचन्द्रिकोक्तिं समर्थयितुं प्रबलतर्कोपबृंहितोक्ति-युक्तमद्वैतदीपिकावातागमाख्यमन्वर्थकं प्रबंधमिमं प्राचीनाध्यात्मविद्दर्शना-चार्याणां सरस्वतीमुपजीव्य प्राणनयन् ॥

सत्संप्रदायमनुरुध्य ग्रंथादौ स्वेष्टदेवतां गुरूंश्च संप्रणम्य ग्रंथकारा एतद्ग्रंथनिर्माणे प्रयोजनं स्वयमेव स्फुटं निरूपयंति । ग्रंथकृत्प्रवृत्तेः प्रयोजन-मभिदधति ग्रंथस्थानिवाक्यान्युद्धृत्याधः लिख्यंते ॥

"यद्यप्यत्र खंडनकारवचनानामतिस्पष्टार्थानां दीपिकाकारीयविवरणा-

नपेक्षत्वात् - तद्बुद्धिमात्रपरिकल्पितार्थाभासपरत्वविवक्षाज्ञापकाभावाच्च खंडनग्रंथोपरि ग्रंथकृदुक्तदूषणानामनुद्धार्यतया तानि वज्रकल्पान्येव । दीपिकाकारकुबुद्धिकल्पितस्वतंत्रदूषणाभासानां त्वत्यंतनिर्दलत्वेन क्षोदाक्षमत्वात् तद्दूषणप्रयासोपि मृतमारणवद्विफल एव । तथापि मंदजनमनोव्यामोहहेतुत्वादद्वैतदीपिकाकारोत्प्रेक्षितदूषणाभासानामसारताव्युत्पादनेनातिहेयता - वश्यप्रदर्शनीयेति पुनरपि मृतमारणायायमारंभः" ॥ इति ॥

स्वनिबंधस्य प्रयोजनमुक्त्वा ग्रंथकारा अद्वैतदीपिकाकारैः शुद्धाभानवादप्रस्तावे तात्पर्यचन्द्रिकाप्रकाशप्रसराद्युपर्युक्तान् दोषान् सम्यगपाकुर्वंति । अपाकरणप्रकारोत्र किंचित्प्रदर्शयिष्यते ॥ तथा हि ॥

तात्पर्यचन्द्रिकाप्रकाशप्रसरोपरि यदुक्तं दीपिकाकारैः "नैतच्चंद्रिकासमर्थनार्थं । न हीदमिदानीं चन्द्रिकाखंडनार्थमेव प्रवृत्तानामवसरप्राप्तमि"ति तत्र वातागमकाराणामयमुत्तरक्रमः ॥

मध्वचन्द्रिकाखंडनकाराः चन्द्रिकोक्तविकल्पदूषणानि शुद्धशब्दार्थानवबोधमूलानीति मत्वा चंद्रिकादूषणार्थं "शुद्ध" इत्यस्य अविद्यातत्प्रयुक्तान्यतरभिन्नचिद्रूपोर्थ इति स्वग्रंथे उक्त्वा शुद्धशब्दस्यैतदर्थकथनेन चंद्रिकोक्तदूषणान्युद्धृतानीति भ्रांता अभवन् । मध्वचंद्रिकाखंडनोक्त शुद्धशब्दार्थांगीकारे इतरेतराश्रयादिदोषास्तात्पर्यचंद्रिकाप्रकाशप्रसरे प्रदर्शिता उपपत्तिसचिवैर्हेतुभिस्समर्थिताश्च । तथा च मध्वचंद्रिकाखंडनस्यास्मिन् प्रस्तावे प्रशिथिलमूलत्वं तात्पर्यचंद्रिकाप्रकाशप्रसरे प्रदर्शितं । चंद्रिकाखंडनार्थं प्रवृत्तानां खंडनकाराणामुक्तिषु खंडितासु चंद्रिकासमर्थनमवर्जनीयतया कृतमेव । सति चैवं चंद्रिकाखंडननिरासक्षमासु तात्पर्यचंद्रिकाप्रकाशप्रसरोक्तिषु प्रकृतानुपयुक्तत्वं चन्द्रिकासमर्थनाक्षमतांचाद्वैतदीपिकाकाराः कथं वाऽज्जानान्निति त एव विचारयंतु ॥

यदुक्तं दीपिकाकारैः "न हि भामतीकाराः कुत्रापि विशिष्टविषयं

ज्ञानं शुद्धविषयमपि भवतीति निरूपयंती''त्यादि तत्र वातागमकाराणामयं समाधानक्रमः ॥

वाचस्पतिमिश्रैरहंकारस्य चिदचिद्ग्रंथिरूपत्वांगीकारेण तन्मतेऽहंप्रत्ययस्य अधिष्टानतया शुद्धचिद्विषयताऽवर्जनीयतया प्राप्तैव । किं च भामत्यामनेकत्र चिदात्मनः शुद्धस्याहंप्रत्ययालंबनत्वं व्यक्तमेवोक्तं । शुद्धस्याहंप्रत्ययालंबनत्वमभिदधत् '' तस्माच्चिदात्मैव कार्यकारणसंघातेन ग्रथितं स्वयं प्रकाशोपि बुध्यादिविषयविच्छुरणात्कथंचिदस्मत्प्रत्ययविषयोहंकारास्पदं जीव इति क्षेत्रज्ञ इति चाख्यायते । न खलु जीवश्चिदात्मनो भिद्यते ।'' इत्यादि भामतीवाक्यजातमेव दृश्यते । स्पष्टज्ञापकसद्भावेपि अस्मिन् प्रस्तावे दीपिकाकारकृताक्षेपः भामत्याशयानवबोधनिबंधन एवेति स्फुटमवगम्यते ॥

''विवरणवाक्यस्य चात्रोपन्यासो न भामतीदूषणसमर्थ'' इति यदुक्तं दीपिकाकारैस्तत्र वातागमकाराणां प्रतिवचनमेवं संगृह्यते ॥

यद्यपि भामतीकाराणां विवरणकाराणां च मतयोः क्वचिद्भेदोऽस्ति तथापि क्वचित्तयोर्मिथस्संमतिरप्यस्ति । प्रकृते विशिष्टे शुद्धस्यानुगमविषयेऽपि संमतिसंभवेन तत्र विवरणवाक्यानामुपन्यासः प्रकृतोपयुक्तः भवत्येव इति ॥

अद्वैतदीपिकाकाराणां ''न हि भामतीकाराः शुद्धब्रह्मविषयं ज्ञानमूरीकुर्वंति । अखंडसाक्षात्कारोपि वृत्त्युपहितविषय एवाज्ञाननिवर्तकः'' इत्युक्त्याः वातागमेऽयं दूषणक्रमः ॥

वाचस्पतिमिश्रैर्भामत्यां '' क्रियासमभिहारेणेदृगात्मतत्वमभिदधति तत्पराणि संती'' त्याद्युक्त्या शुद्धात्मनो वेदांतवेद्यत्वमूरीकृतमेवेति स्फुटमवगम्यते । न हि मुख्यया अमुख्यया वा वृत्त्या शुद्धात्मतः शास्त्रजन्यज्ञानविषयत्वाभावे शास्त्रस्यात्मतत्वपरत्वं संभवदुक्तिकं । उपहितस्य शास्त्रतात्पर्यविषयत्वे तस्य मिथ्यात्वात् शास्त्रस्यातत्वावेदकत्वापत्तिः । न ह्येतदापादनमद्वैतवादिनामपि संमतं । किं च शुद्धस्य स्वेन रूपेण प्रमाणाविषयत्वे

उपहितरूपेणैव प्रमाणविषयत्वे च तस्य दृश्यत्वं मिथ्यात्वं च स्यात् । अनिष्टं चेदमद्वैतवादिनाम् ॥ ततश्च शुद्धस्य ज्ञानविषयतांगीकारे बाधकाभावात् साधकसद्भावाच्च उपहितस्य शास्त्रतात्पर्यविषयत्वांगीकारे साधकाभावात् प्रत्युत बाधकसद्भावाच्चाद्वैतदीपिकाकारैरस्मिन् प्रस्तावे "न हि भामतीकाराः" इत्यादि यदुक्तं तदज्ञजनमनोव्यामोहकमेवेति ॥

चंद्रिकामंडनोपरि दीपिकाकृदुक्तदूषणं वातागमोक्ततत्परिहारं चाभिदधति वाक्यानि वातागमादुद्धृत्याधः लिख्यंते ॥

यत्तु चंद्रिकामंडने देहादिभेदः सत्यो वा असत्यो वेत्यादि विकल्पदूषणानां अविद्यातत्प्रयुक्तान्यतरभिन्नचिद्रूपः शुद्ध इति परिष्कारेपि संभव इति वर्णितम् । तदिदं खंडनकाराशयाज्ञानमूलं ॥ न हि देहादिभिन्नचिद्रूपो देहादितादात्म्यानापन्नः । न हि शशशृंगादीनामिव देहादीनां ब्रह्मणि न तादात्म्यं । तादात्म्यानापन्नत्वमेव भेदशब्दार्थः । देहादीनामिव तद्भेदादेरप्यविद्याप्रयुक्तत्वेन ब्रह्मणि तादात्म्येनाविद्याप्रयुक्तभिन्नत्वाभावात् न देहादिभिन्नचिद्रूपोऽत्र तत्तादात्म्यानापन्नपदेन गृहीतुंशक्यत इत्यादि । तदसारं ॥ अविद्यातत्प्रयुक्तान्यतरभिन्नचिद्रूप इति खंडनवाक्ये सुव्यक्तमेव भिन्नपदप्रयोगेण देहादेरप्यविद्याप्रयुक्ततया देहादिभेदस्याप्युक्तोपलक्षणादिविधया शुद्धशब्दार्थघटकत्वात् । किंचिन्नभातीत्यत्र किंचित्पदेन विवक्षितोपलक्षणादिभूतदेहादिभेदः सत्योवेत्यादि विकल्पदूषणानामत्यंतश्लिष्टत्वात् । भिन्न इत्यस्याविद्यातत्प्रयुक्तान्यतरतादात्म्यानापन्न इति त्वदीयखंडनाशयवर्णनं त्वयुक्ततममेव । त्वयैव न हि शशशृंगादीनामिवाद्वैतमते देहादीनां ब्रह्मणि न तादात्म्यमित्यादिना ब्रह्मणि देहतादात्म्यस्यैव भाषितत्वेन त्वदुक्ततादात्म्यानापन्नत्वस्य त्वदभिमतशुद्धचिति दुर्घटत्वात् । तादात्म्यानापन्न - भिन्नशब्दयोरेकार्थत्वं वदता तत्तादात्म्यानापन्ने तद्भिन्नत्वस्याकामेनाप्यवश्यमंगीकार्यत्वाच्च । गुणादिकं गुण्यादिना भिन्नाभिन्नमित्यत्राद्वैतचंद्रिकायां नात्र भेदाभेदो-

भयं साध्यं किंतु भेदसमानाधिकरणाभेद एवेत्युक्तत्वेन तादात्म्यघटकभेदेपि भेदशब्दव्यवहारेण भेदशब्दस्यतादात्म्यघटकभेदातिरिक्त भेदपरत्वमित्युक्तिरपि रिक्तैव ॥

त्वयापि भेदसहिष्णुरभेदस्तादात्म्यमित्युक्ततया स्वव्याघातश्च । तथा च मंडनोक्तस्य सूपपन्नत्वात्तत्र दीपिकाकारीय दूषणाभासजल्पनमज्ञानादिमूलमश्रद्धेयमेवेति स्थितम् ॥

अद्वैतदीपिकाकाराणां "न हि भामत्यां पूर्वपक्षे सिद्धांते वा कुत्रापि शुद्धपदघटितं वाक्यमेकमपि समस्ति ।........। तथा च शुद्ध इति कोर्थ इत्यादिविकल्पतद्दूषणानि सर्वाण्यनुक्तोपालंभनान्येवेति सिद्धमि"त्याक्षेपः भामतीदर्शिनामुद्वेगं जुगुप्सां विस्मयं वाऽऽवहति । भामत्यामस्मिन्प्रस्तावे शुद्धपदघटितानां वाक्यानामद्याप्यविलीनत्वात्तान्यद्वैतदीपिकाकाराः स्वटिप्पणादिभिरुपस्कृते मुंबय्यां तुकारामजावजीश्रेष्ठिभिः स्वायसाक्षरैरंकयित्वा प्राकाश्यं नीते भामतीकल्पतरु परिमलसहिते ब्रह्मसूत्रशांकरभाष्ये इदानीं वापि सम्यक् पश्यंतु । "भवेदेवं यद्यहमित्यनुभवे आत्मतत्वं प्रकाशेत । नत्वेतदस्ति" इत्यादि भामतीग्रंथसंदर्भेण अहंप्रत्यये शुद्धात्मा न भातीत्यर्थस्य स्फुटप्रतिभासात् किमर्थं वाऽद्वैतदीपिकाकाराश्चंद्रिकाकृदुपरि निर्मूलमनुक्तोपालंभनदोषमारोपयन्निति त एवाऽऽलोचयंतु । किं च चंद्रिकाकारा अस्मिन्प्रस्तावे भामत्युक्ताधिकरणशरीरानुवादादव्यवहितपूर्वमेव "परोक्ते दूष्य एवांशः मितैःशब्दैरनूद्यते ।" इति प्रतिज्ञां कुर्वंति ॥ तदनुसारेण भामतीनिष्कृष्टसिद्धांतस्यस्वकीयमितशब्दैश्चन्द्रिकायामनुवादस्सूपपन्न एव । चन्द्रिकाकारा भामत्यर्थानुवादं कुर्वंति न तु शब्दानुवादं येन भामत्यां शुद्धेत्यानुपूर्वीविशिष्टशब्दाभावो दोषावहो भवेत् । सति चैवं निरवद्यविद्याप्रद्योतितात्मनां चन्द्रिकाचार्याणामुपरि दीपिकाकारैरारोपितोऽनुक्तोपालंभनदोषः दीपिकाकाराणामेव भामत्यांध्यं स्फुटं प्रकाशयति । अपि च मध्वचन्द्रिकाखंडन-

कारकृतभामत्यभिप्रेतजिज्ञासाधिकरणराद्धांतसंग्रहे "शुद्धो न भाती"तिवाक्यं प्रथमपृष्ट एवोपांत्यपङ्क्तावद्यापि दृश्यते । एतदप्यदृष्ट्वास्मिन् प्रस्तावे चन्द्रिकाकारकृतां प्रतिज्ञांचाज्ञात्वा मध्वचंद्रिकाखंडनोज्जीवनार्थं तात्पर्य चन्द्रिकादूषणार्थं च प्रवृत्ता अद्वैतदीपिकाकाराः स्वसमीहितसिद्धिं कथं वा लभेरन्निति सुधियो विदांकुर्वंतु । एतादृशा निरालंबना आक्षेपा उत्तरं नार्हं-त्येव । तथा चैतादृशाक्षेपकारिणः प्रेक्षावद्भिरुपेक्ष्या एव न तु परिहाराय वादीकर्तव्याः । सदलमेवाक्षेपवचनं निराकर्तव्यं न तु निर्दलं । अत एव वाता-गमकारैः साधूक्तं " इतःपरं दीपिकाकृता सुखमस्तीति वक्तव्यमिति न्याय-मनुरुध्य पुनरप्येतेन खंडनमाचरितमिति मंदजनेषु स्वमहित्वचिख्यापयिषया खंडनाभासलेखनेपि न तत् प्रतिवचनार्हं" इति ॥

वातागमकाराः शुद्धस्यज्ञानविषयतां प्रसाध्य अद्वैतदीपिकायां जिज्ञा-साधिकरणोक्तानि दूषणानि परिहृत्य तात्पर्यचन्द्रिकोक्तान्यद्वैतमतसंश्लिष्टानि दूषणानि सुस्थानि कुर्वंति ॥

वातागमे प्रतिपादितेष्वनेकेषु विषयेषु कतिपयविषया एवाधः प्रदर्शयिष्यंते ॥

१. शुद्धस्याहंप्रत्यये भानं. २. शुद्धस्य ज्ञानविषयता.

३. सुखादावज्ञानप्रसंगः ४. अध्यासभंगः.

५. परोक्तसंगतिनिरासः. ६. तत्ववादिमते जिज्ञासाधिकरणशरीरोपपत्तिः.

७. परोक्तजिज्ञासासूत्रार्थखंडनं. ८. स्वमते सूत्रार्थसमर्थनम्.

९. सिद्धांते परोक्तानुपपत्तिनिरासः. इति.

अस्य ग्रंथस्यांते उपलब्धानि वाक्यान्युद्धृत्याधः लिख्यंते ॥

तस्मात्तात्पर्यचन्द्रिकोक्तानि अद्वैतमतसंश्लिष्टानि सर्वाण्यपि दूषणानि वज्रलेपायितान्यर्वाचीनैरल्पज्ञैर्दुराग्रहग्रस्तैर्मंदेन माणवकेन मंदर इव नोद्धर्तुं

शक्यानीति सुस्थान्येवेति सिद्धम् ॥

प्रतिसूत्रं प्रकाश्येते घटनाघटने मया । स्वीयान्यपक्षयोस्सम्यग्विदांकुर्वंतु सूरयः॥

इति साधूक्तं पदवाक्यप्रमाणविदामग्रेसरैस्सर्वतंत्रस्वतंत्रैर्हृद्यानवद्यवादिभिर्ग्रंथ-कारैरित्यशेषमति मंगलं ॥

आनंदतीर्थवरदे दानवारण्यपावके ।
ज्ञानदायिनि सर्वेशे श्रीनिवासेऽस्तु मे मनः ॥
वेदव्यास गुणावास विद्याधीश सतां वश ।
मां निराशं गतक्लेशं कुर्वनाशं हरेऽनिशम् ॥ श्रीः ॥

इति श्रीमद्विदितप्रभावानां पंडितप्रवराणां गौडगिरी महीधरकुलावतंस वासुदेवाचार्याणामात्मजेनाल्पज्ञेन पूर्वाचार्यनिबंधोपजीविना वेंकटरमणाचार्येण संपादितोयमद्वैतदीपिकावातागमनामा निबंधः समाप्तः ॥

॥ श्री मध्वांतर्गतः श्रीकृष्णः प्रियताम् ॥

---

मूमिकोपसंहारे इदं निवेद्यते ॥

यद्यप्यतिगंभीरां तात्पर्यचंद्रिकामधिकृत्य किमपि लिखितुं सर्वशास्त्रार्थकोविदाः राघवेंद्रस्वामिनस्तत्सदृशावाऽधिकारिणस्तथा पंडितरत्नकृताद्वैतदीपिकावातागमविषये किमपि लिखितुं बहुप्रज्ञाः शक्ताः । तथापि श्रीप्राणपतिनेरितः गुरुभक्तिनियंत्रितश्च तत्कृपाबलादेव तात्पर्यचन्द्रिकाविषये अद्वैतदीपिकावातागमविषये चाल्पज्ञोहं यदवोचं तेन गुणगृह्या अंतर्वाणिप्रकांडाः प्रीणंतु ॥ इति.

मैसूरु, २४-१२-२६. डि. श्रीनिवासाचार्यः.

टिप्पनी—अयं ग्रंथः षट्चत्वारिंशदधिकाष्टशतोत्तरैकसहस्रतमे (१८४६) शकाब्दे मुद्रितः । तदानीमन्यकार्यातिपातेन भूमिका न रचिता । अधुना भूमिकादिभिस्सहायं निबंधः प्रकाश्यते ॥ डि. श्री.



---

## ॥ तात्पर्यचन्द्रिकासंबन्धिग्रन्थाः ॥

### तात्पर्यचन्द्रिकाव्याख्याः

१. बृहद्गुरुराजीयम्

२. (लघु) गुरुराजीयम्

३. शारदेंदुः

४. तात्पर्यचन्द्रिकाप्रकाशः

| तात्पर्यचन्द्रिकाखण्डनपराग्रन्थाः | तात्पर्यचन्द्रिकासमर्थनक्षमाग्रन्थाः |
|---|---|
| १. तत्वमार्ताण्डः. | १. शारदागमः. |
| २. शङ्करपादभूषणम्. | २. द्वैतभूषणम्.<br>३. कट्टेनरसिंहाचार्यकृतोग्रन्थः. |
| ३. मध्वचन्द्रिकाखण्डनम् | ४. तात्पर्यचन्द्रिकामण्डनम्.<br>५. तात्पर्यचन्द्रिकाप्रकाशप्रसरः. |
| ४. अद्वैतदीपिका. | ६. अद्वैतदीपिकावातागमः. |

---

# ॥ विषयसूची ॥



---



॥ श्रीमद्व्यासराज गुरुराजोविजयते ॥

# ❀ अद्वैतदीपिका वातागमः ❀

श्रीनिवासायनमः

॥ ॐ ॥ वंदे वंदारु मंदारमिंदिरा मंदिरोरसं ।
बंधुरानंदसंदोह सांद्र सुंदरविग्रहं ॥

मायातंत्रामरारिस्मयमपनयतो मध्वसिद्धांतनाम्नो
नेत्राणीव त्रयोपि त्रिजगति नृहरेरिंधतेयत्प्रबंधाः ।
यद्वागद्वैतविद्याचलकुलकुलिशप्रौढिमाढोकतेसः
श्रेयोभूयोविदध्यात्सुमहितमहिमा संप्रति व्यासराजः ॥

अद्वैतदीपिकायेयं तस्यावातागमाभिधः ।
निबंधःक्रियते प्राचामुपजीव्यसरस्वतीं ॥

वदतिवदनसत्वाद्दूषणं मोहयन्स्वान्
य इहकिलविदोषे दोषदृष्टयाल्पबुद्धिः ।
तिमिरभिदिनितांतं कल्पयन् तिग्मभानौ
निबिडतमउलूकस्तत्तुलां संबिभर्ति ॥

अत्राद्वैतदीपिकाकारैः स्वस्य भाषापाटवादिख्यापनाय स्वग्रंथे महताऽडंबरेण शब्दकोलाहलः कृतः । वयंत्वतदर्थिनः सदसद्विषय विवेचनमात्रमभिं

ल्षंतः परप्रदर्शिता सत्साधनबाधनजातस्याभासतामात्रं व्युत्पादयिष्यामः । यद्यप्यत्र खंडनकारवचनानामतिस्पष्टार्थानां दीपिकाकारीय विवरणानपेक्षत्वात् - तद्बुद्धिमात्रपरिकल्पितार्थाभासपरत्वविवक्षा ज्ञापकाभावाच्च खंडनग्रंथोपरि ग्रंथकृदुक्त दूषणानामनुद्धार्यतया तानि वज्रकल्पान्येव । दीपिकाकार कुबुद्धिकल्पितस्वतंत्र दूषणाभासानां त्वत्यंतनिर्दलत्वेनक्षोदाक्षमत्वात् तद्दूषण प्रयासोपि मृतमारणवद्विफलएव । तथापि मंदजनमनोव्यामोहहेतुत्वादद्वैत दीपिकाकारोत्प्रेक्षित दूषणाभासानामसारताव्युत्पादनेनाति हेयतावश्यप्रदर्शनीयेति पुनरपि मृतमारणाद्यायमारंभः । इतःपरं दीपिकाकृता मुखमस्तीति वक्तव्यमिति न्यायमनुरुध्य पुनरप्येतेनखंडनमाचरितमिति मंदजनेषु स्वमहत्वंचिख्यापयिषया खंडनाभासलेखनेपि नतत्प्रतिवचनार्हं । किंतु तदसंबद्ध प्रलापस्य प्रतिघातायास्मान्प्रति तत्प्रहिता अद्वैतसिद्धिकारेण कुकविना कल्पितश्लोकरूपा पिशाच्येव किंचिद्विकारेणास्माभिः प्रतिप्रेष्यते । किंचिद्विकारश्चेत्थं ॥

कुमतिरिहसुतत्वेऽतत्ववादीवराकः
प्रलपति यदकांडे दूषणाभासमुच्चैः ।
प्रतिवचनममुष्मै तस्य को वक्ति विद्वान्
नहि रुतमनुरौति ग्रामसिंहस्य सिंहः ॥ इति

प्रकृतमनुसरामः । तथाहि ॥ यत्तावदुक्तमद्वैतदीपिकायां ॥ नैतच्चंद्रिकासमर्थनार्थं । किंतु दूषणांतरोपन्यासेन स्वतंत्रं भामतीसिद्धांतं निरसितुमेव । नहि भामतीकाराः विशिष्टविषयं ज्ञानं शुद्धविषयमपि भवतीति निरूपयंति । विवरणवाक्यस्यचात्रोपन्यासो न भामतीदूषणसमर्थो भवेत् । नहि भामतीकाराः शुद्धब्रह्मविषयं ज्ञानमूरीकुर्वंतीत्यादि ॥

तदेतत्प्रकाशप्रसराशयानवबोधविजृंभितं ॥ नहि वयमिदानीं भामतीखंडनार्थं प्रवृत्ताः ॥ किंतु तात्पर्यचंद्रिकायामेव सोपपत्तिकं सुव्यक्तमेव भामतीखंडनं कृतं । वयंतु तत्खंडनाभासस्य खंडनार्थमेव प्रवृत्ताः । सतिचैवं विवरणग्रंथं तद्व्याख्यानतत्वदीपनादिग्रंथंचोपजीव्य चंद्रिकाखंडनार्थं प्रवृत्तंप्रति तदीयपूर्वोत्तरवचनसंदर्भं विवरणादिग्रंथंचानूद्य तन्न्यायेनैव तदीयदूषणाभासभंग व्युत्पादनेन चंद्रिकाखंडनस्य खंडने चंद्रिकासमर्थनस्यावर्जनीयतया प्राप्तत्वेनास्य तत्समर्थनार्थत्वाभावः श्लाघनीयप्रज्ञैर्दीपिकाकारैः कथमवगत इति त एव विभावयंतु ॥

यदपि नहि भामतीकारा इत्यादि ॥ तन्न ॥ भामतीमतेप्यहंकारस्य चिदचिद्ग्रंथिरूपत्वांगीकारेणाहंप्रत्ययस्याधिष्टानतया शुद्धचिद्विषयताया अवर्जनीयतया प्राप्तत्वेनानुक्तिमात्रेण प्रमितार्थापलापायोगात् ॥

वस्तुतस्तु ॥ भामत्यां "तस्माच्चिदात्मैव कार्यकारणसंघातेन ग्रथितः स्वयं प्रकाशोपि बुध्यादिविषयविच्छुरणात्कथंचिदस्मत्प्रत्ययविषयोहंकारास्पदं जीव इति क्षेत्रज्ञ इतिचाख्यायते । नखलुजीवश्चिदात्मनोभिद्यते" इत्यादावनेकत्र चिदात्मनः शुद्धस्याहंप्रत्ययालंबनत्वं व्यक्तमेवोक्तमिति तदनुक्तिवचनं भामतीग्रंथांध्यनिबंधनमेवेति किंचिदेतत् । एवं भामतीमतइव विवरणमतेपि विचारअक्षिप्त इति वदता त्वयैव क्वचित्तयोर्मिथःसंमतिव्युत्पादनेन प्रकृते विशिष्टे शुद्धस्यानुगमविषयेपि संमतिसंभवेन तत्रविवरणानुवादोपि सूपपन्नएव । परंतु यत्र तयोर्विसंवादस्तत्र खलु तदनुवादोन युक्तः ॥

यत्तु ॥ भामतीकाराः अखंडसाक्षात्कारोपि वृत्युपहितविषय एवाज्ञाननिवर्तकः न शुद्धविषयकंज्ञानमूरीकुर्वंतीत्यादि । तदविमर्शसुंदरं । तथाहि ॥ कुतः शुद्धस्य वृत्यविषयत्वं । नच यत्तदद्रेश्यमित्यादि श्रुत्या

शुद्धस्वरूपे दृश्यत्वनिषेधात् वृत्युपहित एव तत्र दृश्यत्वं स्वीक्रियत इति वाच्यं । तद्वाक्यजन्यबोधविषयत्वस्याप्युपहित एव सत्वेन शुद्धे तन्निषेधा साधकत्वात् । स्वाविषयेपि तत्साधकत्वे उक्तश्रुत्यैव घटादि केवलरूपेपि दृश्यत्वनिषेधः किं न स्यात् । ननूक्तश्रुतितात्पर्यविषयीभूतं यत् तत्तादा त्म्यस्य शुद्धे सत्वादेव तस्यादृश्यत्वसिद्धिः न घटीयकेवलरूपस्येति चेन्न । तत्तादात्म्यस्यापि तन्मते स्वोपहित एव सत्वेन तत्सत्वेनापि शुद्धे दृश्यत्वाभा वादि सिध्ययोगात् । एतेन शुद्धं स्वप्रकाशत्वादेव सिध्यति । नतु तदवगाहिवृत्तिज्ञानविषयतयेति परास्तं । तस्य स्वप्रकाशत्वादिबोधकश्रुत्य विषयत्वात् । नच पूर्वोक्तरीत्या शुद्धं स्वप्रकाशं नवेत्यादि संशयादिकं प्रतिप्रतिरोधित्वमेव तद्वाक्यस्य शुद्धविषयकत्वमिति वाच्यं । शुद्धविषयक संशयाप्रसिद्धेरद्वैतचंद्रिकादौ निरूपितत्वेन तद्विरोधिताया दूरपराहतत्वात् । श्रुतेः शुद्धविषयक ज्ञानाजनकत्वे तत्संशयविरोधित्वासंभवाच्च । केनचि त्ताद्दशसामग्रीकल्पने उक्तवाक्यजन्यधियस्तद्विरोधित्वस्य वाचस्पतिना कल्प नामात्रेण तद्वाक्यस्य शुद्धपरत्वे पुरुषांतरेण घटसंशयविरोधित्वकल्पनामात्रेण घटपरत्वमपि दुर्निवारमिति सम्यक् श्रुत्यर्थविचारकौशलं प्रकटीकृतं ॥

किंच वृत्युपहिते वृत्तिविषयत्वस्य अज्ञानोपहिते अज्ञानविषयत्वस्य सत्वे तयोरुपहितयोर्भिन्नत्वेनैकविषयकत्वाभावान्निवर्त्यनिवर्तकभावानुपपत्तिरप रिहार्यैव । इतराप्रकारकत्वमात्रेण निवर्तकत्वे पूर्वोक्तघटनिर्विकल्पकादेरपि तत्स्यादविशेषात् । तथाच शुद्धांशे अन्याप्रकारकवृत्युत्पत्तेरावश्यकत्वे शुद्धे वृत्तिविषयत्वस्यापरिहारएव ।

यदत्रोक्तं कल्पतरौ ॥ "निरुपाधिब्रह्मेति विषयीकुर्वाणा वृत्तिः स्वम्वेतरोपाधिनिवृत्तिहेतुरुदयते । स्वस्याप्युपाधित्वाविशेषात् । ततः

स्वसत्तायां विनाशहेतुसान्निध्याद्विनश्यदवस्थत्वं । एवंच नानुपहितस्य विषयतेति । एवं ननु वृत्तिविशिष्टस्य शबलतया नतत्वसाक्षात्कारगोचरता । वृत्यवच्छिन्नात्मविषयत्वेच वृत्तेः स्वविषयत्वापातः । विशेषणाग्रहे विशिष्टाग्रहात् । उपलक्षितस्यतु नवृत्युपाधिकतेति । उच्यते ॥ वृत्युपरागोत्र सत्तयोपयुज्यते । न प्रतिभास्यतयाऽतोवृत्तिसंसर्गे सत्यात्माविषयो भवति न स्वत इति । ननूपाधिसंबंधाद्विषयत्वं विषयत्वेचोपाधिसंबंध इतीतरेतराश्रयत्वमत आह । अन्यथेति ॥ न ब्रह्मसाक्षात्कारस्य ब्रह्मविषयकत्वप्रयुक्तं चैतन्यप्रतिबिंबितत्वं । किंतु स्वतः ॥ घटादिवृत्तिष्वपि साम्यात् । चैतन्यंच ब्रह्मेति स्वाभाविको वृत्तेस्तत्संबंध" इति च । परिमलेपि ॥ "सत्तयोपयुज्यत इत्यविद्यमानव्यावर्तकत्वनिषेधान्नोपलक्षणं । न प्रतिभास्यतयेति कार्यान्वयनिषेधान्नविशेषणं । किंतु कार्यानन्वयी सत्वनियत उपाधिस्तृतीयप्रकार एव । चैतन्यप्रतिबिंबितत्वं संजातचैतन्यप्रतिबिंबत्वं । तथाच चैतन्यवृत्योः प्रतिबिंबतदुपाधित्वलक्षणसंबंधो नविषयविषयीभावप्रयोज्यः । किंतु स्वयमेव तत्प्रयोजक इति नान्योन्याश्रय" इति ॥ अत्रोच्यते । तथाहि ॥ यदि वृत्तिः स्वसन्निधिमात्रेण चैतन्यस्य स्वोपहिततां संपाद्य स्वयमुपाध्यविषयासती मिथ्याभूतोपहितविषया भवति । तर्ह्यज्ञानमपि स्वसन्निधिमात्रेण चैतन्यस्य स्वोपहिततां संपाद्याज्ञानाविषयकं सदज्ञेयविषयकं भवतीत्यज्ञानमपि मिथ्यार्थविषयकं स्यात् । ततश्च ज्ञानाज्ञानयोरसमानविषयकत्वान्निवर्त्य निवर्तकभावानुपपत्तिः । चरमवृत्ते र्मिथ्यार्थविषयकत्वेन भ्रमत्वान्नाज्ञाननिवर्तकता । अपसिद्धांतश्च ॥

किंचानुपहितस्य शुद्धस्य वृत्यविषयत्वेन तस्य चरमवृत्तिविषयत्वाय तटस्थयाप्युत्पन्नया वृत्योपहितत्वं । उपहितेच चैतन्ये तद्विषयकवृत्युत्प

त्तिः निर्विषयवृत्तेरनुत्पादात् । एवंच चैतन्यस्य विषयत्वे तद्विषयकवृत्युत्पत्तिः वृत्युत्पत्तौच चैतन्यस्य वृत्यधीनं विषयत्वमित्यन्योन्याश्रयो दुर्निवार एव ॥ किंचोपाध्यविषयकत्वे सत्युपहितविषयकत्वं अनुपहितविषयकत्व एव पर्यवस्यतीति शुद्धस्य विषयत्वमपरिहार्यमेव । किंच भामत्यां "क्रियासमभिहारेणेदृगात्मतत्वमभिदधति तत्पराणि संती"त्याद्युक्त्या शुद्धात्मनो वेदांतवेद्यत्वमूरीकृतमेवावगन्यते । नहि शक्त्या लक्षणायावा शुद्धात्मनः शास्त्रजन्यज्ञानविषयत्वाभावे शास्त्रस्यात्मतत्वपरत्वं संभवदुक्तिकं । उपहितंतु मिथ्यात्वादेव न शास्त्रतात्पर्यविषय इति ॥

किंचोपहितरूपेणैव शुद्धब्रह्मणः प्रमाणविषयत्वेन दृश्यत्वं मिथ्यात्वंच स्यात् । तथाच स्फुटः शून्यवादः । प्रमाणाविषयीकृतस्यालीकत्वात् । एवं शुद्धात्मनः स्वाकारवृत्तिप्रतिबिंबितचैतन्यविषयत्वरूपफलव्याप्यत्वापातेनाखंडाकारवृत्तिचैतन्ययोरुपाधिप्रतिबिंबत्वलक्षणसंबंध एव नांगीकर्तुं शक्य इति तस्य स्वाभाविकत्वमष्टमरसवत् दूरापास्तमिति नान्योन्याश्रयपरिहारोपि । यदत्रोक्तमद्वैतचन्द्रिकायां "ब्रह्मान्विते स्वविषयत्वे अनन्वितत्वे सति विद्यमानत्वेच सति स्वविषयव्यावर्तकत्वाद्वृत्तेर्विषयत्वंप्रत्युपाधित्वं । यदनन्वितं विद्यमानं यद्विशिष्टस्येतरस्माद्व्यावर्तकं यद्भवति तत्तत्रोपाधिः यथा घटकारणत्वादौ दंडत्वादिकमिति" । तन्न ॥ तल्लक्षणाभावात् । तथाहि पंकजपदप्रयोगे पद्मत्वमुपाधिः । तच्च योगेन पद्मापद्मसाधारणं पंकजपदप्रयोगंपद्मे इतरस्माद्व्यावर्तयति । नतु पद्मे तत्संपादयति ॥ योगेन प्रागेव तत्रतत्प्रत्यायनात् । नच स्वव्यापारं स्वाश्रयंचेतरस्माद्व्यावर्तयति । किंच धर्मिणिविद्यमानस्तत्समसत्ताको धर्मो भवत्युपाधिः । अन्यथा प्रातिभासिकपद्मत्वस्यकुमुदादावपि संभवेन तत्राप्युपाधिः स्यात् । नचेह वृत्तिस्तथेति ॥ अधिकमाकरे व्यक्तं ॥

यदपि ॥ नहि भामत्यां पूर्वपक्षे सिद्धांतेवा शुद्धपदघटितं वाक्यं समस्तीति । तत्पूर्वोत्तरभामतीग्रंथांध्ययनिमित्तं । "चिदात्मा तु श्रुतिस्मृतीतिहासपुराणगोचरःतन्मूलतदविरुद्धन्यायनिर्णीतशुद्धबुद्धमुक्तस्वभाव इति -पदांतरावगमितं नित्यशुद्धबुद्धत्वादीति - ब्रह्मस्वरूपस्योपाधिकलुषितस्य जीवस्य प्रागण्यपरोक्षत्वात् ॥नहि शुद्धबुद्धत्वादयोः वस्तुतोतिरिच्यंते" इतिच तत्र तत्र सिद्धांतादिग्रंथेषु शुद्धपदघटितवाक्यानामव्याप्यविलीनत्वात् ॥

वस्तुतस्तु ॥ "परोक्ते दूष्यएवांशोमितैः शब्दैरनूद्यते" इति स्वप्रतिज्ञानुसारेण भामतीनिष्कृष्टसिद्धांतस्य स्वकीय मितशब्देनानुवादश्चंद्रिकायां सूपपन्नः । नहि चंद्रिकाकारैः परकीयानुपूर्वीविशिष्टवेषेण तदीयशब्दानुवादः प्रतिज्ञातः । येन परग्रंथे शुद्धेत्यानुपूर्वीविशिष्टशब्दाभावो दोषावहो भवेत् । परंतु "भवेदेतदेवं यद्यहमित्यनुभवे आत्मतत्वं प्रकाशेत । नत्वेतदस्ती"त्यादि भामतीग्रंथसंर्भेणाहंप्रत्यये शुद्धात्मा न भातीत्यस्यार्थस्य स्फुटप्रतिभासात् - यथा प्रतिज्ञंस्वीयमितशब्देन तदनुवाद एव युक्त इति यत्किंचिदेतत् ॥

यदपि ॥ शुद्धं स्वप्रकाशमित्यास्याशुद्धत्वमप्रकाशत्वव्यापकमित्यर्थवर्णनेनेत्यादि । तदपि मंदं ॥ यत्राशुद्धत्वाभावस्तत्रास्वप्रकाशत्वाभाव इति व्यतिरेकसहचारज्ञानाय शुद्धस्यापिज्ञेयत्वत् । किंच वृत्तिपदेनाविद्यावृत्तिर्मनोवृत्तिर्वा विवक्षिता । नाद्यः ॥ जगन्मिथ्यात्वसिद्धेः प्राक् भ्रमरूपाविद्यावृत्तिविषयत्वासंभवात । नांत्यः ॥ साक्षिवेद्ये शुक्तिरूप्यादावंतःकरणधर्मसुखादिषुच भागासिद्धेः । यत्तु ॥ शुक्तिरूप्यादिकं मिथ्येत्याकारकमनोवृत्तिविषयत्वमादाय नभागासिद्धिरिति । तन्न ॥ शुद्धं ब्रह्म वृत्तिव्याप्यं नेत्याकारकवृत्तिविषयत्वमादायतत्रानैकांत्यात् ॥

यत्तु । अस्वप्रकाशत्वव्यापकाभावप्रतियोगित्वरूपायाः स्वप्रकाश त्वव्यातिरेकव्याप्तेर्यदोपहितत्वाभावरूपे शुद्धत्वे ज्ञानंउद्‌बुद्धसंस्कारोवा तदो क्तशुद्धत्वविशिष्टे स्वप्रकाशत्वाभावो न ज्ञायते । वन्ह्यभावव्यापकाभाव प्रतियोगित्वस्य धूमे निश्चये उद्‌बुद्धसंस्कारेवा सति धूमवति वन्हेरभावस्या ज्ञानवदिति तादृशव्याप्तिज्ञानस्य तादृशज्ञानाभावप्रयोजकत्वमेव स्वप्रकाशत्ववि शिष्टशुद्धसाधकत्वमिति । तन्न ॥ स्वप्रकात्वव्याप्यवत्तया शुद्धस्य ज्ञाना भावे तत्र स्वप्रकाशत्वाभाव ज्ञानस्य बाधकाभावात् । स्वप्रकाशत्वव्याप्ये उपहितत्वाभावरूपे शुद्धत्वे ज्ञातेच शुद्धज्ञानस्याप्यवर्जनीयत्वात् । दृष्टांतेपि वन्हिव्याप्यधूमवत्तयाज्ञात एव पर्वतादौवन्हेरभावो नज्ञायते । उपहितत्व स्यास्वप्रकाशत्वव्यापकत्वे ज्ञातव्ये शुद्धत्वस्वप्रकाशत्वयोः सहचारग्रहआवश्य कः । अन्यथा अस्वप्राशत्वे व्यभिचारज्ञानानुच्छेदेनोक्तव्यापकताज्ञाना संभवात् । सहचारग्रहेच शुद्धधीरवर्जनीयैव । शुद्धत्वविशिष्टत्वेन शुद्धज्ञानेच शुद्धे अस्वप्रकाशत्वनिषेधरूपस्वप्रकाशत्वस्य न पर्यवसानं भवतीति । यदपि ॥ चंद्रिकाकृतामुक्तविकल्पदूषणानि भामतीसिद्धांताद्यनवलोकनविजृंभितानीत्या दि प्रलपनं । तदप्यनादेयमेव ॥ स्वातंत्र्येण चंद्रिकाखंडनेन भामत्यु ज्जीवनार्थं प्रवृत्तेन खंडनाकारेणानुक्तोपालंभनदोषमसंतमनभिधाय तथानुवादं चंद्रिकृतां भामतीसंमतमूरीकृत्य भामत्यभितशुद्धशब्दस्यार्थविशेषकल्पनया चंद्रिकोक्तदूषणपरिहारप्रयासेन शुद्धो न भातीति कोर्थ इत्यादि चंद्रिकानूदित पक्षस्य भामतीसिद्धांतत्वनिर्धारणात् । कल्पतरौ पूर्वपक्षसिद्धांतोपसंहारग्रंथे आत्मस्वरूपस्याहंप्रत्ययविषयत्वं प्रत्यक्षप्रबल्यंचोपजीव्य जिज्ञासाक्षेपस्य निरु पाधिकात्मनोहंप्रत्ययाविषयत्वं प्रत्यक्षस्याभासत्वंचोपजीव्य तदाक्षेपसमाधानस्य च व्यक्तमुक्तत्वाच्च । तथा च निरुपाधिकात्मा - आत्मतत्वं - आत्मस्व

रूपं - इत्यादिशब्दाभिलप्यमानः शुद्धात्मा अहंप्रत्यये न भातीति भामतीसिद्धां तोपरि ग्रंथकृदुक्तविकल्पदूषणानामत्यंतसंश्लिष्टतया सर्वज्ञकल्पनां चंद्रिकाकृता मज्ञानकल्पनस्य सौरालोके दिवाभीतांधकारकल्पनवत्स्वाज्ञानमूलत्वात् ॥

यत्तु ॥ खंडनकारवचनस्य शुद्धपदविवरणादिरूपस्य कृत्वा चिंतया प्रवृत्तत्ववचनं । तदपि प्रेक्षावद्भिरश्रद्धेयमेव । अभ्युपगमवादप्रयोजनानिरूपणात् । सतोप्यनुक्तोपालंभनदोषस्यानुद्भावने कारणानभिधानात् । तज्ज्ञापकाभावाच्चेति ॥

यदपि ॥ विशिष्टज्ञानं स्वरूपेण शुद्धविषयकं न भवति । किंतु किंचिद्रूपेण तद्विषयं भवतीत्यादि । तत्रोच्यते ॥ स्वरूपेणेति कोर्थः । स्वस्य रूपमिति विवक्षया स्ववृत्यसाधारणरूपोपरागेणेतिवा - धर्मिभूतशुद्धस्वरूपविषयमपि न भवतीतिवा । नाद्यः भामतीमते अनुपहिते व्यावहारिकधर्मस्याप्यनंगीकारेण चरमवृत्तेरप्युक्तरूपेण शुद्धविषयकत्वाभावात् । अधिष्ठानविषयात्मस्वरूपविषयत्वसंमत्या अपसिद्धांतापाताच्च । वयंतु स्वरूप - पररूपादिसकलधर्मानुपरागेणो परागेणवात्मस्वरूपस्य विशिष्टज्ञानविषत्वसंपादनेन कृतार्थाः स्वरूपेणात्मनो विषयत्वं नाशास्महे । शुद्धस्वरूपस्य विशिष्टज्ञानविषयत्वंतु लघुचंद्रिकायां शुद्धस्य किंचिद्रूपेण भानमिति व्यक्तमुक्ततया अधिकंत्विति न्यायेन सिद्धमेव । परंतु - तत्र प्रतीयमानं रूपं - स्वकीयं वा परकीयंवा - सत्यं - मिथ्यावा भवतु । तेन रूपेणात्मस्वरूपस्य विषयत्वंतु नापन्होतुं शक्यमित्यलं निर्दलपक्षप्रतिक्षेपेणेति । एतेनाद्वैतसिध्याद्यनुवादः परास्तः । किंच भामतीमते स्वरूपेणशुद्धविषयकज्ञानस्यैवानंगीकारादहंप्रत्यये शुद्धात्मा न भातीत्यादि विशिष्योक्तिरेवायुक्तेति संक्षेपः ॥

यदपि विवरणग्रंथस्याप्ययमेवाभिप्राय इत्यादि । तद्विवरणग्रंथाज्ञानमूलं । तथाहि॥ "यथा तार्किकमते कर्णशष्कुल्यवच्छिन्नाकाशस्य शुद्धाकाशान्यत्वेपि तद्धर्मःशब्दः शुद्धाकाशस्यापि धर्मः । अन्यथा शब्दाश्रयत्वेनाकाशानुमानासंभवात् । तथा किंचिदुपहितचिदाश्रितमपि ज्ञानं शुद्धचिन्निष्टं भवत्येव । विशिष्टचिति शुद्धचितोनुगमात् । तमेव भांतमिति श्रुत्या तत्प्रतीतावेव प्रतीतेश्च । दृश्यत्वादिकंतूपहितनिष्टमेव शुद्धचिता तादात्म्यरूत्वात्तस्य । अत्यंताभेदे संबंधायोगाच्च । विषयावच्छिन्नचिता सहैकीभावापन्नांतःकरणावच्छिन्नचित्तादात्म्यापन्नस्य वृत्तिरूपस्य तत्प्रतिबिंबितचिद्रूपस्यवा ज्ञानस्य विषयावच्छिन्नचिद्भानापादकाज्ञानसमानदेशत्वमुक्तरूपमस्त्येव । इदंचोपहितनिष्टस्य शुद्धचिन्निष्टत्वोपपादनं यथाश्रुतसमानदेशत्वाभिप्रायेणेत्यादि" विवरणसमर्थनपर लघुचंद्रिकादिग्रंथांध्यनिमित्तत्वात्तथाभिप्रायकल्पनस्य ॥

यदपि ॥ अहं मुक्तः स्यामितीच्छायां शुद्धाभानेपि अनवच्छिन्न शुद्धत्वरूपमात्रविषय पार्ष्टिकबोधमादायैवात्ममात्रगतमुक्तीच्छापर्यवसानं बोधयतीति नानेनवाक्येनाहंप्रत्यये शुद्धभानं खंडनकारैः स्वीकृतमित्यादि । तदप्यापातरमणीयं । अहं मुक्तः स्यमितीच्छासंपत्यनंतरं सामग्रीविरहे प्रयोजनाभावेच सति शुद्धचिन्मात्रविषयकमानसादिबोधकल्पनासंभवात् । तत्कल्पनामात्रेण विशिष्टगतमुक्तीच्छाया विशेष्यमात्रगतमुक्तिविषयत्वपर्यवसानस्य विशिष्टेच्छायां शुद्धभानाभावे कर्तुमशक्यतयोक्तासंबद्धप्रलापस्यानादरणीयत्वात् । अधिकमन्यत्र व्यक्तं ॥

यत्तु ॥ विशिष्टस्यातिरिक्ततापक्षे नैष दोष इति । तन्न ॥ त्वन्मतेविशिष्टशुद्धयोस्तादात्म्यांगीकारेणोक्तदोषस्य वज्रलेपत्वात् । अन्यथा विशिष्टज्ञानानंतरंविशेष्ये संशयादि प्रसंगात् । तथाच भामतीसमर्थ

नार्थं खंडनकारपरिकल्पितकल्पे चंद्रिकोक्तविकल्पदूषणानि संलग्नान्येव नानु क्तोपालंभनानीति नशतेनापिप्रयत्नानां दीपिकाकारेण परिहर्तुं शक्यानीति सुस्थान्येवेति सिद्धं ॥

यदपि ॥ अत्रहि अविद्याप्रतिबिंबोंतःकरणप्रतिबिंबोवेति मतद्वय मद्वैतिनामित्यादि । तदप्यद्वैतसिद्धांतानवबोधविलसितं । विवरणे"नन्वज्ञा नं जीवावच्छेदोपाधिरितिपुरस्तादुक्तं । तत्कथमहंकारोपाधिता जीवस्याभि धीयत इति । नैष दोषः ॥ चैतन्यस्यावच्छेदकविकल्पतारतम्येन व्यव हारविकल्पतारतम्यात् । तथाहि ॥ निर्विकल्पकं चैतन्यमात्रैकरसं अवि द्यासंबंधादीषद्विकल्पव्यवहारालंबनं भवति सुषुप्ते । ततस्तदुपादानांतःकर णावच्छेदात्तदेव स्थूलतरं व्यवहारालंबनं भवति स्वप्ने । पुनरंतःकरणसंसृ ष्टस्थूलशरीरोपरागात्स्थूलतमं भवति जागरणे । नचोपाधिभेदाज्जीवभेदप्र संगः । पूर्वपूर्वोपाध्यवच्छिन्नस्यैवोत्तरोत्तरेणावच्छेदात् । निरपेक्षोपाधि भेदेहि जीवभेदः"इति व्यक्तमुक्ततया मतद्वयस्याप्रामाणिकत्वात् । "कार्योपाधिरयं जीवः कारणोपाधिरीश्वर" इत्यादि श्रुतिविरोधात् । अविद्या बिंबत्वमीश्वरत्वं । तत्प्रतिबिंबत्वं जीवत्वं ॥ अविद्यातूभयानुगतचिन्मा त्रसंबंधिनी । उपाधेः प्रतिबिंबपक्षपातित्वाज्जीवे संसारः । अंतःकरणंतु नावच्छेदो नाप्युपाधिः । कृतनाशाकृताभ्यागमप्रसंगादित्यादि त्वदीयप्र क्रियाविरोधाच्च । भामतीमते त्वत्कल्पनानवसरप्रकारो व्यक्तीभविष्यत्युप रिष्टादिति ॥

किंच प्रतिबिंबे उपाधितादात्म्यमन्यत्रादृष्टमेव कल्पनीयं । अत्रो क्तं लघुचंद्रिकायां ॥ असंबद्धस्योपाधित्वायोगात् । संबंधांतरायोगाच्चा ध्यासिक एव संबंधो वाच्य इति तादात्म्यसिद्धिरिति । तन्न ॥ अंतः

करणादेः करणरूपतया कर्त्रधीनत्वेन तेन सह स्वस्वामिभावाद्यनेकविधसंभावितसंबंधानामाकरे व्यक्तमुक्तत्वात् । तादात्म्याध्यासस्य दूषयिष्यमाणत्वाच्चेति ।

यदपि ॥ भिन्नपदेनचात्र तादात्म्यानापन्नमित्यर्थो विवक्ष्यते । अस्मन्मतेतु अविद्याप्रयुक्तांतःकरणतादात्म्यापन्नचिद्रूपस्य सौषुप्तिकाविद्यातादात्म्यापन्नचिद्रूपस्यच वारणार्थं भिन्नांतविशेषणमित्यादि । तदप्यसारं ॥ सुप्तौश्वासादिक्रियादर्शनेनांतःकरणस्य ज्ञानशक्तिविशिष्टवेषेण विलयेपि क्रियाविशिष्टवेषेण सत्वांगीकारात्तत्राप्यंतःकरणतादात्म्यापन्नचितः संभवेनाविद्यातादात्म्यापन्नचिद्विवक्षाया व्यर्थत्वात् । दृश्यमात्रतादात्म्यपन्ने स्वोपादानाज्ञाननिवर्तकज्ञानविषयेच ब्रह्मणि अंतःकरणतादात्म्यानापन्नत्वस्य दुर्घटत्वेन शुद्धासंग्रहप्रसंगाच्च ॥

विवरणे''एकाग्निसंबंधादयोदहतीतिवदज्ञानांतःकरणयोरेकात्मसंबंधादहमित्यवभासो नांतःकरणस्याज्ञानसंबंधादि''त्यादिना ग्रंथेन शुद्धात्मन्येवांतःकरणतादात्म्यस्य व्यक्तमेवोक्तत्वाच्च । सन् घट इतिवत्सदंतःकरणमिति प्रतीतेस्तत्र तत्तादात्म्यस्यापन्होतुमशक्यत्वाच्च ॥

एतेनाविद्यातादात्म्यानापन्नत्वमपि प्रत्युक्तं । अन्योन्याश्रयादिभिया शुद्धएवाविद्याध्यासस्य समर्थितत्वेन तत्र तत्तादात्म्यस्यावर्जनीयत्वात् । सदज्ञानमितिप्रतीतेः । दृश्यसामान्यतादात्म्यापन्ने स्वनिवर्तकज्ञानविषये शुद्धएवाविद्यातादात्म्यस्याकामेनाप्यंगीकार्यत्वाच्च । तथाच शुद्धासंग्रहो दुर्वार एव । वस्तुतस्तु ॥ ''इति भाष्यकृतो भाषा तेन भ्रांतिर्द्विविरूपिणी । तादात्म्यारोपरूपावा धर्मारोपात्मिकापि वा । नाज्ञानमहमित्यस्ति नाज्ञानत्वंमयीत्यपि । भ्रमो ब्रह्मणि तेनस्यात्कथमज्ञानकल्पना।

अज्ञोहमिति च ज्ञानं सिद्धाज्ञानस्य वेदनं । उक्ताकारद्वयायोगात्सिद्धिश्च भ्रमरूपिणी । नास्त्येवेति कुतोऽज्ञानं कल्पितं स्यादियंतुधीः । नाज्ञानकल्पना रूपा ततोऽज्ञानमकल्पितं'' इत्युक्तरीत्या अज्ञानत्वरूपाज्ञानधर्मसंसर्गारोपस्यैव युक्तत्वेनाज्ञानसंसर्गारोपस्यायुक्ततयाऽज्ञानानुवेधाभावान्नाविद्यातादात्म्यापन्नत्वमात्मनः संभवतीति न तत्तादात्म्यानापन्नत्वं जीवचैतन्यव्यावर्तकं। एवं ममांतःकरणं नाहमंतःकरणमित्येव प्रतीत्या अहमंतःकरणमित्यंतःकरणानुवेधाभावान्नतत्तादात्म्यापन्नत्वमात्मन इति न तत्तादात्म्यानापन्नत्वमपि व्यावर्तकं । अंतःकरणस्य स्वरूपेणांतःकरणत्वादिना तादात्म्यारोपाभावेपि कर्तृत्वादिविशिष्टवेषेण तत्तादात्म्यारोपसंभवइत्यादिकंत्वनुपदमेव निरसिष्यते । अपिच तादात्म्यानापन्नत्वमपि आपन्नत्वाभावो आपन्नभेदोवा । पक्षद्वयेपि शुद्धशब्दार्थस्य ध्वंशतया प्रागुक्तदोषाणामत्रापि वज्रलेपत्वात् भक्षितेपीतिन्यायेन दीपिकारप्रयासो विकल्प एव ॥

किंचेश्वरस्य स्वप्रपन्नमायाध्यासनिवृत्तिरूपमायानिरसनसमर्थस्याविद्यातादात्म्याध्यासस्यासंभावितत्वेन तत्तादात्म्यानापन्नत्वात् अंतःकरणतादात्म्यानापन्नत्वांगीकाराच्चेश्वरस्य शुद्धत्वापत्तिरप्यपरिहार्यैव । अधिकमाकरे व्यक्तं

यदपि चिद्रूप इति शुद्धस्य ज्ञानरूपत्वमुक्तं । तदप्यापातरमणीयं॥ अज्ञानाविरोधिनः शुद्धत्वादेव व्यवहाराद्यनुकूलशक्तिविधुरस्य ज्ञातृज्ञेयविहीनस्य ब्रह्मणो ज्ञानरूपत्वस्यासंभव दुक्तिकत्वात् । न च ज्ञानस्य विषयतादात्म्यमेव सविषयकत्वं । तच्च सर्वदृश्यतादात्म्यापन्ने ब्रह्मण्यक्षुण्णमिति वाच्यं । तादात्म्यस्य विषयतारूपताया अनुपदमेव निराकरिष्यमाणत्वात्। सर्वदृश्योच्छेदरूपमोक्षे सविषयकत्वायोगाच्च । न च यदाकदाचित्सविषयक

त्वमात्रेण ज्ञानत्वोपपत्तिरिति वाच्यं । ज्ञानस्वरूपत्वं स्वसमानसत्ताकस्वनिष्ठविषयिताव्याप्यमित्येव व्याप्तेरव्यभिचारेण व्यापकाभावे व्याप्याभावनिर्धारणात् । सविषयकत्वारोपमात्रेण ज्ञानत्वे घटादेरपि ज्ञानत्वापातात् । तत्रापि कदाचित्कचित्सविषयकत्वभ्रमसंभवात् । न च ज्ञानस्वरूपत्वं प्रति ब्रह्मज्ञानेतराबाध्यसविषयकत्वं व्यापकमतो नोक्त दोष इति वाच्यं । सन्निपातादिना मरणस्थले तस्य बाधानुदयेनोक्ताबाध्यत्वस्याप्यनपायात् । यत्तु ॥ ज्ञाने तादात्म्यमेव मुख्यं विषयत्वं । इच्छायास्त्वाकाराख्यं गौणमेवेति ॥ तदसत् ॥ मोक्षे ज्ञानानंदयोर्भेदाभेदनिर्वाह्यतादात्म्याभावेन विषयविषयिभावानुपपत्त्या आनंदाप्रकाशे तस्यापुरुषार्थत्वापत्तेः । नचानावृतानंद एव पुमर्थः । आनंदस्यानुभवगोचरत्वानंगीकारे तदावरणत्वस्यैव वक्तुमशक्यत्वात् । एवं क्रियाकर्तृभावविरोधेन समानसत्ताककर्तृशून्यत्वाच्च न ज्ञानरूपत्वं ब्रह्मण इति दीपिकाकारोत्प्रेक्षितशुद्धशब्दार्थस्तन्मत एवातिहेय इति प्रथमत एव सम्यक् प्रकटीकृतं दीपिकाकारेण स्वसिद्धांतकौशलमित्यलं दुर्बलविशसनेनेति ॥

यदपि अंतःकरणतादात्म्यापन्नो जीव इति । अत्र दीपिकाकारस्याद्वैतसिद्धिलघुचंद्रिकादौ न्यायामृतोक्तदूषणोद्धारः कृतस्तत एव न्यायामृतं खंडितमिति महामोहनिरसनार्थं न्यायामृतोक्तान्यद्वैतदूषणानि संश्लिष्टानि न केनापि कथंचिदप्युद्धर्तुं शक्यानीति परप्रत्यायनार्थंच किंचिद्विचार्यते । तथाहि ॥ जीवे तावदंतःकरणतादात्म्यमसंभवदुक्तिकमेव । अत्रोक्तमद्वैतचंद्रिकायां ॥ आवश्यकः खल्वात्मन्यंतःकरणतादात्म्याध्यासः । तं विना आत्मनि कर्तृत्वादेरंतःकरणधर्मस्य भानानुपपत्तेः । तदुक्तं पंचपादिकायां ॥ “तस्या अनाद्यविद्यायाः परमेश्वराधिष्ठितत्वलब्धपरिणामविशेषो विज्ञानक्रियाशक्तिद्वयाश्रयः कर्तृत्वभोक्तृत्वैकाधारः कूटस्थचैतन्यसंवलनसंजा

त्ज्योतिः स्वयं प्रकाशमानोऽपरोक्षोहंकारोयत्संभेदात्कूटस्थचैतन्योऽनिदंशं आत्मधातुरपि मिथ्यैव भोक्तेति प्रसिद्धिमुपगतः । सचाहंकारः चिदात्मनो बुध्या निष्कृष्यवेदांतवादिभिरंतःकरणं मनोबुद्धिरहंप्रत्ययी इतिच विज्ञानशक्तिविशेषमाश्रित्य व्यपदिश्यते ॥ परिस्पंदशक्त्याच प्राण इति । तेनांतःकरणोपरागनिमित्तं मिथ्यैवाहंकर्तृत्वमात्मनः स्फुटिकमणेरिवोपधाननिमित्तो लोहितिमा" इति । नच कर्तृत्वादय आत्मधर्मा एव स्वाभाविका भवंतु । किमंतःकरणधर्मत्वमंगीकृत्यात्मनि तत्प्रतीतिनिर्वाहायांतःकरणतादात्म्याध्यासकल्पनयेति वाच्यं । तथासति कर्तृत्वस्य कृतिरूपतया तस्यात्मनि तादात्म्येनोत्पत्तिप्राप्त्याऽत्मनोप्युत्पत्तेरावश्यकत्वे निर्विकारत्वबोधकश्रुत्याद्यप्रामाण्यापत्तेः । कृतीच्छादीनां सामानाधिकरण्यस्य सर्वसंमततयेच्छादीनां च "कामः संकल्पः एतत्सर्वं मन एवेति" श्रुत्या मनोधर्मत्वावगतेः । सुप्तौ मनसोऽभावे न कर्तृत्वानुभवाभावाच्च ॥ मनउपाधिकमेवकर्तृत्वमात्मनश्चकारत्व इत्येव युक्तं । नन्वेवं तर्हि जपोपाधिना स्फुटिके लौहित्यप्रतीतिवन्मनोरूपोपाधिना आत्मनि कर्तृत्वप्रतीत्यंगीकारे जपा रक्ता स्फटिकंच रक्तमिति वन्मनःकर्तृचैतन्यंच कर्त्रितिपृथग्व्यवहारप्रसंगः । तादृशप्रतीत्योः स्फटिकलौहित्यादिस्थल इव विपरीतप्रमाभावश्चस्यात् । तथाचात्मनि कर्तृत्वस्य प्रातिभासिकत्वप्राप्त्या"कर्ता शास्त्रार्थवत्वात् । यथा च तक्षोभयथे"त्यधिकरणविरोधः । तत्रात्मन एव कर्तृत्वस्य व्यवस्थापितत्वात् । एवं मनसः कर्तृत्वे मननादिक्रियाकरणत्वं न स्यात् । इष्टापत्तौच यन्मनसा न मनुत इत्यादि श्रुतिषु करणत्वश्रवणविरोधः । श्रवणादिकर्तृत्वस्य बंधस्यच बुद्धिनिष्टत्वप्रात्प्या तत्सामानाधिकरण्यानुरोधेन मोक्षस्यांतःकरणनिष्टत्वापत्तिः । प्रतियोगिध्वंसयोः सामानाधिकरण्य निय

मात् । शास्त्रफलमसति विशेषशास्त्रे प्रयोक्तर्येवेति नियमान्मोक्षस्यांतःकरणं प्रत्येव पुरुषार्थताचेत्यादयो दोषाः स्युरिति चेन्न । मम मनः पाठे प्रवर्तत इति प्रतीतेः अहं करोमीति प्रतीतेश्च तवापीष्टत्वेन तत्र मनसः आत्मनश्च पृथक् कर्तृत्वभानस्यावश्यकत्वे उक्तापादनस्येष्टत्वात् । न च पृथगुल्लेखबलात्तयोर्भेदभानादात्मांतःकरणयोस्तादात्म्याध्यासानुपपत्तिरिति वाच्यं । आत्यंतिकभेदग्रहस्यैव तद्विरोधित्वेन प्रकृते तदभावात् ॥

वस्तुतस्तु ॥ मनस्त्वचैतन्यादिविशिष्टवेषेण पृथगुल्लेखः तेन रूपेणात्यंतिकभेदश्च । तथापि कर्तृत्वादिविशिष्टरूपेणैव तादात्म्याध्यासः अत उक्तप्रतीत्यंगीकारे न काचिदनुपपत्तिः । नच मनसश्चैतन्येन सहात्यंतिकभेदगोचरप्रत्ययाभाव इति वाच्यं । मनो न स्फुरणं किंतु स्फुरतीति प्रत्ययात् । आत्मन्यहंकारेच कर्तृत्वावगाहिज्ञानद्वयस्य ब्रह्मज्ञानेनैव बाधेनैकं विनापरस्य ब्रह्मज्ञानेतरेणाबाधान्नविपरीतप्रमाद्यापादनावकाशः । नचैवं तर्ह्यस्य सोपाधिकभ्रमत्वे कदाचित्स्फटिकानवगाहिनः कुसुमं रक्तमिति प्रत्यक्षस्य एवं कुसुमानवगाहिनः रक्तं स्फटिकमिति प्रत्यक्षस्येवात्मानगाहिनः कर्तृत्वसाक्षात्कारस्य अंतःकरणानवगाहिन आत्ममात्रावगाहिकर्तृत्वसाक्षात्कारस्य चापत्तिरितिचेन्न । स्फटिकस्य कुसुमसन्निधिमात्रेण तादृशप्रत्ययद्वयसंभवेपि प्रकृतांतःकरणस्यात्मतादात्म्यापन्नस्यैवोपाधित्वेन परस्परानवगाहिप्रत्ययानुदयात् । नच तादात्म्यरूपसंश्लेषात्तद्वृत्ति धर्माध्यासानंगीकारे रज्जौ सर्पस्य तादात्म्येनाध्यासात्तद्वृत्ति भीषणत्वादिधर्माध्यासेनाविशेषादसंश्लिष्टनिष्टतद्धर्माध्यासस्यैव सोपाधिकत्वं वाच्यं । तथात्वे अग्न्युपाधिकस्यायोनिष्टदाहकत्वाध्यासस्य नीरनिष्टक्षीरोपाधिकमाधुर्याध्यासस्यच सर्वसंमतसोपाधिकत्वानुपपत्या अधिष्टानोपाध्योः परस्पराविषयकप्रतीत्यविषयत्वरूपाश्लेषस्य सोपाधि

कत्वे तंत्रत्वाभावात् । किंतु यदन्वयव्यतिरेकानुविधायित्वं यद्धर्माध्यासस्य तदधिकसत्ताकं तद्धर्माश्रयीभूतं यद्वस्त्वंतरं तदभावस्यैव तंत्रत्वात् । जपारूपोपाधिसन्निधिकाल एव स्फटिकलौहित्याध्यासाज्जपान्वयव्यतिरेकित्वं लौहित्याध्यासस्य अतस्तादृशजपापेक्षयाऽधिकसत्ताकस्य जपांतरस्याभावात्सोपाधिकत्वं । एवं मनः सत्ताकाल एवात्मनि कर्तृत्वाध्यासात्तादृशकर्तृत्वाश्रयीभूतमनोपेक्षयाऽधिकसत्ताककर्तृत्वाश्रयीभूतवस्त्वंतराभावात्सोपाधिकत्वनिर्वाहः । रज्जौ भीषणत्वादिधर्माध्यासस्य रज्ज्वारोपितसर्पान्वयव्यतिरेकित्वात्तादृशभीषणत्वाश्रयीभूतारोपितसर्पापेक्षयाऽधिकसत्ताकसर्पांतरस्य सत्वान्नतद्भ्रमस्य सोपाधिकत्वं । नापि पूर्वाधिकरणद्वयविरोधः । तत्र हि बुद्धेरेव कर्तृत्वं भोक्तृत्वं चैतन्यस्येति पूर्वपक्षे करोमि भुंजे इतिप्रतीत्या कर्तृत्वभोक्तृत्वयोः सामानाधिकरण्यनियमात् कर्तृत्वमात्मनोपीति व्यवस्थापितत्वात् । नन्वंतःकरणस्यापि कर्तृत्वे भोक्तृत्वमपि स्यादिति चेन्न । इष्टापत्तेः । सुखाद्यनुभवतादात्म्यरूपभोक्तृत्वस्यांतःकरणेप्यारोपितस्य सत्वांगीकारात् । "यथाचतक्षोभयथेति" सूत्रे पूर्वाधिकरणोक्तस्यात्मनिष्टकर्तृत्वस्य स्वाभाविकत्वपूर्वपक्षेणौपाधिकत्वस्य समर्थितत्वाच्च न तद्विरोधोपि । अत एवात्मनि कर्तृत्वांतरस्यैवोत्पत्त्यंगीकारात् श्रवणादि कर्तृत्वेन मोक्षस्याप्युपपत्तिः । अन्यथा कर्तृत्वादिविशिष्टांतःकरणतादात्म्याध्यासमात्रात्कर्तृत्वादिव्यवहारे आरोपितबंधस्याप्यभावापत्तेः । उपपादितंचैतत्पंचपादिकाकृता । "स्फटिकमणेरिव लोहितिमा कर्तृत्वादिकमात्मनो मिथ्येति" । स्फटिकलौहित्यं तत्संसर्गश्च मिथ्येति प्रतीतिबलात्तत्र यथा मिथ्याभूतं लौहित्यांतरं जायते तद्वदात्मन्यपि कर्तृत्वांतरं जायत इति तदर्थः । शरीरवृत्तिगौरत्वादिसंसर्गाध्यासमात्रेणाहं गौर इत्यादिप्रतीतिव्यवहारयोरुपपत्तेर्न तत्र गौर

त्वाद्यंतरोत्पत्तिः स्वीक्रियते । भीषणत्वादि संसर्गाध्यासमात्रस्य रज्जाविव मनोनिष्टकर्तृत्वसंसर्गाध्यासमात्रेणैवात्मनो बद्धत्वं - तत एव बंधमोक्षयोः सामानाधिकरण्यमित्यभिप्रेत्य विवरणे मनोवृत्तिनिष्टकर्तृत्वाध्यासोपि निरूपितः । न चोक्तपक्षद्वयेपि मनसः श्रवणादिकर्तृत्वात्तस्यापि मोक्षापत्तिः । तस्यैव नाशेन मोक्षापादनायोगात् । फलवतः कर्तृत्वनियमेपि कर्तृत्ववतः फलनियमाभावात् । कर्तृत्वादिबंधस्यात्मनिष्टत्वात्तन्नाशरूपमोक्षस्यापि तत्रैव सत्वाच्चप्रतियोगिध्वंसयोः सामानाधिकरण्यानुपपत्तिः ॥

वस्तुतस्तु ॥ प्रतियोगितन्नाशयोः सामानाधिकरण्यनियमो नास्त्येव । आश्रयनाशजन्यरूपादिनाशे व्यभिचारात् । इत्थं च मोक्षस्यात्मानंप्रत्येव पुरुषार्थत्वान्नांतःकरणंप्रति पुरुषार्थतापत्तिः । शास्त्रफलं प्रयोक्तरीति नियमो नास्त्येव । जातेष्टि पितृयज्ञादौ व्यभिचारात् । ननु यत्र प्रयोक्तृगततया शास्त्रेणैव फलमुक्तं । तत्रायं न्यायोन प्रवर्तते । संदेहाभावात् ॥ किंतु तदन्यत्रैवेतिचेत्तर्हि प्रयोक्तृगतत्वेन प्रमितफलान्यस्थल एवायं नियम इत्यागतं । तथा चाविद्यातत्कार्योच्छेदरूपमोक्षस्य प्रयोक्तृनिष्टत्वासंभवात्तदवृत्तित्वेनैवप्रमितत्वान्नोक्तस्थले भवदुक्तनियमव्यभिचारप्रसक्तिः । वस्तुतो मोक्षो न शास्त्रफलं । यन्निष्टफलसाधनत्वे शास्त्रतात्पर्यं तदेव हि शास्त्रफलमित्युच्यते । अज्ञाननिवृतिरूपमोक्षसाधनत्वे तत्वज्ञाननिष्टे न शास्त्रतात्पर्यं । ज्ञाननिष्टाज्ञाननिवर्तकत्वस्य लोकसिद्धव्याप्तिमूलकानुमानगम्यत्वे न तदंशे शास्त्रस्यानुवादरूपतापत्या तात्पर्यस्य वक्तुमशक्यत्वात् । नापि मनसः कर्तृत्वे करणत्वविरोधः । "विज्ञानं यज्ञं तनुते कर्माणि तनुतेपिचेति" श्रुत्युक्त यज्ञादिकर्तृत्वस्य मनोविज्ञानबुद्धिशब्दवाच्यवस्तुनः सत्वेपि वृत्तिप्रतिबिंबितचिद्रूपां वृत्यवच्छिन्नां भग्नावरणां वा चितमुप

लब्धिपदार्थभूतांप्रतिकरणत्वे बाधकाभावात् । तस्मदात्मन्यंतःकरणतादात्म्याध्यास आवश्यक इति ॥

अत्रोच्यते । यत्तावदुक्तं कर्तृत्वस्य कृतिरूपस्यात्मधर्मस्योत्पत्तौ आत्मनोप्युत्पत्यादिरूपविकारः स्यादिति । तन्न ॥ कर्तृत्वस्य कृतिरूपातिरिक्तधर्मत्वानंगीकारात् । मन आदिवृत्तिहेतुभूतात्मस्वरूपभूतशक्तिरेव कर्तृत्वं । तदनंगीकारे सुप्त्यनंतरं मनसः कर्तृत्वे न त्वदभिमतकृत्यात्मना अपरिणामात्तस्याकर्तुत्वापत्तेः । द्व्यणुकादिवत्केवलेश्वरकर्तृत्वांगीकारे यत्नमहंकरोमीत्यनुभवापलापापत्तेः । स्वरूपशक्तेश्चोत्पत्यादिशून्यत्वान्नतज्जननादिप्रयुक्तविकारशालित्वमात्मन इति न निर्विकारत्वश्रुतिविरोधः ॥

वस्तुतस्तु । जीवस्य कृत्याश्रयत्वेपि ज्ञानाश्रयत्व इव न द्रव्यांतरापत्तिरूपविकारापत्तिरिति चंद्रिकोक्त्या सिद्धांते आत्मनोभिन्नाभिन्ननीचोच्चतादिलक्षणविकाराभ्युपगमान्निर्विकारत्वश्रुतिरीश्वर एव मुख्या । जीवे तु यथासंभवमेवेति न कोपि दोषः । तादृशकर्तृत्वस्य विगलितनिखिलकल्पनारूपमोक्षेपि "सतत्रपर्येती"त्यादिना श्रूयमाणत्वान्न मन उपाधिकत्वं । सुषुप्तौ मनोनिष्टकृत्यनुकूलप्रेरणाया अभावेपि अनंदानुभवानुकूलाशक्तिरस्त्येवेति न तत्रापि कर्तृत्वसामान्याभाव इति न मनसः कर्तृत्वान्वयव्यतिरेकरूपयुक्त्यवकाशः । उक्तश्रुतेर्मोक्षपरत्वं त्वन्यत्रमोक्षनिरूपणप्रस्तावे व्यक्तं । निर्विशेषात्मस्वरूपपरत्वस्य श्रुतीनामन्यत्रापाकृतत्वात् । तादृशशक्तिरूपकर्तृत्वस्यात्मना सविशेषाभिन्नत्वात् । धर्मधर्मिभावादेर्व्यक्त्यादेश्चोपपत्तिः । नचात्रमानाभावः । "बलमानंदओजश्च सहोज्ञानमनाकुलं । स्वरूपाण्येव जीवस्य व्यज्यंते परमाद्विभो"रितिश्रुतौ बलशब्देन शक्तेरुक्तत्वात् । एतेन मम मनः पाठे प्रवर्तत इति प्रतीतिबलान्मनसोपि कर्तृत्वमित्यपास्तं ।

तत्प्रतीतेरेवाभावात् ॥ व्यपदेशमात्रस्य करणे कर्तृत्वोपचारेण संभवात् । अन्यथा मम हस्त एव करोति मम जिव्हैव ब्रवीतीत्यादिव्यपदेशाद्धस्तादीनामपि कर्तृत्वं स्यादविशेषात् । एवं मनः कर्तृ चैतन्यंच कर्त्रिति प्रतीत्यापत्तिरपिदुर्वारा । मनो न स्फुरणमित्यात्यंतिकभेदावगाह्यनुभवस्य त्वयैवांगीकृतत्वेन तत्सत्वे केनापि रूपेणात्ममनसोस्तादात्म्यभ्रमस्य देहतादात्म्यभंगावसरे दर्शितरीत्या असंभवेन मानाभावेनचानुपपत्तौ त्वदुक्तरीत्या सोपाधिकभ्रमत्वस्यायोगेन मनसोपि कर्तृत्वे कुसुमं रक्तं स्फटिकंच रक्तमिति प्रत्ययवैलक्षण्यस्योपपादयितुमशक्यत्वात् ।

यदप्यंतःकरणस्य भोक्तृत्वे इष्टापादनं । तदसारं ॥ सुखानुभवतादात्म्यमात्रादंतःकरणस्य भोक्तृत्वांगीकारे जडभूतांतःकरणतादात्म्यादात्मनोपि जडत्वापत्तेः । मनसः कर्तृत्वे मोक्षापत्तिरपि दुर्वारा ॥ तत्र मनसो नाशान्नमोक्ष इतित्वतिस्थवीयः । तावतापि सांगश्रवणादिरूपसाधनानुष्ठातुः फलाभावे तद्बोधकवेदाप्रामाण्यादेर्दुर्निवारत्वात् । न हि वेदेन कर्त्रनाशोपि सामग्रीघटकतया निरूपितः येन तदप्रामाण्यं न स्यात् । त्वदुक्तरीत्या भोक्तृत्वांगीकारवन्नित्यानुभवतादात्म्यादंतःकरणस्य नित्यताया अप्यवार्यत्वाच्च । शास्त्रस्य मोक्षफलकत्वाभाववचनंत्वतीव शोभते । शास्त्रस्य निष्प्रयोजनतायाः स्वत एवाभ्युपगतत्वेनानारंभणीयत्वस्यैवांगीकृतप्रायत्वात् । न च शास्त्रसाध्याखंडार्थज्ञानस्य मोक्षहेतुत्वादेव शास्त्रस्य सफलत्वमिति वाच्यं । स आप्तेति लौकिकवाक्याधीनाखंडसाक्षात्कारस्य मोक्षाहेतुत्वेन व्यभिचारात् । शास्त्रश्रवणाधीनविजातीयसाक्षात्कारस्य मोक्षहेतुत्वांगीकारे तस्य शास्त्रानुपजीविप्रमाणागम्यतया तदंशे तात्पर्यं दुर्वारमेव । अविद्यातत्कार्योच्छेदरूपमोक्षोप्यन्यनिष्टत्वेनैव प्रमित इत्यप्यसारं ।

प्रमाणेन प्रयोक्त्रन्यस्यैव फलं भवतीति प्रतिपादने कस्यापि तत्र प्रवृत्यनुदया पातात् । लोकानां साक्षात्परंपरयावा स्वफलसाधनत्वज्ञानेनैव प्रवृत्तेः । अत एव यत्राप्रयोक्तृगततया शास्त्रेण फलं प्रमीयते । तत्रापि प्रयोक्तुरिच्छाद्वारा प्रवृत्तिनिर्वाहाय पुत्रपूतत्वादिसाध्यस्वसंबंधिफलविशेषलाक्षणिकमेव पूतत्वादिबोधकं पदमवश्यं वाच्यं । अन्यथा तद्वाक्यस्याप्रवर्तकत्वापत्तेः । ननु सत्यमेतत् ॥ तथाप्यहमर्थस्य चिदचिदात्मकत्वादहमर्थगतत्वेन फलं प्रतीच्छाप्यात्मसंबंधिफलेच्छाभवत्येव । अतस्तन्मूलकप्रवृत्यादिरूपकर्तृत्वमहमर्थांतर्गते जडे अप्युपगम्यत इति चेन्न । कर्तृत्वस्य शक्तिरूपताया उक्तत्वात् । अहमर्थस्य चिदचिद्ग्रंथिरूपताया आकरे निराकृतत्वाच्च । अहमर्थस्य चिदचिद्ग्रंथित्वेपि मम मोक्षो भवत्वितीच्छाया विशिष्टसंबंधिफलविषयकत्वप्राप्त्या केवलात्मसंबंधिफलस्य तदविषयतया केवलात्मसंबंधिमोक्षस्य एतद्वयोविशिष्टस्य ममेदं भवत्वितीच्छावतस्तद्वयोऽतिक्रमोत्तरं जायमानफलस्येव पुरुषार्थत्वमेव न स्यात् । नहि मदघटकस्यात्मनो मोक्षो भवत्वितीच्छया लोके प्रवृत्तिरनुभूयते । किंतु तथेच्छायां स्वघटकस्य स्वात्मान्यत्वेनैव गृहीततया स्वीयफलांतरेच्छां विना प्रवृत्यभाव एव प्रसज्यते ॥

एतेन पित्रर्थत्वेन पुत्रपूतत्वेच्छया पितुः प्रवृत्तिवदात्मनोंतःकरणार्थत्वेनात्ममोक्षेच्छयांतःकरणस्य श्रवणादौ प्रवृत्तिरित्यपि प्रत्युक्तं । पूतत्ववत्पुत्रस्य पितृपारलौकिकसुखोपयोगितारूपतदर्थत्ववदात्मनस्तथाभावस्य वक्तुमशक्यत्वात् । प्रत्युतांतःकरणलयस्यैवात्ममोक्षत्वेन तस्यानर्थरूपताया एव वक्तव्यत्वाच्च ॥

एतेन स्वसंबंधित्वेन यत्र यस्य द्वेषस्तस्य स्वसंबंधित्वेन तदभावेच्छेति नियमः। ममेदं मास्त्विति द्वेषादेव तदभावोस्त्वितीच्छानुभवात्। तथा च कर्तृ

त्वादिकं स्वसंबंधित्वेन द्विषता तदभावस्येष्यमाणत्वात्कर्तृत्वादिबंधाभावश्चिन्निष्ट एव युक्तः । नतु बुद्धिनिष्टतयाऽपादनार्हइत्यपि प्रत्युक्तं । ममानर्थो मास्त्विति द्वेषस्य तदभावोस्त्विवतीच्छायाश्च त्वन्मते चिदचिद्ग्रंथिविषयकत्व स्यैव सत्वेन तत्परित्यागेनानर्थाभावस्य चिन्निष्टत्वांगीकारे बुद्धिनिष्टत्वापादन स्येष्टत्वात् । एवमधिकसत्तादिघटनया सोपाधिकत्वपरिष्करणं त्वधिकसत्ता देर्निरस्तत्वादेव निरस्तप्रायं ॥

यदप्युपलब्धिंप्रति वृत्तिद्वाराहेतुत्वरूपकारणत्वेपि मनसः क्रियांतरं प्रति कर्तृत्वे बाधकाभाव इति । तदप्यसत् ॥ जानातीच्छति करोतीति प्रमा बलेन कर्तृत्वस्य ज्ञानेच्छासमानाधिकरणस्यैव प्रतीतेर्मनसो ज्ञातृत्वाभा वेपि कर्तृत्वमित्यस्यांगीकर्तुमनुचितत्वात् । मनस एव ज्ञातृत्वांगीकारेतु तत्करणत्वविरोध एव । "विज्ञानं यज्ञं तनुते" इति वचनंतु न बुद्धि मन आदि शब्दवाच्यजडपरं । परंतु ब्रह्मपरमेव । "विज्ञानं ब्रह्मचेद्वेद तस्माच्चेन्नप्रमाद्यति । शरीरे पाप्मनो हित्वा सर्वान्कामान्समश्नुते" इति तद्विषयत्वेनोदाहृतवाक्यशेषोक्तमोक्षहेतुज्ञानविषयत्वरूपलिंगबाधात् । नच स्ववाक्योक्तयज्ञादिकर्तृत्वस्य ब्रह्मणि बाधान्नब्रह्मपरमिदं वाक्यं । वाक्यशेष स्त्वन्नंब्रह्मेत्यादिवाक्यवद्विज्ञानादौ ब्रह्मविदाप्नोति परमितिवाक्योक्तशुद्धब्रह्मोपा स्तिपर इति वाच्यं । ब्रह्मणो निर्विशेषत्वस्यापाकृतत्वेन "सहि सर्वस्य कर्ते" ति वाक्यबलेनेश्वर एव कर्तृत्वस्य मुख्यतया "विज्ञानं यज्ञंतनुते" इत्य स्य ब्रह्मपरत्वे बाधकाभावात् । मिथ्योपासनापक्षस्य निराकृतत्वेनाब्रह्मणि विज्ञाने ब्रह्मत्वोपासनाविधानायोगेन वाक्यशेषस्य तत्परत्वायोगाच्च । "अन्नं ब्रह्मे" त्यादावन्नपदार्थस्य ब्रह्मत्वेनांगीकारात् दृष्टांतोप्यसंगतः । नचा न्नस्य ब्रह्मत्वे औषधिजन्यत्वविरोधः । औषध्यंतर्गतेश्वररूपेणान्नांतर्गतभ

गवद्रूपस्य तद्वाक्येनाभिव्यक्त्यादिव्युत्पादनेनैतद्दोषस्याकरे परिहृतत्वात् ।
नच "ध्यायतीवे"त्यादिश्रुताविव शब्दश्रवणेन कर्तृत्वाभावस्यैव प्रतीतेः "तत्रै
वं सति कर्तारमात्मानं केवलंतु यः । पश्यत्यकृतबुद्धित्वान्नस पश्यति दुर्मे
तिं"रित्यादिस्मृत्या अधिष्ठानं तथाकर्तेत्यादिपूर्वोक्तानां पंचानां पंचैते तस्य हे
तव इति क्रियासमान्ये हेतुत्वमभिधाय एवं सति केवलं कर्तृत्वादिशून्यमा
त्मानं कर्तारं पश्यतीत्याद्यर्थपरतया आत्मनः कर्तृत्वस्य निंदितत्वाच्च नात्मनः
कर्तृत्वमिति वाच्यं । परतंत्रप्रभौ प्रभुरिवेतिवत्तथाव्यवहारस्य पराधीन
कर्तृत्वेनोपपत्तेः । "इवोपमायां स्वल्पत्वे"इति कोशे इवशब्दस्याल्पार्थक
त्वस्योक्तत्वात् । अल्पत्वस्य पारतंत्र्यरूपत्वात् नच सादृश्यरूपमुख्यार्थ
त्यागे हेत्वभावः । उभयत्राप्यनुशासनस्य तुल्यतया तत्रैकस्य मुख्यत्वम
न्यस्यामुख्यत्वमित्यत्र नियामकाभावात् । नच सादृश्यस्य मुख्यत्वे तत्रैव
शब्दस्य प्रचुरप्रयोग एव नियामकः । शक्तेरेव मुख्यत्वेन तत्र कोशब
लाच्छक्तिसिध्या मुख्यत्वस्यानपायात् । अन्यथा प्रसिद्धनानार्थकपदो
च्छेदापत्तेः । शास्त्रे तत्रापि प्रचुरप्रयोगस्य सत्वाच्च । मुक्तावप्या
त्मनां कर्तृत्वप्रतिपादकश्रुतिबलात्केवलात्मनः कर्तृत्वसिद्धिरूपबाधकस्य सत्वा
च्च । एवं गीतावाक्यमपि न भवदभिमतार्थसाधकं । किंतु तद्विरोध्येव ।
तथाहि ॥ "अधिष्टानं तथा कर्ता करणं च पृथग्विधं । विविधाश्च
पृथक् चेष्टा दैवंचैवात्र पंचमं । शरीरवाङ्मनोभिर्यत्कर्मप्रारभते नरः । न्याय्यं
वा विपरीतं वा पंचैते तस्य हेतवः । तत्रैवं सति कर्तारमात्मानं केवलंतु
य"इत्यत्र केवलं कर्तृत्वरहितमात्मानं कर्तारं पश्यतीत्यर्थांगीकारे एवंसतीत्यस्या
संगतिः स्फुटैव । यतआत्मानं केवलं कर्तारं यः पश्यति स दुर्मतिरित्यु
क्तस्य तादृशज्ञानभ्रमत्वस्योपपादनाय पूर्वसंदर्भे विषयबाधं वस्तुस्थितिकथनेनो

पपाद्य तत्रैवंसतीत्यादिना सोनूद्यते । नहि पूर्ववाक्ये आत्मनः कर्तृत्वा भावो निरूपितः । किंत्वधिष्टानादिपंचकस्य मिलितस्यैव फलोपधायकत्वं निरूपितं । हेतुपदस्य फलोपधायकपरत्वात् । कर्तृत्वकरणत्वादीनां कारणत्वगर्भिततया तदवच्छिन्ने स्वरूपयोग्यतारूपकारणत्वविधानायोगेन कारणत्वावच्छिन्नपरत्वायोगात् । किंच लोकानां सहजसिद्धं ज्ञानमनूद्य तस्य भ्रमत्वमनेन कथ्यते । नहि शुद्धात्मनि कर्तृत्वप्रत्ययो भवत्पक्षेऽस्ति । अहंकरोमीत्यादिप्रतीतेश्चिदचिद्ग्रंथिरूपाहंकारविषकत्वांगीकारात् । तादृशभ्रमस्यापि शुद्धात्मनि कर्तृत्वाध्यासरूपत्वांगीकारे दुर्मतिरित्युक्तभ्रमत्वमयुक्तमेव । यावद्ब्रह्मप्रमामनुवर्त्तमानत्वेन ब्रह्मज्ञानेतराबाध्यत्वात् । पारमार्थिकान्यविषयकत्वमात्रेण भ्रमत्वांगीकारे अधिष्टानादिपंचकहेतुत्वादिज्ञानस्यापि तथात्वावर्जनेन तादृशज्ञानस्य प्रमात्वाभिसंधिना एवंसतीत्युक्तेरसांगत्यापत्तेः ॥

किंच मनस एव त्वद्रीत्या कर्तृत्वे शरीरवाङ्मनोभिरिति शरीरादिसमकक्षतया क्रियासामान्यकरणत्वनिर्देशानुपपत्तिः । कर्तुः पृथक् निर्देशानुपपत्तिश्च नहि कर्तृभूतमनोतिरिक्तं क्रियासामान्यकरणीभूतं किंचिन्मनोस्तीत्यत्र मानमुपलभ्यते । येनेदं कथंचित्संगतं स्यात् । अपिच त्वया तत्रेत्यत्र तच्छब्देन कर्मणः परामर्शः सप्तम्यास्तु निरूपितत्वमर्थः कर्तृपदार्थैकदेशभूतकर्तृत्वेनसहान्वय इतिवा वाच्यं । तत्र क्रियासामान्ये एवं सति एवं भूते सति केवलं कर्तृत्वरहितमात्मनं कर्तारं वेत्तीत्यर्थोवा वाच्यः । तत्राद्ये एकदेशान्वयादिदोषः स्फुटः । द्वितीयेप्यात्मान्यस्यैव कर्तृत्वस्यानुक्तत्वात्कर्तारमिति सामान्यत एवोक्तत्वाच्चात्मकर्तृत्वज्ञानिनो दुर्मतित्वे एवंसतीत्यस्योपष्टंभकत्वासंगतिः । तच्छब्दस्य पूर्वोक्ताधिष्टानादिपंचकरत्वं घटकत्वं सप्तम्यर्थ इत्यंगीकारे आत्मनः पूर्वोक्तपंचकानंतर्गतत्वेनात्मनि तदन्वयस्य बाधि

तत्वादन्यत्र तदन्वयस्याप्रसक्तिः । तस्मात्कर्तारमात्मानं स्वं केवलं इतरा साहित्येनफलोपधायकं वेदेति वा केवलमितरासहितमात्मानं कर्तारं फलनिष्पाद्कं यो वेदेतिवा अर्थ एव वर्णनीयः । प्रथमव्याख्याने बुद्धिस्थत्वेन सिद्धत्वात्केवलं हेतुमिति नोक्तं । द्वितीयेतु स्वातंत्र्यगर्भितार्थकर्तृपदस्य मुख्यस्वातंत्र्यघटितार्थकत्वे फलनिष्पादकत्व एव पर्यवसानं भवतीति न कुत्रा प्यस्वारस्यं । भाष्ये कर्तृपदेनेश्वरोक्तावपि तात्पर्यं जीवस्याभिप्रेतत्वान्न विरोधः । एवं "अहंकारविमूढात्मा कर्ताहमिति मन्यते" इति वाक्यांत रमपि जीवस्य मुख्यस्वातंत्र्यनिषेधकमिति न तद्विरोधोपि ॥

यत्तु "मनसावाऽग्रेसं कल्पयति" इत्यादौ मनसः करणत्वं श्रूयते । तत्र विद्यमानमनःपदस्य मनोगतसंकल्पसामग्रीपरत्वस्य तदुपहितमनःपरत्वस्य चांगीकारात् । अन्यथा शुद्धमनसः "कामःसंकल्प" इत्यादिना संकल्पंप्र त्युपादानत्वबोधनेन कणत्वस्य बाधितत्वापत्तेरिति । तन्न ॥ तथात्वे उपलब्धिप्रत्यपि मनसः करणत्वस्य त्वदभ्युपगतस्यायुक्ततापत्तेः । तस्या मेव श्रुतौ धीपदस्य ज्ञानसामान्यपरत्वेनोपलब्धि प्रत्यपि मनस उपादानत्वो क्तेः । वृत्तिद्वाराभग्नावरणचिदेवोपलब्धिः । तत्करणत्वंच वृत्तिद्वारात द्धेतुत्वंचेत् । वृत्त्युपादानस्य मनसः संकल्पादिवृत्तिंप्रति कर्तृभूतजीवाधीन व्यापारवत्वेन संकल्पादिहेतुतया तत्करणत्वे न काचित्क्षतिः । उपादानस्या पि मृदादेः कारणत्वदर्शनात् । अन्यथा चैत्रः कपालेन घटं करोतीत्यत्र तृतीयानुपपत्तेः । ननु घटं प्रत्येव कपालस्योपादानत्वं कृञर्थव्यापारंप्रतितु करणत्वमेवेतिचेदिहापि मनसावाग्रेसंकल्पयतीत्यत्र धात्वर्थव्यापारे आत्मनःकर्तृ त्वं संकल्पाद्युपादानस्य मनसस्तु करणत्वमस्तु । का क्षतिः ॥ जीवेपि मनःपरिणामभूतशक्त्याविर्भावरूपव्यापारसंभवात् ॥

"एवं मनउदत्क्रामत्मीलितइवाश्नन्खादन्पिबन्नास्ते"इतिश्रुत्या मनसोऽभावकालेप्यात्मनः कर्तृत्वश्रवणाच्चात्मन एव कर्तृत्वं । नच जनकत्वेनाभिमतस्यांतःकरणस्याभावे कृतेरुत्पत्ययोगात्तद्वाक्यं प्रजापतिवपोत्खननवाक्यवद्बाधितार्थकत्वात्कथंचिद्गौणार्थतया नेयमिति वाच्यं । मनसोऽभावेप्यात्मस्वरूपभूताविर्भूतव्यापाररूपकर्तृत्वस्यात्मनि संभवेन बाधितार्थकत्वाप्रसक्तेः । नच"मनोहोच्चक्रामत् तत्संवत्सरं प्रोष्यागत्योवाचेत्या"दीनां तत्प्रकरणगतवाक्यानां बाधितार्थत्वमवर्जनीयमेव । जडस्य स्वतोगमनादेरनुपपत्तेरिति वाच्यं । अभिमान्यधिकरणन्यायेन सर्वसामंजस्यात् । अभिमन्यमानेनसहैवाभिमानिनो गमनादिबोधनात्प्रकृतार्थसाधकत्वमुक्तश्रुतेरक्षुण्णं । एवं सुप्तौ मनसो लयेप्यात्मनः श्वासादिकर्तृत्वदर्शनाच्चात्मनः स्वतः कर्तृत्वं । नच दृष्टिसृष्टिपक्षे तदा तदीयदेहेंद्रियादेः सर्वस्य विलीनतया तस्य तदा श्वासादिकर्तृत्वं नास्त्येव । जाग्रतामन्योषांतु भ्रांत्या प्रतीयते । यद्वा ज्ञानविशिष्टमंतःकरणं मन इति क्रियाविशिष्टंच प्राण इत्यभिधीयते । एवं च सुषुप्तौ ज्ञानशक्तिविशिष्टस्य लयेपि क्रियाशक्तिविशिष्टस्य लयाभावान्नश्वासादिकर्तृत्वानुपपत्तिरिति वाच्यं । दृष्टिसृष्टिपक्षस्याग्रे निरसिष्यमाणत्वात् । तत्पक्षेपि सुप्ते मनोलयवत्येव पुरुषे पुरुषांतरैरयंविलीनमनआदिमान्सुप्तः श्वसति चलतीति श्वासादिकर्तृत्वस्य कल्पितत्वेन तादृशकर्तृत्वस्य तदीयजाग्रत्कालीनकर्तृत्वस्येव ब्रह्मज्ञानेतराबाध्यत्वेन मनोभिन्नस्यात्मन एव श्वासादिकर्तृत्वापरिहारात् । अन्यथांधपुरुषीयशरीरतदीयगौरकृष्णवर्णादीनामन्यपुरुषकल्पितानामपि प्रातिभासिकतया शुक्तिरजततुल्यतापत्तेः । अंतःकरणद्वैविध्ये मानाभावादेव द्वितीयसमाधानमप्ययुक्तं । एवमद्वैतसिद्ध्याद्युक्तस्यान्यस्यापि दूषणाभासस्य निरसनमूह्यमित्यलं पल्लवि

तेन । तस्मादहंकारास्पदस्य जीवस्यैव स्वत एव कर्तृत्वं स्थितमिति न तत्रांतःकरणतादात्म्याध्यसस्यावश्यकतेति नांतःकरणतादात्म्यापन्नत्वं जीवस्य । ततश्च तस्यापि शुद्धशब्दार्थत्वापातइत्यलं प्रासंगिकविषयचिंतया ॥

एवं त्वन्मते तादात्म्यमपि दुर्वचं । विकल्पासहत्वात् ॥ तथा हि ॥ किं तत्तादात्म्यं ज्ञानज्ञेययोराध्यासिकः संबंध इति त्वत्प्रक्रियानुरोधेन विषयताविशेषः । भेदाभेदोभयरूपंवा - भेदाभेदोभयनिर्वाह्यातिरिक्तसंबंधविशेषोवा । नाद्यः । तथाहि ॥ किं सर्वत्र तादात्म्यं विषयता - उत जडनिष्ठचित्तादात्म्यं । आद्ये नीलघटयोरपि तादात्म्यस्य सत्वेन घटस्य नीलविषयत्वं - नीलस्य घटविषयकत्वंच स्यात् । नचेष्टापत्तिः ॥ घटं नीलो विषयी करोतीति प्रयोगप्रत्यययोरापत्तेः नच प्रकाशस्वभावप्रतियोगिकमेव तादात्म्यं तथेति वाच्यं । सविषयकत्वातिरिक्तप्रकाशस्वभावत्वस्यैव दुर्निरूपत्वात् । अविद्याविरोधित्वं प्रकाशस्वभावत्वमिति चेत्तर्हि चितस्तत्साधकत्वेन तत्संबंधस्य विषयतारूपत्वानुपपत्तिः । वृत्तिसाहित्येन तथात्वे वृत्तेरपि तथात्वेन तत्तादात्म्यापन्नांतःकरणादेरपि वृत्तिविषयत्वापत्या अयं घट इति ज्ञानोत्तरमियं वृत्तिरंतःकरणं विषयीकरोतीति प्रत्ययापत्तेः । अविद्यायाः प्रकाशविरोधिन्यास्तत्स्वभावत्वाभावेन चिन्निष्टतत्तादात्म्यस्याविषयतारूपत्वापातेनाविद्यायाश्चिद्विषयकत्वाभावापातश्च । नच तस्याआकाराख्यविषयतैव चिति स्वीक्रियते । ज्ञानाज्ञानयोः समानविषयकत्वेन निवर्त्यनिवर्तकभावाभ्युपगमात । अन्यथा वृत्तिविषयतायास्तादात्म्यरूपत्वे तस्यांतःकरणादिनिष्टत्वेन चरमवृत्तेर्मिथ्यार्थविषयकत्वप्राप्त्याप्रपंचनिवर्तकत्वानुपपत्तेरिति वाच्यं । तथात्वे अज्ञानस्य चिद्विषयकत्वसिद्धये तत्र तत्तादात्म्याभ्युपगमस्य निर्बीजत्वापातात् । नच तत्प्रकाशार्थं तत्संबंधसि

द्धये तादात्म्याभ्युपगम इति वाच्यं । लौकिकप्रकाशस्य घटादिसंयुक्तस्यै व भासकत्वेनाज्ञानसाक्षिणोरपिसंयोगस्यैवोचितत्वात् । "असंगोह्ययं पुरुष" इतिश्रुत्या साक्षिचैतन्यस्यासंगत्वप्रतिपादनात्कथं संयोगाभ्युपगम इति चेत् तादात्म्यांगीकारेपि कथं श्रुतेर्नबाधः । तस्यापि संबंधत्वाविशेषात् । नापि चिन्निरूपितं जडनिष्ठतादात्म्यं विषयतेति द्वितीयः पक्षः । नीलो घट इतिवत् ज्ञानं घट इति व्यवहारापत्तेः । नचेष्टापत्तिः "सर्वं खल्विदं ब्रह्मेति" श्रुत्या सर्वस्यापि ब्रह्मरूपज्ञानतादात्म्यस्य व्यवहृतत्वादिति वाच्यं । उक्तव्यवहारस्य विषयविषयिभावरूपतादात्म्यालंबनत्वे चैत्रस्य घटज्ञानोत्पत्त्यनंतरं स्वज्ञानस्य घटविषयकत्वबोधनाय मम ज्ञानं घट इति व्यवहारप्रसंगात् । घटस्य ज्ञानं मय्यस्तीति व्यवहारविलयापाताच्च । नहि नीलघटयोस्तादात्म्यबोधनाय नीलस्य घट इति व्यवहर्तारो भवंति । नचोक्तव्यवहारेषु ज्ञानपदेन वृत्तेरेव विवक्षणात् तस्यांचघटादितादात्म्यबाधात् आकाराख्यविषयताबोधनाय षष्ठीप्रयोग इतिसांप्रतं । वृत्तेर्जानातिवाच्यतावच्छेदकघटकत्वेन चित एव तद्वाच्यत्वांगीकारेण भावे ल्युडंत ज्ञानपदेन चित एव बोधनात् ॥

किंच तादात्म्यस्य विषयतारूपत्वे चैत्रीयज्ञानमस्तीति वाक्यं श्रुण्वतश्चैत्रीयतादात्म्ये ज्ञाने ज्ञाते सति चैत्रीयं ज्ञानं किंविषयकमिति जिज्ञासा घटस्येत्याद्युत्तरंच नस्यात् । चैत्रीयलक्षणविषयस्य गृहीतत्वात् । ननु वृत्तिसुखादिनिष्ठप्रतिबिंबप्रयोजकं यन्मनोमायान्यतरावच्छिन्नं चैतन्यं तत्तादात्म्यापन्नचिद्वा असत्वापादकाज्ञानविषयत्वाभावप्रयोजक विशिष्टं यन्मनोमायान्यतरावच्छिन्नं चैतन्यं तत्तादात्म्यापन्नचिद्वा ज्ञानमित्युच्यते । घटं जानातीत्यत्र प्रथमकल्पे तादात्म्यसंसर्गावच्छिन्नमाधेयत्वं प्रतिबिंबे द्वितीयकल्पेच अवच्छेदकत्वस्वरूपान्यतरसंबंधावच्छिन्नमाधेयत्वं कर्मविभक्त्यर्थीभूतं अज्ञानवि

षयत्वाभावेऽन्वेति । घटस्य ज्ञानमिति कर्मणि षष्ठीस्थलेप्येवमेव । तथा च चैत्रीयज्ञानमितिवाक्यात् ज्ञाने चैत्रीयपदार्थतादात्म्यभानेपि ज्ञानपदार्थघट कीभूत फलाश्रयजिज्ञासानिवृत्यभावात् कस्येति प्रश्नो घटस्येत्युत्तरंच संग च्छते । अत एव नीलो घट इति तयोस्तादात्म्यज्ञानानंतरं नीलं विषयी करोति घट इति व्यवहारापत्तिरपि परास्ता । तन्निष्ठोक्तफलप्रयोजकस्य तादृशवाक्येन बोधनीयतया नीलतादात्म्यभानेप्युक्तव्यवहारविषयीभूतस्य धर्मस्याभानात् । तस्मान्नकोपि दोष इति चेन्न । एवं सति गत्यादि स्थल इव क्रियाजन्यफलशालित्वमात्रेण घटादेर्विषयत्वप्राप्त्या ज्ञानज्ञेययोस्ता दात्म्यरूपयिषयविषयिभावासिद्धिप्रसंगात् । घटं जानामीति प्रत्यक्षस्या पि अभिलापकतादृशवाक्यसमानविषयकत्वात् । नच घटंजानामीत्यादौ द्वितीयार्थस्तादात्म्यं तच्च साक्षादेवज्ञानेऽन्वेतीत्युक्तार्थसिद्धिरिति वाच्यं । तत्रमानाभावात् ॥ आग्रहकरणे घटंजानाति चैत्र इति वाक्याद्बोधे जाते ज्ञानं घटो नेति व्यवहारानुपपत्तिः । ज्ञानं घट इति व्यवहारापत्तिश्च । नच विलक्षणतादात्म्यमेवोक्तव्यवहारनिर्वाहकं प्रकृततादात्म्यंतु नतादृशमिति वाच्यं । उक्तव्यवहारानिर्वाहकस्य तादात्म्यत्वोक्तेः संकेतमात्रत्वापत्तेः । अधिकभानेपि घटज्ञानयोस्तादात्म्यभानस्यानपायात् । नच तादात्म्यं विषयतात्वेनैव द्वितीयार्थो नतु तादात्म्यत्वेनातोज्ञानविषययोस्तादात्म्यत्वविशिष्ट स्याग्रहणान्नोक्तदोष इति चेन्न । तादात्म्यत्वातिरिक्तानां विशेष्यतात्वप्र कारतात्वाद्यखंडधर्माणां त्वयैवानंगीकृतत्वात् । अंगीकारेवा तद्धर्ममात्रेषु तादात्म्यत्वसद्भावे मानाभावात् । उक्तप्रत्ययेन तत्र तादात्म्यत्वानवगा हनात् । तादृशप्रत्ययांतरस्याभावाच्च । नच "सर्वं खल्विदं ब्रह्मे" ति श्रुत्या ब्रह्मजगतोस्तादात्म्यबोधनात्तत्र विषयतात्वधर्माभ्युपेयत इति

वाच्यं । अस्याभेदे सामानाधिकरण्यस्य त्वत्प्राचीनैरनंगीकृतत्वेन यः स्थाणुः स पुरुष इत्यादाविव बाधायां सामानाधिकरण्यस्यैवांगीकारेणोक्त श्रुत्या ब्रह्मजगतोस्तादात्म्यस्यैवासिद्धेः । यदि च विवरणादिरीत्या श्रुते स्तादात्म्यावोधकत्वमभ्युपेयते । तदेदं विषयतात्वं किं स्वस्य तादात्म्या तिरिक्ताश्रयानुपपत्या तादात्म्ये कल्प्यते । एवमेव वा ॥ नाद्यः ॥ आकारत्वेन त्वया व्यवह्रियमाणविषयतासु तद्धर्मकल्पनाया आवश्यकतया तादात्म्येपि तत्कल्पने गौरवात् । नच घटं जानामीति प्रत्यये विषयता त्वेन तादात्म्यभानस्यैवांगीकारादाकारतासु कुतो विषयतात्वस्वीकार इति शंक्यं । चरमवृत्तेर्ब्रह्मविषयकत्वव्यवहारविलोपप्रसंगात् । शशविषाण मस्तीति वाक्याधीनविकल्पस्यासद्विषयकत्वव्यवहाराभावप्रसंगाच्च । असति तादात्म्यानंगीकारात् । बाधग्रहे शुक्तिरजतोच्छेदानंतरं तदीयसूक्ष्मावस्था या अप्यभावेन चित्तादात्म्यायोगात्तत्राकाराख्यविषयतयैव तज्ज्ञाने सविषय कत्वव्यवहारस्य निर्वाह्यत्वाच्च । न द्वितीयः । घटादावपि तत्कल्पना पातात् । नच चिद्रूपज्ञानस्या वश्यं विषयेण विषयस्यच तेन संबंधोऽपे क्षितः । तन्निर्वाहाय चिन्निरूपिताकाराख्यविषयतानां नानाविषयेष्वनंत तानां कल्पने गौरवात् श्रुतिसिद्धेषु चित्प्रतियोगिकत्वेन घटाद्यनुयोगिकत्वे नच क्लृप्ततादात्म्येषु विषयतात्वं स्वीक्रियते । न घटादौ तेषां चित्प्रति योगिकत्वादिना क्लृप्तत्वाभावादिति वाच्यं । तादात्म्यनिर्वाहकयोर्भेदाभे दयोश्चित्प्रतियोगिकत्वादिना क्लृप्तयोर्वातत्कल्प्यं तादात्म्यएववेत्यत्र नियामका भावात् । अन्यत्र क्लृप्ताकाराख्यविषयताया एव बलात्सिद्धेश्च । नच साक्षिणः सुखादि विषयकत्वनिर्वाहाय तादात्म्यमपि विषयतारूपत्वेन क्लृप्तमि ति वाच्यं । साक्षिणो निर्विकारस्यांतःकरणपरिणामरूपसुखादितादात्म्या

योगात् । सौरालोक घटरूपादीनामिव संयोगादिघटितसंबंधांतरस्यैव भास्‌कत्वौचित्येन तादात्म्यस्य क्लृप्तत्वासंमतेः । किंच ज्ञानस्य विषयसंबंधो विषयतारूप आवश्यक इति नियममभ्युपगम्य चिद्रूपज्ञाने तन्निर्वाहाय तादात्म्ये विषयतात्वं यः कल्पयति स कीदृशविषयताया ज्ञानसंबंधत्वनियमं गृण्हाति न तावत्तादात्म्यस्य । तस्य चिदतिरिक्तस्थले विषयतात्वेन भानस्यासिद्धत्वात् । अन्यत्रापि क्लृप्तत्वे प्रकृते तथैव सिध्या तत्साधनप्रयासवैफल्यापत्तेः । आकाराख्यविषयतानिरूपितत्वज्ञानत्वयोः सहचारग्रहाद्व्याप्तिंगृण्हन् तन्निर्वाहाय प्रकृते तादात्म्ये विषयतात्वमात्रकल्पनया कथं कृतार्थः स्यात् । अन्यथा धूमाग्न्योर्व्याप्तिग्रहात्पर्वते धूमे न वन्हिमनुमाय पर्वते क्लृप्ततृणादावेव वन्हित्वं परिकल्प्य कृतार्थः स्यादविशेषात् । तस्मात्साधकाभावात् बाधकभावाच्च तादात्म्यस्य दृग्दृश्यसंबंधरूपविषयतात्वकल्पनमश्रद्धेयमेवेति संक्षेपः ॥

नापि भेदाभेदोभयरूपं तादात्म्यमिति द्वितीयः पक्षः । तद्ग्रहयोः परस्परप्रतिबंधकत्वेन युगपदेकत्र भेदाभेदोभयग्रहणस्यानुपपन्नत्वात् । नचैवं"सामानाधिकरण्यप्रत्यये भेदाभेदौ चकास्त"इति भामतीविरोधः । भेदाभेदयोस्संसर्गतया भानस्यैव तदभिप्रेतत्वात् । प्रकारतया तदुभयभानस्यैवानुपपन्नत्वादिति वाच्यं । अद्वैतचंद्रिकायां"भेदाभेदयोर्द्वयोरपि सामानाधिकरण्यप्रतीतौ संबंधत्वमितिच दुर्वचं भेदसंबंधेन तद्विशिष्टबुद्धेरभेदसंबंधेन तद्विशिष्टबुद्धेश्च परस्परविरोधेन तदसंभवा"दित्यादिनाग्रंथेन तत्पक्षप्रतिषेधपूर्वकं भेदसमानाधिकरणाभेदस्य संबंधत्वोपगमात् । नचैतदपि युक्तं । अस्य साक्षात्संबंधत्वे संबंधतावच्छेदकीभूतभेदस्य विशेषणप्रतियोगिकत्वानपेक्षणाद्वस्त्वंतरभेदसमानाधिकरणस्वाभेदमादायात्यंताभेदेपि घटो घट इति प्रती

त्यापत्तेः । परंपरासंबंधत्वेचाभेदस्य विशेषणप्रतियोगित्वानपेक्षणात्स्वभेदस मानाधिकरणपटाद्यभेदमादायपटो घट इत्यादि प्रतीत्यापत्तेः । तत्तद्भेदसमा नाधिकरणतत्तदभेदस्यसंबंधत्वेचाननुगमात् । भेदसमानधिकरणाभेदस्य सा क्षात्परंपरासंबंधत्वस्य कथं चिदुपपत्तावपि सामानाधिकरण्यप्रतीतौ भेदभानस्या प्रामाणिकत्वात् । सिद्धांतेतु अयावद्द्रव्यभाविगुणगुण्यादिस्थले सामाना धिकरण्यप्रतीतौ समसत्ताकयोर्भेदाभेदयोर्विशेषबलाद्भानिर्वाहः । अत्यंता भेदस्थलेपि घटो घट इत्यादि प्रात्यक्षिकप्रतीतेः निर्वन्हिः वन्हिमान् वन्हि मान् निर्वन्हिः इत्यादौ वन्ह्यभाववन्निर्वन्हेः वन्हिमद्वन्हिमतश्च बाधस्य दोषत्वनिर्वाहाय निर्वन्हिःवन्ह्यभाववान् वन्हिमान् वन्हिमान् इत्यादि प्रतीतेश्चोपपादितत्वात् । शाब्दप्रतीतेस्तु शब्दसामर्थ्याभावादेवानुद यात् । अत एवोद्देश्यतावच्छेदकविधेययोरभेदे पचन्पचतीत्यादौ न शाब्द धीरित्युक्तं ॥

यदत्रोक्तमद्वैतचंद्रिकाद्वये ॥ तद्घटभूतलसंयोगस्य तद्घटे सत्वेपि तद्घटस्तद्घटवानित्यादिप्रमानुदयात्सर्वत्र विशिष्टबुद्धौ विशेषणभेदसमानाधि करणसंबंधः संसर्गमर्यादया भासते । नच तद्घटसंयोगस्य तद्घटभिन्नेपि सत्वादुक्तदोषः । विशेषणभेदवद्वृत्तित्वविशिष्टसंयोगादेरेव संबंधत्वोपगमा त् । तादृशस्यच संयोगादेस्तद्घटेबाधादिति । तन्न ॥ तद्घटभेद वद्वृत्तित्वविशिष्टस्यापि संयोगस्य प्रतियोगितया तद्घटे सत्वेन तद्घस्तद्घट वानिति प्रमापत्तेर्दुर्वारत्वात । यदि च तादृशसंयोगः स्वानुयोगिन्येव स्वप्र तियोगिनः संबंधो नतु स्वप्रतियोगिनीति नियमान्नोक्तापत्तिरित्युच्यते । तदाव्यर्थं भेदस्य संबंधमध्ये प्रवेशनं । तद्घटप्रतियोगिकसंयोगानुयोगित्व स्य तद्घटे अभावादेव तत्र तस्य संबंधत्वानुपपत्तेः ॥

यदपि ॥ एवमपि तद्घटस्तद्घटवानित्यादिज्ञानस्य प्रमात्वापत्तिर निवार्यैव । उक्तप्रतियोगित्वानुयोगित्वयोर्विशिष्टबुद्धिविषयत्वे मानाभावात् । विशेष्यविशेषणसंबंधानांचाबाधितत्वादिति । तदपि न ॥ भेदस्य विशिष्टबुद्धिविषयत्वे मानाभावादित्यादेस्त्वन्मतेपि तुल्यत्वात् । एतदनुरोधेनैव तत्कल्पने प्रतियोगित्वादेरपि तत्कल्पन संभवात् । वस्तुतस्तु ॥ विशेष्ये विशेषणस्य विशेषणतावच्छेदकसंबंधेनाभाव एव विषयबाधपदार्थः । स च तद्घटस्तद्घटवानित्यादावक्षत एव । तद्घटे संयोगेन तद्घटो नास्तीति प्रतीतेः । तत्प्रतियोगिकसंयोगानुयोगिन्येव तदभावानभ्युपगमात् । यदपि संयोगीयप्रतियोगित्वानुयोगित्वयोरप्रामाणिकत्वात्संयोगः समवायेन स्वाश्रये स्वाश्रयस्य संबंध इति वक्तव्यं । तथाच तद्घटस्य तद्घटसंयोगाश्रयत्वात्तद्घटस्तद्घटवानितिप्रतीतिवारणाय भेदवद्वृत्तित्वविशिष्टसंयोगादेः संबंधत्वमावश्यकमिति । तदपि न ॥ तद्घटस्यापि प्रतियोगितया तद्घटभेदवत्वेनोक्तप्रतीतेदुर्निवारत्वात् । अनुयोगितया भेदवत्वोक्तावपि तादृशानुयोगितायाः कालिकादिसंबंधेन तद्घटेसत्वात् । अनुयोगितादिकंदैशिकविशेषणतासंबंधेन स्वाश्रय एव संबंध इत्युक्तावपि तदीयदैशिकसंबंधस्यापि कालिकसंबंधेन तद्घटेसत्वात् । यदि तु अनुभवानुरोधेनानुयोगित्वादिकं तद्भिन्न एव तद्भेदस्य संबंध इति न तद्घटभेदवत्वं । तर्हि संयोगोपि तद्भिन्न एव तस्य संबंध इति भेदनिवेशनमनर्थकमेव । तत्र षष्ठीसप्तमीभ्यामुल्लिखिते एव प्रतियोगित्वानुयोगित्वे ॥

किंच विशिष्टबुद्धौ भेदोभेदत्वेनैव भासते किंवा विशेषणतावच्छेदकावच्छिन्नप्रतियोगिताकत्वविशेष्यतावच्छेदकावच्छिन्नानुयोगिकत्वाभ्यामपि । नाद्यः ॥ घटेपि घटत्वद्रव्यत्वाभ्यां भेदसत्वेन घटो घटः तद्घटस्तद्घटवा-

निति वादिनं प्रति घटाभवस्तद्वानिति प्रतिज्ञायामर्थांतरापाताच्च ॥

यदप्युभयत्रोक्तं ॥ वेदांतदर्शने व्यवहारदशायामेव गुणगुण्यादिभेदस्य विचारेण मिथ्यात्वनिश्चयात्तादृशभेदः प्रातीतिकः । अभेदस्तु व्यावहारिकः । ततोभिन्नसत्ताकत्वात्तयोरविरोध इति । तन्न ॥ तथासति भेदस्य विचारेण मिथ्यात्वनिश्चयोत्तरं विशिष्टबुद्धौ भेदभानानुपपत्तेः । अन्यथा तथैव घटादेरपि प्रातीतिकत्वप्रसंगात् ॥

यदपि ॥ भेदाभेदयोर्मध्ये भेदस्य प्रातीतिकतया तयोस्समसत्ताकत्वाभावेनाविरोधात्कल्पितभेदेनैव शुक्लो घट इत्यादि प्रत्यक्षस्योपपत्तिरिति । अत्रोच्यते ॥ यत्तावदुक्तं कल्पितभेदेनोपपत्तिरिति । तदयुक्तं ॥ तथाहि ॥ किं भेदस्य नियमेनाधाराधेयभावनिर्वाहकत्वात् कल्पितभेदस्य तत्प्रयोजकतया सभेदोऽभ्युपगम्यते । उत आधाराधेयभावादिकं प्रति भेदस्य व्यापकत्वेन तदभावे तदभावापत्तिभिया वा । नाद्यः ॥ मेरुमंदरादीनां परस्परं भेदसत्वेप्याधाराधेयभावाभावात् । संबंधोपि प्रयोजक इति चेत् । संबंधेन तत्संबंधेनापि सहभेदस्यैव सत्वेन संबंधाधारताद्वारा तदाधारतया अपरिहारात् । नापि द्वितीयः ॥ प्रमेयत्वं प्रमेयत्ववत् घटाभावे घटो नास्तीत्यादौ व्यभिचारात् । तत्र भेदाभावस्यैव निश्चितत्वात् ॥

किंच कल्पितभेद इत्यत्र कल्पित इति कोर्थः । घटशुक्लादीनामुत्पत्तिकाल एवानाद्यविद्यामूलकोवा तदुत्पादकसामग्रीमूलकोवा भेदो जायत इति वा । प्रतीतिसमय एव पुरुषेण वा प्रतीतिसामग्र्यावा तत्कालोत्पन्न इतिवा । तात्कालिकदोषसमवहित तूलाविद्याकल्पित इतिवा । नाद्यः ॥ तथात्वे अभेदवद्भेदस्यापि व्यावहारिकत्वापत्त्या तयोः समस-

त्ताकृत्वेनाविरोधकथनासंगतेः । भेदाभेदयोः समकक्षतयैव प्रतीतत्वेन अयं शुक्ल इति प्रतीतिकाल एव नायं शुक्ल इति प्रतीत्यापत्तेश्च । अप्रतीतत्वापि भेदस्यांगीकारे तु शशविषाणादेः - ब्रह्मणो रूपमिति व्यवहारानुरोधेन ब्रह्मस्वरूपे ब्रह्मस्वरूपप्रतियोगिकाबाध्यभेदस्यच सिद्धिप्रसंगः । अनादिब्रह्मसंबंधित्वेनानादेः अप्रतीतस्य बाधयोगात् । न द्वितीयः ॥ प्रतिपुरुषं प्रतीतिकाले प्रातीतिकानेकतादृशभेदकल्पनस्यानुभवविरुद्धत्वात् । कल्पनागौरवाच्च ॥

किंचैक एव भेदो निष्प्रतियोग्यनुयोगिकतयोत्पन्नः सन्ननंतरं शुक्लप्रतियोगिकत्वघटानुयोगित्वादिमान्भवति । उत तादृश एव समुत्पद्यते । नाद्यः ॥ प्रथमतो निराधारस्योत्पत्त्ययोगात् । देशविशेषावच्छेदेन कालविशेषसंबंधस्योत्पत्तित्वात् । प्रथमतस्तथोत्पन्नस्यानंतरं प्रतियोगिविशेषादिसंबंधे निमित्तविशेषस्यानानुभाविकत्वेनानंतरं तत्संबंधस्याकस्मिकत्वापत्तेः । भेदोत्पत्तिकाले शुक्ल इति घट इतिच वस्तुद्वयाभावेनाखंडव्यक्तेरेव प्रतियोगित्वेनानुयोगित्वेनच संबंधापत्त्या घटे घटभेदस्यैव प्राप्त्या घटस्य घट इत्यादिप्रतीत्यापत्तेः । घटे शौक्ल्यमस्तीत्यादिप्रतीत्यभावापाताच्च । अत एव न द्वितीयोपि ॥ उत्पत्तेः प्राक् घटः शुक्ल इत्यंशद्वयाभावेनाखंडव्यक्तिप्रतियोग्यनुयोगिकत्वस्यैवप्राप्तेः । पुरुषस्य भेदोत्पादकत्वे अनुभवविरोधाच्च । आगंतुकदोषसहिततूलाविद्यामूलकारोपमात्रत्वेतु शुक्तिरजतादेरिव तस्यप्रातीतिकत्वेन शुक्लरूपघटादीनां प्रमेयत्वादीनांच स्वस्मिन्स्वाधारत्वाद्यनिर्वाहकतया आधाराधेयभावादिप्रत्ययानुपपत्तिः । प्रातीतिकस्यार्थक्रियाकारित्वंतु निरस्तमेव । अंगीकारेवा प्रतीतिद्वितीयक्षणोत्पन्नस्याधाराधेयभावादेस्तत्रैवानवस्थाने प्रतीतिनाशकालेप्रातीतिकभेदस्याप्यभावाद-

भिन्न एवाधाराधेयभावपर्यवसानेन भेदकल्पनाया व्यर्थत्वात् । पुरुषभेदप्रतीतिभेदादिभिराधाराधेयभावानंत्यस्याप्रामाणिकत्वात् - गौरवात् - अयुक्तत्वाच्च । आधाराधेयभावादीनामपि प्रातीतिकानामेव भाने घटे शौक्ल्यं पुरुषस्य चैतन्यमिति प्रतीतीनामपि शुक्तिरजतप्रत्ययतुल्यतापत्तिः । नचेष्टापत्तिः ॥ उत्तरत्रबाधकानुपलंभात् । प्रत्युतप्रामाण्यस्यैवानुभवाच्च ॥

किंच श्रुतिनिष्टयथार्थज्ञानजननशक्तिमत्व विपरीतबोधकत्वाभावरूपप्रामाण्य पौरुषेयत्वाभावरूपापौरुषेयत्वादीनां श्रुतिस्वरूपभूतत्वात् श्रुतिरपौरुषेया प्रमाणमित्यादि प्रतीत्या श्रुतौ प्रातीतिकस्यैव प्रामाण्यादेरवगाहनापातेन बौद्धशास्त्रवत् श्रुतिरप्रमाणमेवेति व्यवस्थापितं स्यात् । एवं क्रमेणान्येपि सर्वे वैदिकार्था व्यवहारकालेपि विप्लुता इति स्वस्य वैदिकत्वं साधुख्यापितंस्यात् । प्रतिप्रतीतिभेदभ्रमहेतुभूतानंतदोषादिकल्पनागौरवंत्वनुवृत्तमेव । तस्मात्कल्पितभेद इति रिक्तं वच इति सिद्धं ॥ यद्यपि तंतुपटयोरत्यंतभिन्नघटपटयोरिव परस्परवैलक्षण्याननुभवात् अत्यंतभेदस्वीकारे मूर्तद्वयस्यैकत्रावस्थानायोगेन तंतुपटयोरेकदेशस्थत्वानुपपत्तेः गुरुत्वाधिक्यापत्तेश्च । तयोरभेदांगीकारेपि भेदस्याप्यंगीकारेण तंतवः पट इति सामानाधिकरण्यबुध्युपपादनवदत्रापि नीलो घटः इत्यादौ स्यादिति वक्तुं शक्यते । तथापि तत्र सामानाधिकरण्यबुद्धिनिर्वाहायैव न भेदोंगीकृतः । किंतु पटाद्यवस्थातः प्राक् इमेतंतव एव न पट इति निर्बाधप्रतीत्याभेदस्याप्यंगीकारात् आतानवितानात्मकास्तंतव एव पट इत्यबाधितप्रतीत्या अभेदस्याप्यभ्युपगमात् । एकतरपरिशेषे विनिगमकाभावात् भेदाभेदयोः सिद्धौ तस्य सामानाधिकरण्यव्यवहारनिर्वाहकत्वमप्युपेयते । नच समसत्ताकभेदाभेदयो-

विरोधः । वस्तुशक्तिरूपविशेषस्य विरोधशांतिहेतुताया व्यवस्थापित त्वात् । प्रकृते च पटो न शुक्ल इति कदापि प्रतीत्यभावात् - महारजन-रंजनावस्थायामपि विशेषदर्शिनां अयं शुक्लो नेति प्रमानुदयात् - शुक्लः पट इत्यत्र भेदाभेदयोरवच्छेदकद्वयास्फुरणाच्च न तथा कल्पनं युक्तं । यत्तु तंतु पटसामानाधिकरण्याय तयोर्भेदोपि भासते नवा आद्ये अयं पटो न पटश्चेति प्रत्ययापत्तिः । नचात्यंतभेद एव नत्रुल्लेख्य प्रतीतिविषयोऽतोनोक्तदोष इतिवाच्यं । तर्हि तंतुपटभेदस्य पूर्वोक्तरीत्या सिध्यभावापत्तेः । तादृशा-प्रतीतेस्त्वद्रीत्याभ्रमत्वादिति । तन्न ॥ शुक्लः पट इत्यादावप्युक्तदोष-साम्यात् । तत्राप्रतीतस्य भेदस्य तादृशव्यवहारनिर्वाहकत्वे पटवृत्तिचैत्री-यत्वादेरपि तन्निर्वाहकत्वप्रसंगात् । अज्ञायमानस्य प्रातीतिकत्वायोगाच्च । अप्रतीतस्याप्यंगीकारे तुच्छस्याप्यंगीकारापत्तेः ॥

किंच कल्पितभेदाधीनस्याधाराधेयभावस्य गुणगुणिभावनिर्वाहकत्वे शून्यवद्यारोपितासत्वेन क्षणिकवाद्यारोपितक्षणिकत्वेन आरोपितदेहतादात्म्या-दिना च ब्रह्मणो गुणित्वापातः । युक्तितौल्यादिति भेदाभेदस्तादात्म्य-मिति पक्षो न युक्त इति संक्षेपः ॥

यत्तु ॥ लघुचंद्रिकायां "सामानाधिकरण्यप्रतीतौ भासमानोऽभेद-स्तादात्म्यमेव । तच्च तादात्म्यत्वरूपाखंडधर्मविशिष्टमतिरिक्तमेव । तथाहि । तादात्म्यं तावन्नविशेषणस्वरूपं । विनिगमकाभावेन विशे-ष्यस्वरूपत्वस्याप्यापत्तेः । स्वं न स्वीयमित्यनुभवेन स्वप्रतियोगिकत्वस्य स्वस्मिन्नसंभवाच्च । नापि विशेषणतावच्छेदकस्वरूपं । निर्विशेषणक-घटत्वादिविशेषणके घट इत्यादि ज्ञाने तदयोगात् । तद्व्यक्तित्वस्य विशे-षणतावच्छेदकत्वस्थले रूपरसाद्यनेकधर्मलक्षणतद्व्यक्तित्वस्य तद्व्यक्तितादात्म्य-

त्वकल्पने गौरवाच्चे"त्युक्तदिशा भेदाभेदनिर्वाह्यातिरिक्तसंबंधस्तादात्म्यमिति तृतीयः पक्षो युक्त इति । तन्न ॥ सचासावात्माच तदात्मा तस्यभाव-स्तदात्म्यमितिव्युत्पत्या तदसाधारणधर्मत्वस्यैव तत्र प्रतीत्या तादात्म्यत्वाख्या-खंडधर्मे मानाभावात् । नच तादात्म्यमित्यनुगतप्रतीत्या तत्सिद्धिः । असाधारणधर्मइत्यनुगतप्रतीत्या असाधारणर्मत्वादेरप्यखंडत्वापातात् । सखंडधर्मेणाप्यनुगतव्यवहारस्य पाचकादिव्यवहारवदुपपत्तेश्च । एवं स्वमि-त्याद्युक्तमप्ययुक्तं । संयोगप्रतियोगित्वादेरप्रामाणिकत्वं वदतस्तादात्म्य-प्रतियोगित्वादौ प्रमाणस्य दुर्वचत्वेन तदसंभवोक्तेरयोगात् । त्वन्मतेपि तादात्म्यं प्रत्येकस्यैव विभिन्न रूपेण प्रतियोगित्वानुयोगित्ववत् विभिन्नरूपेण स्वस्यैव स्वप्रतियोगिकत्वस्यापि संभवात् ॥

यदत्रोक्तं ॥ घटत्वादेस्तादात्म्यत्वे सिद्धे तेन रूपेण घटत्वादिवि-शिष्टप्रतियोगिकत्वसिद्धिः । तत्सिद्धौ च तत्सिद्धिरित्यन्योन्याश्रय इति । तदसत् ॥ सामानाधिकरण्यप्रतीतौ विशिष्टबुद्धित्वेन विशेष्यविशेषणसंबं-धविषयकत्वे सिध्यति सति संयोगत्वाद्यवच्छिन्नसंबंधबाधेन तदन्यरूपावच्छि-न्नसंबंधविषयकत्वं सिध्यल्लाघवाद्विशेषणस्यैव तादृशसंबंधत्वमादाय पर्यवस्यती-त्यंगीकारे संयोगत्वाद्यन्यरूपत्वेन तादात्म्यत्वस्य विशेषणप्रतियोगिकत्वादेश्च युगपदेव सिध्यां अन्योन्याश्रयानवकाशात् । एवं निर्विशेषणकेत्याद्युक्तम-प्यसारं । तत्र विशेषणीभूतघटत्वादिगततद्व्यक्तित्वस्यैव तादात्म्यत्वोप-गमात् । एवं तद्व्यक्तित्वस्येत्यप्ययुक्तं । तद्व्यक्तिवृत्तिरूपरसादिषु तद्व्य-क्त्यसाधारणधर्मत्वस्य क्लृप्तत्वात् एतन्मते तद्व्यक्तेस्तद्गतरूपादेश्चैकव्यक्तित्वेन धर्मिणोऽनेकत्वाभावाच्च । तस्य च न रूपत्वरसत्वाद्युपधानेन साम-नाधिकरण्यप्रतीतौ भानं । किंतु तादात्म्यत्वेनैवेति न किंचिदेतत् ।

वस्तुतस्तु ॥ तद्व्यक्तित्वमखंडोपाधिरित्यस्माकमपि संमतं । तद्व्यक्तिरित्यादौ स्वरूपत एव तद्भानस्यानुभव सिद्धत्वात् । एवं च तादात्म्यमतिरिक्तमुत्पद्यत इति पक्षेपि तस्य निरुक्तासाधारणधर्मत्वेनैव समानाधिकृतत्वरूपहेतुशरीरप्रवेशो नतु त्वन्मतसिद्धतादात्म्यत्वाख्याखंडोपाधिना । तदनभ्युपगंतृतार्किकादीन्प्रतिहेत्वसिद्धिप्रसंगादिति । किंच समवायस्य संबंधिभ्यामतिरिक्तस्य स्वीकारे तस्याप्येवमित्यनवस्थादूषणेनातिरिक्तसमवायस्य“ समवायाभ्युपगमाच्च साम्यादनवस्थिते”रिति सूत्रकारेणैव निरस्तत्वेन तुल्यन्यायतया समवायस्थानाभिषिक्त त्वत्परिकल्पित तादात्म्यस्यापि सूत्रोक्तदूषणग्रस्तत्वेन सूत्रकारनिषिद्धत्वान्न तदंगीकारउचितः । अत्रोक्तमर्वाचीनेन ॥ तादात्म्यस्य पदार्थविभाजकधर्मानाक्रांततया न सूत्रोक्तानवस्थाप्रसंग इति । तन्न ॥ तादात्म्यमतिरिक्तः पदार्थ इति वदता तादात्म्यस्य पदार्थविभाजकधर्मानाक्रांतताया दुर्वचत्वेनासंभवदुक्तिकत्वात् ॥

अपिच ॥ तादात्म्यस्य भेदाभेदरूपत्व इव भेदाभेदोभयसापेक्षातिरिक्तसंबंधरूपत्वेपि शुक्तिरजतादेः सदितिप्रतीत्या सदर्थभूताबाध्येन सहाभेदस्यापि प्राप्त्या अबाध्यत्वावच्छिन्नात्यंतभेदरूपबाध्यत्वानुपपत्तिः । अन्यथा बाध्यो अबाध्यश्चेति प्रतीतिप्रसंगः । तद्धर्मावच्छिन्नेन सहात्यंतभेदग्रहस्यैव तादात्म्येन तद्धर्मावच्छिन्नग्रहं प्रति विरोधित्वेनाबाध्यतादात्म्येन विद्यमनबाध्यत्वस्याबाध्यात्यंतभेदरूपत्वाभावात् । नचाबाध्यभेदस्य तादात्म्यापेक्षयाऽधिकसत्ताकत्वान्न विरोध इति वाच्यं । जगत्युक्तभेदतादात्म्ययोर्व्यावहारिकत्वस्यैव वक्तव्यत्वात् । सत्ताभेदस्य निराकृतत्वाच्च । तस्मादुक्ततृतीयकल्पोप्ययुक्त एव ॥

तथाच विकल्पासहत्वात्तादात्म्यं दुर्वचमिति तद्घटितोक्तपरिष्कारःप्रेक्षावद्भिरश्रद्धेय इति स्थितं ॥

इत्थं च चिदचिद्ग्रंथिरूपाहंकारविषयकाहंप्रत्यये अधिष्ठानत्वेन शुद्धात्मनः किंचिद्रूपेण भानस्योदाहृताद्वैतचंद्रिकादौ व्यक्तमुक्तत्वेनाखंडसाक्षात्कारे निर्विकल्पके यच्चैतन्यस्वरूपं भाति तस्य किंचिद्रूपेण भानपक्षेपि अधिकंतु प्रविष्टं नतु तद्धानिरिति न्यायेनाहंप्रत्ययविषयत्वमवर्जनीयमेव । ततश्च खंडनाकारोक्तरीत्या - त्वदुक्तदिशा - भामत्याद्युक्तप्रकारेणच शुद्ध शब्दार्थस्य ध्वंशतासिध्या आत्मस्वरूपे किंचिद्भाति किंचिन्नभातीत्यादि चंद्रिकोक्तदूषणानि वज्रकल्पान्येव । खंडनाकारपक्षे अविद्यातत्कार्यान्यतरभिन्नत्वादेः - त्वत्पक्षे अंतःकरणतादात्म्यापन्नत्वाभावादेः - भामतीपक्षे अविद्यादिरूपद्वितीयाभावादेः - विशेषणत्वोपहितत्वोपलक्षणत्वान्यतमस्य दुर्निवारतया - तद्विशिष्टं तदुपहितं तदुपलक्षितंवा चैतन्यं शुद्धशब्दार्थ इति प्राप्त्या तत्र किंचिदित्यनेनोक्तान्यतमस्य पुनः किंचिदित्यनेन चैतन्यांशस्य विवक्षया किंचिद्भाति किंचिन्नभातीत्याद्युक्तविकल्पदूषणानामत्यंतसंश्लिष्टत्वात् । तथाचात्र दीपिकाकारोक्तदूषणाभासस्तत्वाप्रतिपत्तिनिबंधनःप्रेक्षावद्भिरुपेक्षणीय एवेति सिद्धं ॥

यत्तु चंद्रिकामंडने देहादिभेदः सत्यो वा असत्योवेत्यादिविकल्पदूषणानां अविद्यातत्प्रयुक्तन्यतरभिन्नचिद्रूपः शुद्ध इति परिष्करेपि संभव इति वर्णितं । तदिदं खंडनकाराशयाज्ञानमूलं । अविद्यातत्प्रयुक्तान्यतरतादात्म्यानापन्नचिद्रूपोत्र शुद्धपदार्थ इति खंडनाशयः । नहि देहादिभिन्नचिद्रूपो देहादितादात्म्यनापन्नः । नहि शशशृंगादीनामिव देहादीनां ब्रह्मणि न तादात्म्यं । तादात्म्यानापन्नत्वमेव भेदशब्दार्थः । देहादीनामिव तद्भेदादेरप्यविद्याप्रयुक्तत्वेन ब्रह्मणि तादात्म्येनाविद्याप्रयुक्तभिन्नत्वाभावात् नदेहादिभिन्नचिद्रूपोत्र तत्तादात्म्यानापन्नपदेन गृहीतुं शक्यत इत्यादि । तदसारं ॥ अविद्यातत्प्रयुक्तान्यतरभिन्नचिद्रूप इति खंडनवाक्ये सुव्यक्तमेव भिन्नपदप्रयोगेण देहादेरप्यविद्याप्रयुक्ततया देहादिभेदस्या-

प्युक्तोपलक्षणादिविधया शुद्धशब्दार्थघटकत्वात् । किंचिन्नभातीत्यत्र किंचित्पदेन विवक्षितोपलक्षणादिभूतदेहादिभेदः सत्योवेत्यादि विकल्पतद्दूषणानामस्यंतश्लिष्टत्वात् । भिन्न इत्यस्याविद्यातत्प्रयुक्तान्यतरतादात्म्यानापन्न इति त्वदीयंखंडनाशयवर्णनंत्वयुक्ततममेव । त्वयैव न हि शशशृंगादीनामिवाद्वैतमते देहादीनां ब्रह्मणि न तादात्म्यमित्यादिना ब्रह्मणि देहतादात्म्यस्यैव भाषितत्वेन त्वदुक्ततादात्म्यानापन्नत्वस्य त्वदभिमतशुद्धचिति दुर्घटत्वात् । तादात्म्यानापन्न - भिन्नशब्दयोरेकार्थत्वं वदता तत्तादात्म्यानापन्ने तद्भिन्नत्वस्याकामेनाप्यवश्यमंगीकार्यत्वाच्च । गुणादिकं गुण्यादिनाभिन्नाभिन्नमित्यत्राद्वैतचंद्रिकायां नात्र भेदाभेदोभयं साध्यं किंतु भेदसमानाधिकरणाभेद एवेत्युक्तत्वेन तादात्म्यघटकभेदेपि भेदशब्दव्यवहारेण भेदशब्दस्य तादात्म्यघटकभेदातिरिक्तभेदपरत्वमित्युक्तिरपि रिक्तैव ॥

त्वयापि भेदसहिष्णुरभेदस्तादात्म्यमित्युक्ततया स्वव्याघातश्च । तथाच मंडनोक्तस्य सूपपन्नत्वात्तत्र दीपिकाकारीयदूषणाभासजल्पनमज्ञानादिमूलमश्रद्धेयमेवेति स्थितं

यदपि वस्तुतस्त्वित्यादि वज्रकल्प इत्यंतं । तदप्यसारं ॥ देहादेरिव तद्भेदस्याप्यविद्याप्रयुक्तत्वेन ब्रह्मणि तादात्म्येनाविद्याप्रयुक्तभिन्नत्वाभावाद्देहादिभिन्नचिद्रूपस्याविद्यातादात्म्यानापन्नपदेन गृहीतुमशक्यत्वे त्वदुत्प्रेक्षित तत्तादात्म्यानापन्नत्वस्य शुद्धे ब्रह्मण्यसंभवेन शुद्धासंग्रहस्य दुर्वारत्वात् । भिन्नपद तादात्म्यानापन्न पदयोरैकार्थ्योक्त्या चिद्रूपब्रह्मणः अविद्यातादात्म्यानापन्नत्वे देहादिनेव तद्भेनाप्याविद्यकेन भिन्नत्वस्यावर्जनीयत्वात् । अन्यथा चिद्घटो नेत्यादि प्रतीति विलयापातात् । पक्षतावच्छेदकशरीरेचिद्भिन्नत्वनिवेशासंगतिप्रसंगाच्चेति दिक् ॥

यत्तु एतेन जीवस्यानादेरविद्याप्रयुक्तत्वाभावेन विशिष्टस्यापि तस्याविद्याप्रयुक्तत्वाभावादहंप्रत्यये शुद्धो न भातीत्यनुपपन्नमिति प्रसरोक्तिरपि परास्तेति ।

अत्रोच्यते । तथाहि ॥ दृश्येषु त्वदभिमतमविद्याप्रयुक्तत्वं-तदुपादानकत्वंवा-साक्षात्तज्जन्यत्वंवा साक्षात्परंपरासाधारणतज्जन्यत्वंवा - स्वरूपसंबंधविशेषोवा-नाद्यः । अनादिदृश्यानां कालरूपाविद्याचित्संबंधादीनांचोपादानाप्रसिद्धेः । अत एव न द्वितीयः ॥ आत्मापरोक्षानंतरमाविद्यकपदार्थविलयेन संस्कारोपादानकपदार्थानामभ्युपगमात् । नापि तृतीयः ॥ पूर्वोक्तदोषानिस्तारात् । सर्पभ्रमोत्थभयानीनां परंपरया रज्ज्वज्ञानजन्यानां रज्जुसाक्षात्कारानंतरमपि सत्वात् । नापि चतुर्थः ॥ तृतीयपक्षोक्तदोषानिस्तारात् । भयादीनामपि रज्ज्वज्ञानान्ममेदं सर्वमनिष्टमभूदिति प्रतीतिसाक्षिकस्वरूपसंबंधरूपप्रयुक्तत्वानपायात् । अविद्यासंस्कारोपादनकपदार्थेषु अविद्याप्रयुक्तत्वेमानाभावेन ज्ञानेन तदुच्छेदासिध्यापत्तेश्च । यत्वद्वैतचंद्रिकायां - अनादिदृश्यानामविद्याप्रयुक्तत्वमविद्यानाशाधीननाशप्रतियोगित्वं । तच्चोक्तभयादीनां नास्तीति नोक्तदोष इति । तत्तुच्छं ॥ शुद्धाद्वैतपक्षस्यैवेदानीमादृततया तत्राविद्यानाशादनादि दृश्यनाशोपगमे नाशस्य नाशानभ्युपगमे-चाद्वैतहानिः । आत्मनस्तद्रूपत्वकल्पनेपि तत्र कल्पितनाशानुच्छेदे स एव दोषः । नाशस्य नाशांतरकल्पने अप्रामाणिकनाशधाराकल्पनयाऽनवस्था । आद्यक्षणावच्छिन्नतत्वज्ञानस्याज्ञाननाशत्वं द्वितीयपक्षणावच्छिन्नस्य तस्यैव साधनादिसाधारणसर्वदृश्योच्छेदत्वेन जन्यत्वमित्यंगीकारस्य तत्वज्ञानस्याज्ञानानाशकत्वप्रसंगेन हेयत्वमिति अनादिदृश्यनाशेषु अविद्यानाशस्य कारणत्वप्रक्रियायाः स्वयमेव त्यक्तत्वात् । क्षेमसाधारणाविद्याप्रयुक्तत्वंतूक्तभयकंपादिसाधारणत्वान्नज्ञाननिवर्त्यत्वप्रयोजकं । रज्जुतत्वज्ञानोत्तरमपि भयाद्यनुवृत्तेः । भयकंपादिविशिष्टवेषेणैव सर्पस्यारोपान्नाज्ञानसंस्कारकार्यत्वं वा । किंतु सत्यस्यापि क्लृप्तस्वकारणायत्तोहितन्नाशः । नाप्यविद्यावृत्तिविषयत्वं प्रयुक्तत्वं । प्रपंचमिथ्यात्वसिद्धेः प्रागविद्यावृत्तेरेवा सिद्धेः ॥ जीवस्याहमिति धीविषयत्वांगीकारेणाविद्यावृत्तिविषयत्वाभावात् । तथात्वे

प्रातीतिकत्वप्रसंगाच्च । भामतीमते अविद्याश्रयस्य जीवस्याविद्यावृत्तिविषयत्वे जीव सिद्धेरज्ञानसिध्याधीनत्वप्राप्त्या अन्योन्याश्रयाच्च । अविद्यावृत्तिविषयस्याविद्याश्रयत्वायोगाच्च ॥

नाप्यविद्यासमकालिकत्वं - तत्प्रयुक्तत्वं । ब्रह्मण्यपि तत्प्रसंगात् । नाप्यविद्योपाधिकत्वं तत् ॥ अविद्याया दर्पणादिवदुपाधित्वे तत्र प्रतिमुखस्येव जीवस्यापि कल्पिततयाऽनादित्वभंगः । कल्पनाप्रवाहस्यानादित्वविवक्षायामपि जगत्प्रवाहस्याप्यनादित्वेन सद्यनादिविभागानुपपत्तिः । नाप्यविद्यादोषाधीनप्रतीतिकत्वं । शून्यवाद्यारोपित क्षणिकत्वादिभ्रमविषयत्वेन ब्रह्मणोपि तत्प्रसंगात् । अधिकमाकरेव्यक्तं ॥ ग्रंथगौरवभयादुपरम्यते ॥

यत्तु ये हि प्रसरकाराइत्यारभ्य बिंबस्येव प्रतिबिंबस्यापि जीवस्यमायाप्रयुक्तत्वमंगीकर्तव्यमित्यंतं । तदपि तुच्छं ॥ ब्रह्मण्यवस्थिता माया साऽ विद्या जीवसंस्थिते''त्यादि वाक्यसुधाद्यनुरोधेन''मायाचाविद्याच स्वयमेव भवति जीवेशावाभासीक्रोती''त्यादि श्रुत्याचाद्वैत्येकदेशिमतप्राप्तं मायाविद्याभेदमंगीकृत्य मायाप्रतिबिंबईश्वरः अविद्याप्रतिबिंबो जीवः चिन्मात्रं तु बिंबस्थानीयमिति मतमनुसृत्य प्रसरस्य प्रवृत्तत्वात् । एकस्यैवाज्ञानस्य विक्षेपशक्तिप्राधान्येनमायेतिआवरकशक्तिप्राधान्योनाविद्येति नाममात्रे भेद इति भामतीविवरणाद्यनुसारेण तयोरैक्यपक्षे मायाबिंबईश्वरः । तत्प्रतिबिंबो जीवः ॥ तत्रोपाधेः प्रतिबिंबपक्षपातित्वेनाविद्याधीनसंसारभागितया अविद्याप्रयुक्तत्वं जीवस्य । मायासंबंधेन परिच्छिन्नत्व तत्वज्ञाननाश्यत्वादिमायाधीनदोषभागित्वेन बिंबभूतेश्वरस्य मायाप्रयुक्तत्वमिति यद्यप्युभयत्र प्रयुक्तत्वं तुल्यं । तथापि वशीकृतमायत्वेनेश्वरस्य स्वाधीनमायाप्रयुक्तत्वं मायामयसार्वज्ञसर्वेश्वरत्वादिरूपमेव विवक्षितमतो प्रतिबिंबे तदभावो युक्त एव । अस्तु वा - मायाप्रयुक्तत्वं - जीवस्य - तावतापि - भक्षिते पीति न्यायेन न दीपिकाकारस्य

समीहितसिद्धिः । प्रकाशप्रसरएवाविद्यापदेनाज्ञानसामान्यविवक्षायामपि तदीय शुद्धशब्दर्थस्य बहुधा दूषितत्वात् । जीवस्य सोपाधिप्रतिबिंबताया अद्वैतचंद्रिकाद्युक्त युक्त्याभासादिनिरासेनाकरेसोपपत्तिकं निरस्तत्वेनोक्तप्रक्रियाया अप्रामाणिकत्वादुक्तकल्पनानिर्मूलैव ॥

यत्तु ॥ वस्तुतस्तु ॥ प्रतिबिंबप्रत्यविद्याया उपाधितया निमित्तत्वमेव वर्तत इति । निमित्ततयोपकारकत्वाभाववचनमविद्याया अनुपपन्नमित्यादि नानुपपन्नमित्यंतं । तन्मंददंधनं ॥ अविद्याया निमित्ततयोपकारकत्वाभाववचनस्य जीवस्यानादित्वेनाजन्यतया तं प्रत्यविद्यायाः प्रतिमुखादिकं प्रति दर्पणादेरिव निमित्तकारणत्वाभावपरत्वेन तदर्थाज्ञानमूलत्वात् ॥

किंच प्रतिबिंबप्रत्यविद्याया उपाधित्वेन निमित्तत्वमित्युक्तिरेवायुक्ता । त्वन्मते प्रतिबिंबस्य उपाधेः तत्संबंधस्य चानादित्वेन प्रतिबिंबस्योत्पत्तौ निमित्तत्वासंभवातू । तस्य स्वप्रकाशत्वेन ज्ञप्तौ निमित्तत्वायोगात् । ज्ञप्तिहेतोस्तद्विषयं प्रति निमित्तत्वाव्यवहाराच्च । विशिष्टस्य केवले कल्पितत्वेन तत्स्थितौ वा निमित्तत्वासंभवात् । त्वन्मते बिंबप्रतिबिंबयोरेकत्वेन विच्छेदमात्रस्याविद्यकतया प्रतिबिंबप्रत्यविद्याया निमित्तकारणत्वोक्तेरनुचितत्वात् ॥

अत एव स्वरूपातिरिक्तोपाधिराहित्यरूपं निरुपाधिप्रतिबिंबत्वं समर्थितं सिद्धांते । अविद्योपाधौ च प्रसिद्धदर्पणाद्युपाधिवैलक्षण्ये मानाभावात् । जीवाश्रिताविद्याया जीवं प्रत्युपाधित्वासंभवाच्च । त्वयैव जीवस्यापि विशिष्टवेषेण कल्पितत्वोक्त्या तत्राविद्याया उपादानताया एव युक्तत्वात् । अन्यथा सर्वत्राप्येवं भावेन निरुपादानसृष्ट्यापाताच्च । अधिकमग्रेवक्ष्यते ॥

यत्तु वस्तुतस्त्वित्यारभ्य बिंबप्रतिबिंबयोरेकोपाधित्वं नियतमित्यंतं ।

तदसत् ॥ जीवे विवक्षितस्याविद्याधीनसंसारसंबंधरूपबंधस्याविद्याप्रयुक्त-त्वशब्देन विवक्षितस्येश्वरे अभावेन एकोपाधित्वमात्रस्येक्ताविद्याप्रयुक्त-त्वाभावाविरोधित्वात् । किंच भामतीसिद्धांतस्त्वित्थमद्वैतचंद्रिकादिषु प्रकाशितः । तथाहि । भामतीकारस्त्वविद्यां जीवाश्रितां मन्यते । नन्वविद्याप्रतिबिंबितचैतन्यंवा - अविद्यावच्छिन्नचैतन्यंवा - अविद्याकल्पित-भेदं जीव इत्युच्यते । ततश्च तस्याविद्याधीनसिद्धिकत्वादन्योन्याश्रया-दीति चेन्न । उत्पत्तौ - स्थितौ - ज्ञप्तौवा - अन्योन्याश्रयो वाच्यः । त्रयमपि न संभवति ॥ अविद्यायाः तदाश्रयीभूतजीवस्य - तन्निष्टभेदस्य-चानादित्वेन कस्याप्युत्पत्यभावात् । नच भेदादीनामाविद्यकत्वानुपपत्तिः। अविद्यनाशाधीननाशकत्वेनाविद्याप्रयोज्यतया तदुपपत्तेः । नापि स्थितौ ॥ अविद्याया जीवाश्रितत्वेपि जीवस्य विशिष्टरूपस्य चिदुपादानकस्य चिन्मा-त्राश्रितत्वांगीकारात । नचैवं जीवाविद्ययोरन्योन्याधीनत्वमतहानिः । अविद्यानाशस्य जीवनाशव्यापकत्वेन जीवस्य तदधीनत्वव्यवहारात् । अविद्यायाः स्वोपहिते जीवे सत्वाद्वा तद्व्यवहारात् । यद्वा अविद्याया जीवोपाधित्वाज्जीवस्य तदधीनत्वव्यवहारः । अविद्यायाः स्वोपहितजीवा-श्रितत्वादविद्याया जीवाधीनत्वव्यवहारः । स्वसत्तायां स्वस्यावच्छेदकत्व-रूपोपाधित्वमात्रमंगीक्रियते - नतु विशेषणत्वमाश्रयत्वरूपमिति न कोपि दोषः । यथोक्तं ॥ "स्वेनैव कल्पिते देशे व्योम्नि यद्वद्घटादिकं । तथा जीवाश्रिताविद्यां मन्यंतेऽज्ञानकोविदा" इति । नापि ज्ञप्तौ ॥ अज्ञानस्य साक्षिरूपचिद्भास्यत्वेपि चिद्रूपस्य जीवस्य स्वप्रकाशेत्वेनाविद्याधीन ज्ञप्तिकत्वाभावात् । नचेश्वरजीवयोरीश्वरजीवकल्पितत्वे आत्माश्रयः । जीवेश्वरकल्पितत्वे त्वन्योन्याश्रयः । न च शुद्धचित्कल्पिका ॥ तस्या अज्ञानाभावादिति वाच्यं । यतो जीवेश्वरकल्पितत्वं नाम जीवेश्वरविषय-ककल्पनां प्रति हेतुत्वं वा - तौ प्रति जनकत्वं वा - न द्वितीयः ॥

उभयोरप्यनादित्वेन तौ प्रति जनकत्वानंगीकारात् । आद्य तु युक्त एव । अविद्यावृत्तेरेव कल्पनापदार्थतया तां प्रत्यविद्याया उपादानविधया दोषतया च हेतुत्वात् । तत्र जीवस्य द्रष्टृत्वमविद्याश्रयत्वादिना - ईशे-स्वरूपचैतन्येन - नत्वविद्यावृत्या । तस्याविद्यनाश्रयत्वात् । स्वरूपेचा विद्याविषयत्वेनैव द्रष्टृत्वं । अविद्याश्रयजीवादिकं प्रति विषयतासंबंधेना-विद्यायाः जगत्प्रतिदोषविधया निमित्तत्वमेव । नोपादानत्वं ॥ अतोऽ विद्याविषयीभूतचिन्मात्ररूपब्रह्मणः प्रपंचाधारत्वोपपत्तिः । यद्वा अविद्या जीवावेव प्रपंचप्रतिपरिणामविवर्तोपादानभूतौ - जीव एव प्रपंचाधारः । ब्रह्म तु वस्तुतो जीवस्वरूपत्वाज्जगदाधारतया निगद्यते । ब्रह्मणो जगत्कारणत्वप्रतिपादकवाक्यानां जगत्कारणीभूताविद्यापरत्वादेव यतोवेत्यादेर्ब्रह्मलक्षणपरत्वं । अत एव अविद्यैव शुद्धचिदाश्रितदजगदुपादानं । नतु ब्रह्म जीवोवेति ।

अत्रोच्यते ॥ तथाहि ॥ यद्यप्यत्र वाचस्पतिपक्षे अविद्या-वच्छिन्नचैतन्यं जीवः । तादृशजीवत्वमविद्याश्रयतावच्छेदकं । स्वस्य स्वावच्छेदकत्वेप्यात्माश्रयादेरुत्पत्त्याद्यविरोधित्वेनादोषादित्याद्यपक्षे मूलाग्रादि-वत्तस्यावच्छेदकत्वे मानाभावमाशंक्य तस्या उपाधित्वमेव व्यवस्थापितं । "ज्ञाज्ञाविति" श्रुतिरेवाज्ञानस्य जीवाश्रितत्वे मानमितिचाभिहितं । कल्पतरुवाक्यानुसारेणानाद्यनिर्वाच्याविद्यातिरिक्तमायास्वरूपानंगीकारेण मा-याविद्ययोरैक्यं चाभ्युपगतं । तथापि न्यायामृताद्युक्तान्योन्याश्रयादि-दोषा दुर्निवारा एव । न केनाप्युद्धर्तुं शक्याः । तथाहि ॥ अविद्यासिद्धौ तदवच्छिन्नतयावा - तत्प्रतिबिंबिततया वा कल्पितभेदस्य जीवस्य सिद्धिः । तत्सिद्धौ च तदाश्रयतया अविद्यासिद्धिरित्यन्योन्या-श्रयः । न च बीजांकुरन्यायेनासौ न दोषः । तत्र व्यक्तिभेदेना-न्योन्याश्रयाभावेप्यत्राज्ञानव्यक्तेः जीवव्यक्तेश्चैकत्वेनान्योन्याश्रयापरिहारात् ।

न च निरंशेपि महाकाशो घटस्तटस्थ एव तदुपलक्ष्यैकदेशं संपाद्य तेन संबध्यते - तद्वदविद्यापि तटस्थैव चिन्मात्रमुपलक्ष्यैकदेशंसंपाद्य तत्रैव तिष्ठतीति नेतरेतराश्रय इति वाच्यं । निराश्रयाविद्यायोगेन जीवसिद्धावविद्यासिद्धिः - तत्सिद्धौ च तदुपलक्षितजीवसिद्धिरित्यन्योन्याश्रयात् । घटाकाशसिद्धिं विनापि घटसिद्धिवत् जीवसिद्धिं विना अविद्यासिद्धेरयोगात् । त्वन्मते गगनस्याप्यनित्यद्रव्यत्वेन स्वतएवांशसंभवात् । अस्मन्मतेपि गगने स्वाभाविकांशानामन्यत्र समर्थितत्वात् । घटादिसंबंधं विना आकाशांशसिद्धिवदज्ञानसंबंधं विना जीवसिद्धेरभावात् । नच जीवाविद्यायोरनादित्वेनोत्पत्याद्यप्रतिबंधादयं न दोषः । यतः "अविद्याजीवयोर्यत्र व्यपेक्षातन्निरोधकः । अन्योन्यसंश्रयो नोचेदन्योन्याधीनता हतिः" । अज्ञानजीवयोर्हि कुत्रापि विषये अन्योन्यापेक्षा नचेदन्योन्याधीनता व्याहतिः । नहि सर्वथा तदनपेक्षं तदधीनं । अथानादित्वेपिद्रव्यत्वगुणवत्वादिजातिव्यंजकयोरिव प्रयुक्तत्वरूपप्रयुक्त्यादावपेक्षा । तर्ह्यन्योन्याश्रयस्तस्यैव प्रतिबंधकः । द्रव्यत्वादौ व्यंग्यमेव व्यंजकप्रयुक्तं नतु व्यंजकं व्यंग्यप्रयुक्तं । तार्किकमते गुणवत्वस्योपाधित्वेन द्रव्यत्वस्य तदव्यंजकत्वांगीकारात् । तथा च तत्रान्योन्यप्रयुक्तत्वाभाववत्प्रकृते जीवत्वमेवाज्ञानप्रयुक्तं नाज्ञानं जीवत्वप्रयुक्तमिति नान्योन्याश्रय इति न वक्तुं शक्यं । अविद्या आदौ निरंशं चैतन्यं संबध्य विभागं संपाद्य जीवत्वमापादयतीत्यंगीकारेण जीवब्रह्मविभागस्याविद्यकत्वात् । अविद्याया जीवाश्रितत्वात् । जीवत्वाज्ञाने अन्योन्यप्रयुक्ते इति प्रयुक्तेरेव प्रतिबंधः । एवं चोत्पत्यादिप्रतिबंधाभावेप्यन्योन्याश्रयोदोषएव ॥

तदुक्तं । "यद्युत्पत्तिज्ञप्तिमात्रप्रतिबंधेन दोषता । तर्हि स्याच्चैत्रमैत्रादेरन्योन्यारोहणादिकमि"ति । अत्रयुगपदेवेति शेषः ॥ नच प्रमेयत्वाभिधेयत्वादौ अन्योन्यवृत्तित्ववदिहाप्यन्योन्यापेक्षाप्रमिता ।

अन्यथा अन्योन्याश्रयादिः क्वापि दोषो न स्यात् । अन्योन्याश्रयपरिहाराय जीवत्वप्रयोजकमज्ञानांतरं चेत् अज्ञानसिद्धौ जीवसिद्धिः । तत्सिद्धौ च तदाश्रिताज्ञानसिद्धिः । तत्सिद्धौ च तत्कल्पिताज्ञानांतरसिद्धिरिति चक्रकं । अज्ञानांतरकल्पनेत्वनवस्था । नचेयं परंपरानाऽनन्यथासिद्धवस्तुविषया । अहमज्ञइत्यादिप्रतीतेर्जीवब्रह्मणोः स्वाभाविकभेदेनैवोपपत्तेः । किंच जीवेश्वरयो र्जीवेश्वराभ्यां कल्पितत्वे आत्माश्रयात् । तत्कल्पकस्य शुद्धस्याज्ञानमावश्यकं । कल्पनाया अज्ञानकार्यत्वात् । तथा च जीवाश्रिताज्ञानवादोऽनुपपन्नएव ॥

यदपि ॥ कल्पनांप्रतिहेतुत्वं कल्पकत्वं । तच्चाविद्यायामक्षतमिति । तदप्यसारं ॥ शुक्तिरूप्यादावपि साक्षिण एवाध्यासद्रष्टृत्वेन कर्तृत्वरूपं कल्पकत्वमित्यद्वैतचंद्रिकादावुक्तत्वात् - कल्पनां प्रत्याश्रयत्वमेव कल्पकत्वं तच्चाध्यासद्रष्टृत्वरूपमित्यद्वैतसिध्यादावप्युक्तत्वाच्चात्माश्रयादेरपरिहारात् ॥

किंच अज्ञानस्य जीवाश्रितत्वपक्षोनांगीकर्तुं शक्यः । तथाहि ॥ शुद्धचिदाश्रितत्वपक्षे शुद्धचिद्रूपे पूर्णानंदे अविद्याप्रतियोगिकतादात्म्यरूपस्याविद्यासंबंधस्य कथंचिद्वक्तुंशक्यत्वात् अस्ति भातीत्यादि व्यवहारायोग्यत्वरूपमावरणकृत्यं संभवति । अज्ञानोपहित एवाज्ञानमिति मते शुद्धे आज्ञानसंबंधस्यैवाभावात्कथमुक्तरूपमावरणकृत्यं । अज्ञानोपहितस्य शुद्धाभिन्नत्वात् शुद्धे उपहितधर्मसंबंध इति चेत्तर्हि शुद्धएवाज्ञानसंबंधोऽगीकृतः स्यात् । ततश्च शुद्धे नाज्ञानमिति मतहानिः । मिथ्याभूतोपहितस्याज्ञानविषयत्वापातश्च । तथाचाज्ञानप्रयुक्तस्याज्ञानविषयत्वे अन्योन्याश्रयः । अज्ञानोपहितस्याप्यज्ञानप्रयुक्तत्वात् । शुद्धचिति अविद्यानिरूपितमाकाराख्यविषयत्वमभ्युपगम्यत इति चेत् - किं तावता तन्मात्रेणावरणकृत्यस्यानुपपादनात् । अज्ञाननिरूपिताकाराख्यविषयत्वाभावोपहि-

तचित्तादात्म्यमेवास्तित्वमित्यंगीकारेपि अनिर्वाह एव । चिति स्वतादात्म्याभावस्योपपादितत्वेनोक्तसत्ताभानस्य निरूपयितुमशक्यत्वात् । तादृशविषत्वाभावस्यैव सत्ताभानादिरूपत्वे शशविषाणमस्ति भातीत्यादि व्यवहारप्रसंगः । नचैतन्मते अविद्याविषयत्वोपहितएवावरणकृत्यमस्त्विति वाच्यं । तथात्वे चरमवृत्तेरज्ञानसमानविषयकत्वाभावेन तदनिवर्तकत्वप्रसंगात् । अन्यथा जडस्यैवाज्ञानाश्रयत्वं स्यात् । नचाज्ञानसिध्यनंतरं जडस्योत्पत्तिः तदनंतरंतत्सत्वमित्यन्योन्याश्रयः जडस्यास्वप्रकाशत्वेनावरणकृत्याभावः - तस्य विषयत्वानुपपत्तिश्चेति वाच्यं । उत्पत्यनंतरमेव शुक्त्यादेरज्ञानावच्छेदकत्ववदुत्पत्यनंतरमेव जडस्याविद्याविषयत्वं - पूर्वं तु जातितुल्यासानिराश्रैयवावतिष्टते । नैयायिकमते गोत्वादिर्जातिरिवेत्यंगीकारे बाधकाभावात् । अथवा अनादिजीवेश्वरविभागादेरेव तदाश्रयत्वमस्तु । उक्ताज्ञानसंबंधस्यैव जडे आवरणकृत्यतया भवन्मतपर्यवसानेन तादृशावरणकृत्यं शुक्त्यादिजडे उत्पत्यनंतरं - अनादि जडेषु वा संभवति । आकाराख्यविषयतापि तत्रैव स्वीक्रियतां । चिन्मात्रविषयकचरमवृत्तेरसमानविषयिण्या अप्यज्ञाननिवर्तकत्वं श्रुतिप्रामाण्यात शक्तिपुरस्कारेणैवास्तां । अहमज्ञ इत्यादिप्रतीतिस्त्वंतःकरणविषयिण्येव भवत्वित्यादि कल्पनया जडस्याप्यज्ञानाश्रयत्वविषयत्वसंभवस्यशक्योपपादानत्वेनाज्ञानस्यजीवमात्राश्रितत्वे बीजाभावः । अप्रामाणिकत्वस्योभयत्रतुल्यत्वात् ॥

किंच "मायिनं तु महेश्वरं - मायया संनिरुद्धः - अनादिमाययासुप्तः" इत्यादि श्रुत्या जीवेशयोर्मायाकार्यतत्तद्धर्मसिद्धये उभयत्रापिमायासंबंधस्य वक्तव्यतया च जीवमात्राश्रितत्वकल्पनमयुक्तमेव ॥

किंच चिति जीवत्वप्रयोजकाज्ञानसंबंधः किं स्वाभाविकः - उताविद्याधीनः । नाद्यः ॥ तस्य चित्स्वभावत्वापत्या तन्निवृत्तौ चिन्निवृत्त्यापत्तेः । अनिवृत्तौमोक्षाभावप्रसंगाच्च । न द्वितीयः ॥ अन्योन्या-

श्रयाद्यापातात् । अविद्याचित्संबंधादीनामनादित्वेनान्योन्याश्रयपरिहाराकांक्षायामनादितः सतोऽविद्याभेदादेर्ज्ञानेन साक्षात्परंपरया वा नाशेपि पारमार्थिकत्वमक्षुण्णमित्यद्वैतश्रुतिव्याकोप एव । नहि नाशप्रतियोगित्वादेव मिथ्यात्वं - तेनानित्यत्वव्यवहारेपि पराभिलषितमिथ्यात्वव्यवहारासंभवात् । चित्यारोपितत्वान्नसत्या इति चेन्न । साक्षिरूपज्ञानस्याविद्यां विना सिद्धेरभावात् । शुद्धचित एवाविद्यादिग्राहकत्वे तस्याः सत्यत्वेन दोषाद्यजन्यतया प्रमात्वस्याकामेनाप्यंगीकर्तव्यतयातद्विषयाणां मिथ्यात्वोक्तेर्वाङ्मात्रत्वात् । अन्यथा चरमवृत्तिविषयस्यात्मनोपि मिथ्यात्वापातात् ॥

किंच अज्ञानस्याश्रयसापेक्षत्वात् तदाश्रयस्तावद्दुर्निरूप इति वक्तुः सामान्याकारेणाश्रयज्ञानसत्वेनविशेषधर्मपुरस्कारेण तज्ज्ञानस्य जिज्ञासिततया जीवाश्रितत्ववादिना अज्ञानोपहिते चैतन्ये अज्ञानं वर्तत इत्युक्तिमात्रेण तज्जिज्ञासाया अनिवृत्या तथोक्तिरनुचितैव । अज्ञानस्योपाधित्वकथनेन तदुपहितस्याश्रयविशेषस्य लाभ इति चेन्न । किंचिन्निष्ठस्यैवोपाधितया तस्यैव किंवृत्तित्वमिति विशेष जिज्ञासायां तद्वत्येव तद्वर्तत इत्यस्यानुत्तरत्वात् । चिस्येवस्वावच्छेदेनाज्ञानं वर्तत इति चेन्न । स्वं प्रति स्वस्यावच्छेदकत्वे सर्वस्यापि तथात्वापातेनानवच्छिन्नवृत्तिकवस्तुन एवासिध्योक्ता व्यावर्तकावच्छेदकताया एवाप्रामाणिकत्वात् । घटादेस्तु आकाशांशे स्वाभाविक एव संबद्धत्वं । नतु स्वकृतभेदवदंशे स्वावच्छेदेन । कृत्स्नैकदेकसंबंधविकल्पपूर्वकदूषणगणग्रासेन तस्य भेदकत्वस्यैवायोगेनानुदाहरणीयत्वात् ॥

एतेनाविद्याया जीवनिष्टत्वादीशस्य द्रष्टृत्वं - स्वरूपज्ञानेनैव चैतन्यस्य सर्वज्ञत्वमित्यादिकं परास्तं । जीवाश्रिताज्ञानस्य शुद्धचैतन्ये सर्वविषयकत्वासंपादकत्वात् । अविद्याविषयत्वमात्रेण तथात्वस्य तु निरसिष्यमाणत्वात् । ईशे तादृशज्ञानेन सहाश्रयाश्रयिभावानिर्वाहकत्वाच्च । स्वरूपै-

क्यमात्रस्य तन्नियामकत्वे जीवेपि तत्प्रसंगस्यापरिहारात् । ईशे मायावृत्यभ्युपगमेन जीवादिद्रष्टृत्वांगीकारे अविद्यारूपमायाश्रयत्वमनर्ज-नीयमेव ॥

यदपि जीवब्रह्मणोर्वास्तवाभेदात् जीवनिष्ठं कारणत्वं ब्रह्मलक्षणत्वेनोच्यत इति । तदप्यशुद्धं ॥ जिज्ञास्यस्यजगत्कारणत्वेन जीवादिव्यावृत्तिसाधनस्य विरुद्धत्वात् । वियतासंबंधेनाविद्याया निमित्तमात्रत्वे त्वन्मते ब्रह्मणोऽपरिणामित्वेन परिणामिकारणांतराभावान्निरुपादानोत्पत्यापातः । तथात्वे च सुषुप्तावहंकारलये कर्मादीनां समूलघातं घातितत्वेन कारणात्मनाप्यवस्थानाभावात्पुनः शरीरारंभाद्यनुपपत्तिः । जीवाविद्ये एव जगदुपादाने - ब्रह्मकारणत्वश्रुतिस्तु स्वरूपैक्यविवक्षयोपचरितार्था जगत्कारणाविद्याविषयत्वविषयेति लज्जापरित्यागेनवचनं तु प्रेक्षावतां हासास्पदमेव ॥ जन्मादिसूत्रेण जगत्कारणत्वं श्रुतिसिद्धं लक्षणमभिधाय तस्याचेतने प्रधाने अतिव्याप्तिनिरासः ईक्षत्याद्यधिकरणैः क्रियते । न विलक्षणत्वाद्यधिकरणैः ब्रह्मणः कारणत्वे युक्तिविरोधः परिह्रियते इत्यादित्वीयभाष्यादौ स्फुटप्रतीयमानार्थत्यागस्योन्मादमूलत्वात् । अधिकमाकरेऽभ्यक्तं ॥

यदपि । एतेनाविद्याया उपादानतया निमित्ततया वा उपकारकत्वाभावेन जीवस्याविद्याप्रयुक्तत्वं दुर्वचमिति प्रसरोक्तमपास्तं । जीवाश्रिताविद्याया एव जीवेशकल्पकत्वेनेत्यादि तत एव द्रष्टव्यमित्यंतं । तदप्यसारं ॥ जीवाश्रिताविद्याया जीवेशकल्पकत्वादि प्रक्रियायादूषितत्वात् । क्षेमसाधारणप्रयुक्तत्वस्य रज्जुतत्वज्ञानोत्तरमनुवृत्तभयादावपि सत्वेन तन्मात्रस्य ज्ञाननिवर्त्यत्वाप्रयोजकत्वात् । अनादिभावस्य तदन्वयव्यतिरेकप्रयोज्यान्वयव्यतिरेकशालित्वरूपाविद्याप्रयुक्तत्वस्य तत्कार्यत्वापत्या अंगीकर्तुमशक्यत्वात् - समकालिकत्वादिरूपस्य ज्ञाननिवर्त्यत्वाप्रयोजकतया तादृशप्रयुक्तत्वस्यानुपयोगात् । मिथ्याभूतस्य नित्यविलोडितत्वेन सत्यस्यैनिवृत्तेर्दर्शि-

नेन तेन मिथ्यात्वासिद्धेश्च । एकविज्ञानेन सर्वविज्ञानादेश्चाकारे अन्यथैवोपपादितत्वादिति । अधिकमग्रेवक्ष्यते ।

यदपि ॥ अविद्याप्रयुक्तत्वं ह्यत्र तत्समकालिकत्वं – अविद्याप्रयुक्तपदेन ज्ञानोच्छेद्यानां ग्रहणमित्यारभ्य न तन्नाशनाश्यत्वमित्यंतं । तदप्ययुक्तं ॥ समकालिकत्वमात्रस्य ब्रह्मसाधारणतायाः उक्तत्वात् । तादृशस्य तत्प्रयुक्तत्वस्य तन्नाशकनाश्यत्वाप्रयोजकत्वात् । ब्रह्मादिसाधारणाविद्याप्रयुक्तपदेन ज्ञानोच्छेद्यविवक्षाया असंभवात् । लक्षणाकल्पनापत्तेश्च ॥ किंचिदुपकाराभावे तदधीनताया एव मृषात्वेनाविद्याधीनत्वाभावात् साक्षाद्वा परंपरया वा न ज्ञाननिवर्त्यत्वमनादिभावस्येति वादिनं प्रति ज्ञानोच्छेद्यपदेनानादिभावग्रहणायोगात् । एतत्कल्पे पृथगविद्यापदप्रयोजनाभावस्य स्वयमेवांगीकृतत्वात् । अद्वैतचंद्रिकादौ अनादिभावस्याज्ञानाधीनत्वमाक्षिप्य तन्नाशाधीननाशकत्वेन तदधीनत्वस्य – दंडप्रागभावनाशे – घटप्रागभावनाशेन- घटप्रागभावस्थितेः दंडप्रागभावस्थित्यधीत्वेन च दंडप्रागभावनाशाधीन नाशप्रतियोगित्वरूपदंडप्रागभावाधीनत्वस्य घटप्रागभाव इवोपपादितत्वात् । स्वत एवाविद्याप्रयुक्तत्वे तत्कार्यत्वापाताच्च । ततश्चात्र दीपिकाकारीयकुकल्पनं प्रेक्षावद्भिरनादरणीयमेवेति सिद्धं ॥

यत्तु । एतेन अविद्यानाशनाश्यत्वमविद्याप्रयुक्तत्वमन्योन्याश्रयाद्यांगीकर्तुमुचितमिति प्रकाशप्रसरोक्तिः परास्ता । नह्यनादिपदार्थो अविनाशीत्यत्र प्रमाणस्तीत्यादि । तदकांडतांडवायितं ॥ अस्माभिरनादिपदार्थाविनाशस्यानुक्तत्वात् । किंतु ॥ अनादिभावस्यापि निवृत्तिमंगीकृत्यैव तस्याविद्यानाशनाश्यत्वमन्योन्याश्रयादिना न युक्तमिति न तादृशं प्रयुक्तत्वमत्र विवक्षितुं शक्यमित्युक्तं । युक्तंचैतत् ॥ प्रयोजकनाशविधया अविद्यानाशस्य हेतुताया वक्तव्यतया अविद्यायाः प्रागेवप्रयोजकत्वस्यावस्यवक्तव्यत्वात् । अनादेः सत्यस्यैव निवृत्यभ्युपगमात् ॥

अनादेर्विनाशित्वमात्रेण प्रकाशाप्रसरोक्तान्योन्याश्रयस्यापरिहारेणासंबद्धप्रलपत्वाच्चेति ॥

यत्तु ॥ अथवा अविद्यावृत्तिविषयत्वं अविद्याप्रयुक्तत्वमित्यादि । तन्न ॥ त्वन्मते ह्यविद्यावृत्तेरेव कल्पनापदार्थत्वेन जगन्मिथ्यात्वसिद्धेः प्राक्तद्रूपाविद्यावृत्तेरसिद्धत्वात् । वाचस्पतिपक्षे जीवस्य स्वप्रकाशत्वेनाविद्यावृत्तिविषयत्वस्य दूषितत्वात् । शुक्तिरूप्यादिवदविद्यावृत्तिविषयत्वे ब्रह्मज्ञानेऽबाध्यत्वापातात् । जीवस्याविद्याश्रयत्वादेर्निराकृतत्वाच्चेति ॥

यदपि ॥ जीवस्याविद्याप्रयुक्तत्वाभावः किमद्वैतरीत्या उत स्वमतरीत्येत्यादि । तदप्यसारं ॥ त्वन्मतरीत्यैवानादिभावस्याविद्याप्रयुक्तत्वाभावस्योपपादितत्वात् । तत्र तस्य दुर्निवारत्वाच्चेति ॥

यत्तु ॥ द्वितीयाभाव इत्यारभ्याद्वितीयपदेन द्वितीयतादात्म्यानापन्नमित्यर्थस्यैव विवक्षितत्वादकिंचित्करमित्यंतं । तदपीमंद ॥ द्वितीयद्रव्यसामान्यतादात्म्यापन्नत्वेनाद्वैतचंद्रिकादि सिद्धे अध्यासभाष्यादिसिद्धे च शुद्धब्रह्मणि त्वत्कल्पिततत्तादात्म्यानापन्नत्वस्य विवक्षितुमशक्यताया असकृदावेदितत्वात् । तादात्म्यानापन्नत्वस्य तादात्म्यापन्नत्वाद्यभावरूपतया द्वितीयाभावादिस्थानाभिषिक्त तादात्म्यापन्नत्वाभावादावेवोक्तविकल्पतद्दूषणानामपरिहार्यत्वाच्चेति ॥

यदपि ॥ अस्तु वा द्वितीयाभावोपहितं चैतन्यं शुद्धपदार्थः द्वितीयाभावस्य सत्यत्वे ब्रह्मस्वरूपत्वेनाद्वैतहान्याभावात् । तस्य मिथ्यात्वे मिथ्याभूतस्य मिथ्यात्वेन बोधनेनातत्वावेदकत्वाभावादित्यादि ॥

तदप्यापातरमणीयं ॥ त्वन्मते मिथ्यात्वेनोपहितस्य शुद्धपदार्थत्वं निरस्तमेव । कृत्वा चिंतया तस्य प्रवृत्तत्वेपि द्वितीयाभावस्य सत्यत्वपक्षे तस्य ब्रह्मस्वरूपत्वेनाद्वैतहान्यभावस्य दुरुपपादत्वात् । तथाहि ॥ अत्रोक्तमद्वैतचंद्रिकायां ॥ प्रपंचनिषेधस्या-

धिकरणीभूतब्रह्माभिन्नत्वात् — निषेधस्य तात्विकत्वेपि नाद्वैतहानिकरत्वं । न च तात्विकाभावप्रतियोगिनः प्रपंचस्य तात्विकतापत्तिः । तात्विकाभाव प्रतियोगिनि शुक्तिरूप्ये व्यभिचारादिति । तन्न ॥ प्रपंचनिषेधस्य ब्रह्माभिन्नत्वे ब्रह्मनिष्ठत्वानुपपत्तेः । तस्य निर्विशेषत्वात् ॥ अत्यंताभेदे आधाराधेयभावानुपपत्तेः । कल्पितभेदस्याधाराधेयभावनिर्वाहकतायास्ता-दात्म्यनिरसनप्रस्तावे निरस्तत्वात् । न च निषेधत्वोपहितस्य ब्रह्मनिष्ठत्वो-पगमान्नानुपपत्तिरिति वाच्यं । निषेधत्वोपहितस्यैवात्र तात्विकत्वादि विकल्पस्य विवक्षितत्वात् । अत एव तस्य व्यावहारिकत्वे तत्प्रतियो-गिनो व्यावहारिकत्वानुपपत्तिः संगच्छते । अन्यथा घटाभावत्वेन ज्ञाय-मानघटाद्यभावस्य यत्र व्यावहारिकत्वं । तत्र घटस्यापि व्यावहारिक-त्वेन तदसंगतेः न च तदुपहितस्याभावस्य व्यावहारिकत्वे तस्यापि व्याव-हारिकत्वं । शुक्तिरूप्योपहिताभावस्य व्यावहारिकत्वेपि शुक्तिरूप्यस्य तददर्शनात् । एवं च प्रपंचनिषेधत्वोपहितस्य निषेधस्य ब्रह्मस्वरूपाति-रिक्तस्य तात्विकत्वे अद्वैतहानिः सुस्थैव । तरंगिण्यां तु "प्रपंचभ्रमा-र्थमधिष्ठानब्रह्मस्फुरणस्यावश्यकतया तत्र ब्रह्माभिन्नप्रपंचनिषेधस्यापि प्रकाशे प्रपंचभ्रमासंभवः । न चेदंत्वादिना अधिष्ठानप्रकाशेपि प्रपंचनिषेधत्वादि-ना न प्रकाश इति वाच्यं । तव मते प्रपंचनिषेधत्वादेरपि ब्रह्ममात्रत्वा" दित्युक्तं । कंटकोद्धारे तु ॥ "त्वन्मते ब्रह्मस्फुरणस्य साक्षिरूपत्वे न साक्षिरूपप्रकाशस्य भ्रमाविरोधित्वान्नभ्रमानुपपत्तिरित्यांशंक्य साक्षिणः समानविषयकाज्ञानभ्रमविरोधित्वाभवे ज्ञानत्वमेव न स्यात् । अज्ञानादि विरोधिन एव ज्ञानत्वात् । साक्षिगोचरसुखादावज्ञानभ्रमापत्तेश्चेति" समा-हितं । तत्र यद्यपि प्रपंचनिषेधस्य निषेधत्वस्यचाधिष्ठानब्रह्माभिन्नतया तत्स्फुरणे प्रकाशेपि न निषेधत्वप्रकारकत्वं तस्येति न प्रपंचभ्रमविरोधित्वं । तन्निषेधविषयकज्ञानमात्रस्य तद्भ्रमविरोधित्वे रजतनिषेधात्मकशुक्त्यादेरिदं

त्वादिना ज्ञानाद्रजतभ्रमस्याप्यनुपपत्तेः । नचाधिष्टानब्रह्मज्ञानं हि सत्वादिप्रकारकत्वान्निषेधत्वादिप्रकारकमपि । सत्वनिषेधत्वयोर्ब्रह्ममात्र त्वात् । शुक्त्यादेरिदं त्वादिकं तु न रजतनिषेधत्वादिरूपं । तस्य ब्रह्मवन्निर्धर्मकत्वाभावेन भिन्नानेकधर्मवत्वोपपत्तेरिति वाच्यं । तथापि निषेधत्वेन निषेधप्रकारकत्वाभावेन प्रपंचभ्रमविरोधित्वानुपपत्तेः न च ब्रह्मणि बाध्यत्वाभावरूपसत्वस्याभावत्वेन प्रकारत्वादुक्तदोषो दुर्वार इति वाच्यं । घटाभाववदित्यादि ज्ञानदशायामेव घटवदित्यादिभ्रमानुत्पत्या प्रतियोगितया तदुपहितनिषेधप्रकारकज्ञानस्यैव तद्भ्रमविरोधितया बाध्यत्वाभावरूप सत्वप्रकारक ज्ञानस्य घटाद्युपहितनिषेधप्रकारकत्वाभावेन घटादिभ्रमाविरोधित्वात् । न चैवं वेदांतजन्यनिर्विकल्पकचरमवृत्तेः प्रपंचोपहितनिषेधप्रकारकत्वाभावेन प्रपंचभ्रमनिवर्तकत्वानुपपत्तिरिति वाच्यं । श्रुत्यादिबलेन तस्यास्तथात्वकल्पनात् । तथापि स्यादेतदेवं यदि वेदांतवाक्यान्निर्विकल्पकं ज्ञानमुत्पद्येत उत्पन्नं च तत्सर्वदृश्यनिवर्तकमित्यत्र निरवकाशंप्रमाणमप्युपलभ्येत । न चैवमिति वक्ष्यते ॥ लोके तु निषेधस्फुरणमात्रस्य भ्रमनिवर्तकत्वमसिद्धमेव । सोयमित्यादिवाक्यान्निर्विकल्पकबोधस्य ततो भेदभ्रमनिवृत्तेश्चाखंडार्थत्वभंगे निरस्तत्वादित्ति तरंगिण्यभिप्रयो द्रष्टव्यः । किं च भ्रमकालप्रतीतस्य सापेक्षस्य च निषेधस्य भ्रमकालप्रतीत निरपेक्ष निर्विशेषब्रह्मस्वरूपत्वासंभवश्च । नचाभावस्य सापेक्षत्वंमायिकं । ब्रह्मणोनिरपेक्षत्वं तात्विकमतो न विरोध इति वाच्यं । मिथ्यात्वसिद्धेः प्राक् मायिकत्वादि कल्पनासंभवादिति ॥

यत्तु ॥ मिथ्यात्वेपि मिथ्याभूतस्य मिथ्यात्वबोधनेनातत्वावेदकत्वाभाव इति । तदद्वैतचंद्रिकादिनिरासक तत्ववाद्याकरग्रंथांध्यनिमित्तमेव । तथाहि ॥ भावाभावयोर्युगपदेकाधिकरणकत्वबोधकवाक्यवत् तदुभयोरभावस्य तदतात्विकत्वस्य च बोधकवाक्यस्याप्रामाण्यं तावद्दुर्वारमेव ॥

अत्रोक्तमद्वैतचंद्रिकायां ॥ ब्रह्मभिन्नं प्रपंचनिषेधादिकमतात्त्विक मतात्त्विकत्वेन बोधयंत्याः श्रुतेरप्रामाण्यासंभव इति ॥

तदयुक्तं ॥ भेदवाक्यानामनुवादकत्वादतत्वविषयकत्वं - अद्वैतवाक्यानां तु तन्निषेधकत्वात्तत्वविषयकत्वमिति यस्तवसिद्धांतः तद्विरोध एवानेनोच्यते । न तु याथार्थ्यरूपप्रामाण्याभावः । येन प्रपंचनिषेधस्यापि नानाशब्दार्थभूतब्रह्मभिन्नत्वेन निषेधप्रतियोगित्वरूपातात्त्विकत्वबोधकत्वेन श्रुतेरुक्तप्रामाण्यसमर्थनं संगच्छेत । एतेन यजेतेत्यादिश्रुतेरिवोक्तश्रुतेरपि व्यावहारिकं प्रामाण्यमक्षतमेव । तात्त्विकं तु नास्त्येवेत्युभयत्र चंद्रिकाद्वये तद्भाववर्णनमपास्तं । उक्तविभागभंगप्रसंगस्य दुर्निवारत्वात् । तरंगिण्यां तु ॥ प्रतियोगितदभावयोरतात्त्विकत्वबोधनं विरुद्धमित्युक्तं । तत्र भावाभावज्ञानयोः प्रतिबध्यप्रतिबंधकभावस्य सर्वानुभवसिद्धत्वात् - "नेह नाने"ति श्रुत्या ब्रह्मणि प्रपंचाभावज्ञाने तत्र तदभावज्ञानासंभवादुक्तनिषेधप्रतियोगित्वरूपमतात्त्विकत्वं प्रपंचतदभावयोर्बोधयितुमशक्यमिति तदर्थः । न च ब्रह्मणि घटो नास्ति घटाभावो नास्तीति ज्ञानानुदयेपि ब्रह्मणि ब्रह्मभिन्नं नास्तीति ज्ञानोत्पत्तौ बाधकाभावात् - ब्रह्मभिन्नत्वेन प्रपंचतदभावयोर्द्वयोरपि निषेधसिद्धिरितिवाच्यं । प्राचीनमते भावाभावज्ञानयोः समानविषयकत्वेनैव प्रतिबध्यप्रतिबंधकभावोपगमेन ब्रह्मण्यभावत्वेनाभावभाने ब्रह्मभिन्नत्वेनापि तदभिन्नभावभानायोगात् । समानप्रकारकत्वेनैव प्रतिबध्यप्रतिबंधकभाव इति नव्यमतेपि घटो द्रव्यमिति ज्ञानकाले भूतले घटोस्ति द्रव्यं नास्तीति ज्ञानं तावन्नानुभूयते । तन्निर्वाहश्च - घटो द्रव्यमिति ज्ञानविशिष्टस्य घटोस्तीति ज्ञानस्य तुल्यकालतया द्रव्यं नास्तीति ज्ञानप्रतिबंधकत्वोपगमेन वा- तादृशघट ज्ञाने नियमेन पूर्वोपस्थितद्रव्यत्वभानोपगमेन वा - कर्तव्यः । तथा च ब्रह्मभिन्नाभावो ब्रह्मभिन्न इति ज्ञानकाले न ब्रह्मणि ब्रह्मभिन्नाभावज्ञानसंभवः । तस्योक्तरीत्या स्वविरोधित्वात् । यदि च घटो द्रव्यमिति ज्ञान

कालेपि मूला... ...पश्चा-
त्त्राप्रामाण्यंगृह्यत इति ब्रूषे तर्हि प्रकृतेप्युक्तार्थे पश्चादेवाप्रामाण्यं गृह्यता
मित्यद्वैतश्रुतेरतत्वावेदकत्वमवर्जनीयमेवेति । कंटकोद्धारे तु ॥ श्रुत्या
निषेधमात्रस्य बोधनेनातात्विकत्वांशे तस्या औदासीन्यादित्युक्तं । तत्र
निषेधस्य निषेधत्वेनातात्विकत्वं श्रुत्या न बोध्यत इति तदर्थः । ॥ ब्रह्मभि-
न्नत्वेनातात्विकत्वबोधस्तूक्तरीत्या निरसनीयः ।

एतेन यल्लघ्व्यां - कथमुक्तश्रुत्या मिथ्यात्वेन प्रपंचतदभावयोर्बोधः ।
ब्रह्मणि प्रपंचाभावबोधनेपि अभावे प्रपंचसामानाधिकरण्यस्य तत्र प्रपंचान्यून
सत्ताकत्वस्य चाबोधनादित्याशंक्योक्तं । इहेत्यस्य प्रपंचविशिष्टब्रह्मणीत्यर्थ-
कत्वात् - किंचेत्यस्य च "अतोन्यदार्तमिति" श्रुत्यादिमानेन विनाशितया
प्रमितं दृश्यमात्रमित्यर्थकत्वात् - विनाशिदृश्यविशिष्टे ब्रह्मणि विनाशिदृश्यं
नास्तीति बोधस्योक्तश्रुत्या संभवात् । विनाशिदृश्याभावस्य चोक्तश्रुतिप्रमि-
तत्वेनाप्रातिभासिकत्वानुमितिसंभवात् - विनाशिदृश्यत्वावच्छेदेनाप्रातिभासि-
कस्वसमानाधिकरणात्यंताभावप्रतियोगित्वरूप मिथ्यात्वनिश्चयस्यानुमितिद्वा-
रोक्त श्रुतितात्पर्य विषयत्वसंभवात् । न च विनाशिदृश्यविशिष्टे विना-
शिदृश्यं नास्तीति बोधस्याहार्यत्वात् न शाब्दत्वमिति वाच्यं । नानेति
पदस्यनाञ् प्रत्ययांत नञ् पदसिद्धस्य भेदार्थकत्वात् । ब्रह्मपरपदयोगेन ब्रह्म
भेदबोधकत्वात् । उक्तानुपपत्या विनाशिदृश्यत्वस्य तादृशबोधे अभावप्र-
तियोगितावच्छेदकतया भानासंभवेपि प्रतियोग्यंशे विशेषणतामात्रस्वीकारेण
विनाशिदृश्यानामात्मभिन्नत्वमात्ररूपेणाभावबोधस्याहार्यत्वासंभवात् ॥

किंच "अत्यंतबाधितेप्यर्थे ज्ञानं शब्दः करोति ही"ति खंडनोक्तेः
शाब्दबोधस्याहार्यत्वं स्वीक्रियत इति । तन्न ॥ इहेत्यस्य प्रपंचविशिष्टा-
र्थकत्वे मानाभावात् । "विद्वान्ब्रह्मामृतोऽमृत"मित्यादिना मोक्षजनक-
ज्ञानविषयतया प्रकृतस्य शुद्धब्रह्मण एव तदर्थताया वक्तव्यत्वात् ।

प्रपंचस्य निरुक्तमिथ्यात्वबोधादेव तत्कल्पनेत्यन्योन्याश्रयात् । एतच्छ्रुतेः प्रपंचाभावे अप्रातिभासिकत्वानुमितिद्वारेव ब्रह्मणः श्रुत्यंतरजन्यप्रपंचविशिष्टत्व बोधद्वारापि निरुक्तमिथ्यात्वनिश्चये तात्पर्यस्य सुवचतया इहेति शब्दस्य प्रपंचविशिष्टब्रह्मपरत्वस्यानावश्यकत्वाच्च । एवं किंचनेत्यप्यसत् ॥ अतोन्यदित्यनेन ब्रह्मभिन्नत्वस्याप्युक्ततया किंचनशब्देन तस्यापि ग्रहण संभवेन नानेत्यस्य वैयर्थ्यापातात् । ब्रह्मार्थकपदयोगेनेत्यप्ययुक्तं । "विनञ्भ्यां नानाञौ न सह"इति सूत्रेण नानाशब्दस्यासाहित्यवाचित्वात् । कथंचिद्भेदार्थकत्वेपि इहेति सप्तम्यंतपदेन ब्रह्मप्रतियोगिकत्वस्य तत्र बोधयितुमशक्यत्वात् । "पृथग्विना नानाभिस्तृतीयान्यतरस्या"मितिसूत्रेण तृतीयांतपदस्यैव तत्प्रतियोगिकत्वबोधकत्वानुशासनात् । अध्याहारस्य चागतिकगतित्वात् । प्रकृते चानेकपर्यायनानाशब्दग्रहणसंभवेनागतिकत्वासिद्धेः । अनेकत्वस्य च स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसंबंधेन भेदविशिष्टान्यविताavच्छेदकवत्वरूपस्य व्यासज्यवृत्तिधर्मवत्वरूपस्य वा प्रकृतब्रह्मभेदाघटितत्वात् ।

किंच किंचनशब्दस्यैवोक्तरीत्या ब्रह्मभिन्नदृश्यार्थकत्वसंभवात् नाना शब्देन तद्बोधनायासोव्यर्थ एव । न च प्रतियोगिविशेषणतापन्नेषु कस्यचित्प्रतियोगितावच्छेदकत्वं भाति कस्यचिन्नेत्यस्यानुभवविरुद्धत्वान्नब्रह्मभिन्नत्वं किंचन शब्दार्थः । तथा सति तस्यापि दृश्यत्ववत्प्रतियोगिविशेषणतापत्तेः । अतस्तस्य प्रतियोग्यविशेषणत्वेनावच्छेदकत्वलाभाय ब्रह्मभिन्नत्वार्थकं तृतीयांतं नानापदं । तथा च प्रतियोगिविशेषणतानापन्ने प्रतियोगितावच्छेदकत्वमवगाहमानाधीः न प्रतियोगिविशेषणतानापन्नेपि तदवगाहत इति नियमात् घटत्वेन पटोनास्तीत्यादौ घटत्वादिमात्रस्येव ब्रह्मभिन्नत्वेन दृश्यं नास्तीत्यत्र ब्रह्मभिन्नत्वमात्रस्य प्रतियोगितावच्छेदकत्वभानमुपपद्यत इति वाच्यं । तथा सति भिन्नार्थकप्रथमांत नानापदमादाय दृश्यविशिष्ट-

ब्रह्मणि ब्रह्मभिन्नं नास्तीत्युक्त्यैव विवक्षितार्थसिद्धौ भेदार्थकतृतीयांत नानापदमादाय प्रतियोगिबोधक किंचनपदोपादानस्य श्रुतौ निर्बीजत्वापत्तेः । न च दृश्यत्वावच्छेदेन तादृशप्रतियोगित्वसिद्धये तदिति वाच्यं । ततोऽभावांशेप्रतियोगितासंबंधेन दृश्यत्वावच्छिन्नप्रकारताकबोधस्यैवोत्पत्या दृश्यत्वावच्छेदेन प्रतियोगित्वाबोधनात् । उदीच्यतद्बोधस्य च दृश्यमात्रं ब्रह्मभिन्नमिति ज्ञानसहकृते ब्रह्मणि दृश्यं नास्तीति बोधेनैव निर्वाहात् । स्वरूपेण निषेधप्रतियोगित्वमिति पक्षे दृश्यमात्रे स्ववृत्तिरूपावच्छिन्नप्रतियोगिताघटितमिथ्यात्वनिश्चयाय तादृशज्ञानस्यावश्यकत्वात् ।

किंच वैशिष्ट्यस्य भेदघटितत्वात् ब्रह्मदृश्ययोर्वैशिष्ट्यज्ञाने तयोर्भेदस्यापि भानेन ब्रह्मभिन्नदृश्यविशिष्टत्वेन भासमाने ब्रह्मणि ब्रह्मभिन्नत्वेन दृश्याभावज्ञानमप्याहार्यमेव । नच ब्रह्मणि दृश्यवैशिष्ट्यज्ञाने दृश्यभेद एव भाति न तु ब्रह्मभेद इति शंक्यं । इतरेतराध्यासेन ब्रह्मभेदस्यापि भानात् । न च भेदस्य संसर्गतया भानेपि प्रकारतया तदभानान्नाहार्यतेति वाच्यं । भेदसंसर्गकज्ञानस्यापि भेदप्रकारकज्ञानवद्विरोधितया अनुभवसिद्धत्वेन तवापि संमतत्वात् । विरोधिविषयकस्य तस्यानाहार्यत्वासंभवात् । किंचेत्यप्यसत् ॥ अत्यंतबाधित इति कारिकया शाब्दज्ञानस्य मानांतरबाध्यत्वमात्रप्रतीत्या आहार्यशाब्द बोधाबोधनात् । किंच ॥ आहार्यशाब्दांगीकारे "तद्धैकआहुरसदेवेदमग्रआसी"दिति श्रुते असतः सत्वबोधकत्वस्यापि संभवात् त्वन्मते अर्थांतरपरतया व्याख्यानासंगतिः । नचासतः सत्वं विरुद्धं ॥ दृश्यतदभावयोरिव सत्वासत्वयोरपि व्यावहारिकयोरविरोधस्य सुवचत्वात् । तस्मात् इह ब्रह्मणि नाना भिन्नं किंचनगुणक्रियादिकं नास्तीत्यादिरेव न्यायामृतोपदर्शितरीत्या श्रुत्यर्थः । न तु त्वत्परिकल्पितप्रपंचमिथ्यात्वबोधकत्वमित्यलमपहसनीयप्रक्रियानिराक्रिययेति ।

एतेन ॥ भवदीयन्ययामृत तरंगिण्यादि निरासेनाद्वैतसिद्धि लघुचंद्रिकादिषु प्रतिपादितत्वादिति परप्रलापोप्यपोठः । उक्तरीत्या लघुचंद्रिकादि निरासप्रकारस्याकरग्रंथानुसारेण त्वदुन्मादपरिहाराय लेशतोऽत्र प्रकाशितत्वात् । एवमेव लघुचंद्रिकाद्युक्तसकलदूषणाभासनिरसनप्रकारो विशेषत आकरे कृतो द्रष्टव्यः विस्तरभयान्नेहप्रपंच्यते ॥

यत्तु । घटध्वंसइत्यादौ घटप्रतियोगिताकत्वस्यैव विशेषणत्वात् तस्य चाभावे वर्तमानत्वादिति । तन्न ॥ लघुचंद्रिकादौ न हि प्रतीतिकाले प्रतियोगिता सत्वेनावभासते । इदानीं ध्वस्तो घट इत्यादौ एतत्कालीनत्वस्य ध्वंस एव भानात् । अभावप्रतीतौ भानमात्रेण सत्ताभ्युपगमे घटस्यापि सत्वापातादित्यादिना प्रतियोगिताया अपि घटसमानाकालिकात्वाभ्युपगमेन तस्या अपि विशेषणत्वानुपपत्तेः । विशिष्टबुद्धौ प्रतियोगितया तद्विशेषिताभावबुद्धेरेव विरोधित्वांगीकारेण प्रतियोगितासंसर्गकपरिष्कारस्य कृतत्वाच्च ॥

किंच ॥ यत्रोपहितव्यवहारः - तत्रविशिष्टव्यवहारः - यत्र विशिष्टनाशादिप्रत्यक्षं - तत्रोपहितनाशादिप्रत्यक्षं - योपहितसामग्री सैव विशिष्टस्येति कारणभेदानिरूपणात् । फलभेदानिरूपणात् ॥ परस्पराविषयकप्रतीतिविषयत्वादिरूपभेदकधर्माभावाच्च - उपहितविशिष्टयोर्भेदो निष्प्रमाणक एव । न च दंडीप्रमेय इत्यत्र दंडविशिष्टउद्देश्यः दंडी भुङ्क्ते इत्यत्र दंडोपहितउद्देश्य इति प्रतीतिबलात्तयोर्भेद इति वाच्यं । तस्या उक्तार्थाविरुद्धविषयकत्वात् । विशिष्टउद्देश्य इत्यत्र विधेयभूतप्रमेयत्ववत्वेन भासमानदंडाश्रयः प्रमेयत्वंप्रत्युद्देश्यः - उपहित उद्देश्य इत्यत्र विधेयभोजनाश्रयत्वेनाप्रतीयमानः भोजनसमकालिकत्वेन प्रतीयमानश्च यो दंडः तदाश्रय उद्देश्य इति प्रतीयते । तथा च विधेयाश्रयत्वेन भासमानत्वतदभावयोरेव दंडांशे विषयीकरणान्नतत्प्रतीतिबलादुपहितविशिष्टयोर्भेदसिद्धिः ।

अन्यथा सोस्तीत्यत्र तत्तोपलक्षितउद्देश्यः - अयं कांच्यामभूदित्यत्रेदंत्वोपलक्षितः - चैत्रोस्तीत्यत्र शुद्धचैत्र उद्देश्य इति प्रतीत्या तत्तेदंतोपलक्षितयोरपि परस्परं शुद्धेन च भेदप्रसक्त्या सोयं देवदत्त इत्यादौ तत्त्वमसीत्यादौच तत्तेदंतोपलक्षितयोः तत्त्वं पदोपलक्षित चेतनयोश्च प्रतीयमानाभेदस्य प्रातीतिकत्वापत्तेः । तयोर्भेदेपि स्वरूपमात्रबोधस्य ततो जायमानस्य प्रमात्वात्तद्वाक्यप्रामाण्यमिति चेत् न । तत्त्वंपदादीनां विशिष्टोपहितार्थकत्वेप्येवं वक्तुं शक्यत्वेन तत्परित्यागस्यानुचितत्वात् । नच दंडविशिष्ट - दंडोपहित - दंडोपलक्षितोद्देश्यकानां दंडी द्रव्यवानिति ज्ञानानां विषयावैलक्षण्ये वैलक्षण्यायोगाद्विशिष्टोपहितोपलक्षितानां वैलक्षण्यमावश्यकमिति वाच्यं । उद्देश्यतावच्छेदकदंडे विधेयभूतद्रव्याश्रयत्वभान तदभान सहिततत्समकालीनत्वादिसंबंधांतरभानेनैतदुभयसाहित्यविशिष्टधर्मितावच्छेदकत्वमात्रेणैव तद्वैलक्षण्यसंभवात् । त्वद्रीत्यापि उद्देश्यतावच्छेदकदंडादौ विधेयाश्रयत्वादिभानस्यावश्यकत्वात् । अन्यथा दंडिनं द्रव्यवत्वेन जानामीत्यनुव्यवसायस्योक्तप्रतीतित्रयस्थलेप्यंगीकारापत्योक्तप्रतीतित्रयस्य परस्परवैलण्यस्यैवासिद्धिप्रसंगात् । विशिष्टधर्मिक विधेयप्रकारक ग्रहोत्तरमुद्देश्यतावच्छेदके दंडे - द्रव्यवान्नवेति संशयानुत्पत्तिः - उपहितधर्मिकतादृशग्रहोत्तरं तादृशदंडे द्रव्यवत्वरूप विधेयतदभावोभयकोटिक संशयोत्पत्तिरिति वैलक्षण्याभावापत्तेः । दंडांशे विधेयभानस्योभयत्रापि तुल्यत्वात् ॥

यत्तु ॥ उपलक्षणतयोपात्तस्य शाब्दबोधे भानं नास्ति । किंतु तदुपस्थापित धर्मांतरस्य । तदुपस्थापित स्वरूपमात्रस्य वा भानमिति । तदसत् ॥ पदवृत्यनुपस्थापितस्य शाब्दबोधे भाने घटशब्देन समवायेनोपस्थापितगगनादीनामपि भानापत्तेः । अन्यथा धूमोस्तीति वाक्यप्रयोक्तृतात्पर्यविषयीभूतवन्ह्यनुमितेरपि शाब्दत्वापातात् । स्वरूपमात्रोपलक्षकत्वं त्वश्रद्धेयमेव । स्वरूपमात्रबोधस्योपलक्षणया धर्मांतरोपादानस्थले अनुभव-

बाधितत्वाच्च । विवेचयिष्यतेचेदमुपरिष्टात् । तद्विधेयकबोधे तत्सम-कालिकत्वमात्रेणावभासमानेष्वप्युद्देश्यतावच्छेदकेषु विशेषणत्वव्यवहारः यथा तिलकी कर्मकुर्वीत धनवान्सुखीत्यादौ तिलकादीनां । तदभिप्रायेण तिल-कादिविशिष्टोद्देश्यकस्थलमिति व्यवह्रियते । कदाचित्तिलकादौ कर्मकरण-रूपविधेयाश्रयत्वभानं - तु - समकालिकत्वमात्राभिप्रायं । क्वचित्पदश-क्यकोटावप्रविष्टः तच्छक्तेरितरव्यावृत्तिनिर्वाहकोप्युपाधिरुच्यते । यथा धेनुपदप्रयोगे गोत्वं । समुदायशक्त्यनंगीकारे पंकजपदप्रयोगे पद्मत्वं । क्वचिन्नीलाविषयकत्वमात्रेण नीलोपलक्षितस्य ज्ञानमिति - नीलस्य ज्ञानसम-कालिकत्वतात्पर्येण नीलविशिष्टस्येदं ज्ञानमिति - विशिष्टादिव्यवहाराणां तात्पर्यानुसारेणैकवस्तुबोधकत्वात्तद्बलेनोपहितविशिष्टभेदसिद्धिः । अन्य-थोक्तव्यवहारबलात् तिलकीकर्मकुर्वीतेत्यादि वाक्यानां विशिष्टोद्देश्यकत्वतद-भावौ - स्यातामिति दिक् । तथा च ब्रह्मानंदप्रदर्शित विशिष्टादिविभा-गोप्यनुपपन्न एवेतिसिद्धं ॥

यदपि ॥ एतेन निमित्ततयाप्यज्ञानप्रयुक्तत्वोपपत्त्या जगत्सत्यत्वेपि तत्संभवादनादिजगतः सत्यत्वेपि ज्ञाननिवर्त्यत्वोपपत्त्या अद्वैतहानिरिति प्रस-क्तोक्तिः परास्ता । अविद्यानिमित्तकस्यापि ब्रह्मोपादानकत्वांगीकारादि-त्यादि । तदप्ययुक्तं ॥ भामतीमते अविद्याया अनुपादानत्वपक्षे-अरुच्या यद्वा अविद्याजीवावेव प्रपंचं प्रति परिणामविवर्तोपादानभूतौ इति पक्षांतरस्य व्यवस्थापितत्वेनाविद्याया दोषविधयानिमित्तकारणत्वस्य वाचस्प-तिसंमतत्वोक्तेरनुचितत्वात् । यच्च ॥ ब्रह्मविवर्त्तत्वान्न सत्यत्वमिति कल्प तरुकारा मन्यंत इति । तदसत् ॥ अज्ञानसिद्धेः प्रागज्ञानोपहिता-ज्ञानादिग्राहकसाक्षिस्वरूपस्यैवासिध्या तात्विकत्वापातेन शुद्धचिद्द्वैधत्वानंगी-कारेण चाविद्याहेतुकजगदारोपासंभवस्योक्तत्वात् । अविद्योपादानकत्वा-भावे जगतो ज्ञाननिवर्त्यत्वाभावप्रसंगात् । कथंचित्तत्प्रयुक्तस्य तन्निवर्तक-

ज्ञाननिवर्त्यत्वे परंपरया शुक्त्यज्ञानप्रयोज्यस्य रजतार्थिप्रवृत्तिसमकालिक-कंटकवेधादिजन्यदुःखादेरपि शुक्तिज्ञाननिवर्त्यत्वप्रसंगाच्च । ततश्च अविद्या-नुपादानकत्वे जगतः ब्रह्मविवर्तत्वस्यैवासंभवदुक्तिकत्वात् अनादिदृश्यस्य-सत्यतापादनं निराबाधमेव ॥

यत्तु ॥ यदि ह्यविद्याया निमित्तत्वं ब्रह्मणोनुपादानत्वंचेत्यारभ्य-प्रजायेयेत्यपि दृश्यतइत्यंतं । तदसारं ॥ तथाहि ॥ यत्तावदुक्तं न हि ब्रह्मानुपादानतायां "यतोवे"त्यादि श्रुतिरुपपद्यते - न वा "बहुस्यां प्रजाये-येति"वाक्यं संगच्छत इति न किंचिदनुपपन्नं नहि मंत्रीस्यामिति संकल्प्य - प्रजायेयेत्यपि दृश्यते इति । अत्रोच्यते ॥ नतावत्"यतोवा इमानि भूतानि जायंत" इति पंचमीश्रुतिरुपादानत्वे मानं । "जनिकर्तुः प्रकृति-रिति"सूत्रवृत्तौ प्रकृतिपदं हेतुमात्रपरमित्युक्त्वा पुत्रात्प्रमोदो जायत इत्यु-दाहृतत्वेनोक्तपंचम्योपादानत्वाबोधनात् । एवं महाभाष्येपि - "अय-मपि योगः शक्योऽवक्तुं । कथं ॥ गोलोमाविलोमभ्यो दूर्वा जायंते अपक्रामंति तास्तेभ्य"इत्यादिना लोमादीनां दूर्वादीन्प्रत्यवधित्वात् - ध्रुवम-पायेअपादानं" इत्यनेनैवापादानसंज्ञासिद्धेरिदं सूत्रं नारंभणीयमिति दर्शितं । कैयटेपि ॥ अपक्रामावधिलोमादिषु कार्यप्रतीतिर्नसंभवतीत्याशंक्य"बिला-न्निष्क्रामतो दीर्घभोगस्य भोगिनोऽविच्छिन्नतया तत्रोपलब्धिवत् कार्यस्यापि दूर्वादेस्तत्रोपलब्धि"रिति अवधित्वमेव तस्योपपादितं । तथा च भष्यका-रपक्षेपि उपादान एव जनि धातुयोगे पंचमीत्यनंगीकारात् - प्रकृते पंचमी अपादान एव - श्रृंगाच्छरो जायत इत्यादिवत् । न च लोमादीनां तदा-त्मनापरिणतानां कथं विभागावधित्वरूपमपादानत्वमिति शंक्यं । श्रृंग मृत्पिंड लोमादिघटक भागविशेषणामेवशरघटदूर्वांकु राद्यात्मना परिणत-त्वात् । तद्भागनिष्ठविभागावधिभूतभागविशेषाणामेव प्रकृतवाक्यघटक-श्रृंग लोम मृत्पिंड पदतात्पर्य विषयत्वेनापादानत्वोपपत्तेः । तद्भा-

क्याद्बोधप्रकारस्तु यथा वृक्षात्पततीत्यनेन वृक्षावधिक विभागानुकू-लवृत्ति भेदप्रतियोगितावच्छेदिका या पतनक्रिया तदाश्रयः पर्ण-मिति । तथा प्रकृते - मृत्पिडलोमादि भागनिष्ट विभागजनकीभूत तन्नि-ष्टभेदप्रतियोगितावच्छेदक परिणामविशेषभूत जनिकर्ता दूर्वादिरिति । शरस्तृणराजविशेषः । कर्दमनिक्षिप्तमहिषीश्रुंगेण शरांकुरोत्पत्तिः । परि-णामरूप व्यापारस्य तु तादृशभागांतरावधिकविभागानुकूलत्वमेव । नतु समीपवृत्तितद्भागानंशभूतपदार्थांतर विभागानुकूलत्वं । मानाभावात् ॥ अवयव विभागानुकूलत्वं वा आवश्यकं । तस्मादुद्गमनं विनां रूपांतरा-पत्तिरूप परिणामायोगात् । पदार्थांतरविभागस्तु सर्वप्रत्यक्षसिद्ध क्रियांतरेणैव । अतो यत्र मृत्पिंडाद्घटो जायत इति व्यवहारः तत्र तत्संयुक्तपदार्थांतराद्घटो जायत इति न व्यवहारः । इदं तु लोकानां बीजादिभागादंकुरादेरुद्गमनदृष्टिमवष्टभ्य - न तु सांख्यनैयायिकादिमतमव-लंब्य । तयोरेकस्य सत्कार्यवादित्वात् ॥ अन्यस्य तु श्रुंगलोमादिनाशा नंतरमेव तदवयवसमवेतमसदेव कार्यं जायत इत्यभ्युपगंतृत्वेन परिणामादेर-प्रसिद्धेरिति कैयट एवोक्तं । एतन्मते दुग्धाद्दधि जायते तंतुभ्यो वस्त्रं जायत इति प्रयोगा न मुख्याः । तंतवः पटी भवंति दुग्धमेव दधि भवतीति प्रतीतिबलेन तद्विभागादेर्बाधितत्वात् । यो भागो घटात्मनापरिणमते तत्तात्पर्येण मृत्पिंडाद्घटो जायत इति व्यवहारो अमुख्य एव । न च विभाषागुणेऽस्त्रिया''मित्यनेनैव पंचमीहेतावेवास्त्वितिवाच्यं । ''भीत्रा-र्थानां भयहेतुः - वारणार्थानामीप्सित'' इत्यादिसूत्राणि प्रत्याचक्षाणेन भाष्य-कृता चोराद्बिभेति - यवेभ्यो गां वारयति कूपादंधं वारयति पापात्त्रायते इत्यादिस्थलेषु बौद्धमेवापायावधित्वरूपमपादानत्वं स्वीकृत्य तादृशप्रयोगाणां समर्थितत्वात् । प्रकृतेपि तथात्वमेव । बौद्धत्वं च यथाकथंचिद्गौण त्वात् । सर्वत्र मुख्यप्रयोग एव तत्तत्सूत्रै रपादानसंज्ञेत्यभ्युपगमे भया-

त्त्रायते एको भ्राताऽन्यस्माद्विभक्तः । संकल्पाचलतीत्यादौ पंचमी न स्यात् । भयस्य स्वहेतुत्वाभावात् ॥ भ्रात्रोर्गुणरूपविभागस्य परस्परं स्व स्वमात्रस्वामिकद्रव्यकरणमात्रेणानुत्पत्त्या धृवमपाय इत्यनेनापादानसंज्ञाऽप्राप्तेः - अन्यस्य च तद्विधायकस्याभावात् - संकल्पे विभागायोगाच्च । मुख्यगौणसाधारण्येन सूत्रोक्तकार्याभावे पांडवः आधिरथिः कर्ण इत्यादावपत्यार्थे अणादिप्रत्ययो न स्यात् । तत्र पांडुजन्यत्वाद्यभावात् । एवं रथो ग्रामं गच्छतीत्यपि न स्यात् । रथस्य कर्तृत्वाभावात् । ग्रामस्य तदीप्सिततमत्वाभावाच्च । इत्थं च सूत्रस्थापायशब्दोपि विभागरूपमुख्यार्थ - संश्लेषाभावरूपगौणार्थोभयपर एव । तथा च "यतोवेत्यादि" कारणवाक्येनापि ब्रह्मरूपविशेषनिष्ट विभागानुकूल ब्रह्मवृत्ति भेदप्रतियोगितावच्छेदकपरिणाम विशेषवंतिभूतानीति बोधः । ब्रह्मरूपविशेषोदरस्थस्य जगदात्मना भागविशेषेण विक्रियमाणाव्यक्तस्य ब्रह्मरूपविशेषेणविभक्तत्वादपादानत्वनिर्वाहः । तदुक्तमनुव्याख्याने ॥ "स्वदेहादिच्छया विश्वं भुक्तपूर्वं जनार्दनः । ससर्ज माता पितृवदूर्णनाभिवदेववे" ति । उपपादनप्रकारश्च श्रीमन्न्यायसुधातोऽवगंतव्यः । वृत्तिकारादिमते तु ॥ कारणमात्रस्य प्रकृतिपदार्थत्वेनापादानसंज्ञायां यतोवेत्यादिवाक्येन यद्धेतुकोत्पत्तिमंतिभूतानीत्येवबोधः । तथा च भाष्यकारस्यापि पक्षे उपादानता निरूपितप्रयुक्तत्वविशेषस्य जनीत्यादिसूत्राभिप्रेततताया अप्रामाणिकत्वात् । यत इत्यादौ पंचम्यास्तदर्थकत्वकल्पनमप्ययुक्तमेव ॥

अत्रोक्तमद्वैतसिद्धौ ॥ पंचम्याः कारणत्वमात्रार्थकत्वेपि प्रकृते वाक्यशेषबलादुपादानत्वरूपतदर्थकत्वे पर्यवस्यति पंचमी । यथा "पशुनायजेते" ति वाक्यस्थ पशुपदं "छागस्यवपायामेदस" इत्यादिवाक्यशेषबलाच्छागेपर्यवस्यति । अवधिपंचमीपक्षेपि श्रृंगाच्छर इत्यादौ निमित्तत्वरूपावधिपरत्वेपि प्रकृते नियामकसत्वेनोपादानत्वरूपावधिपरत्वमेव । "आत्मन

आकाशः संभूत''इत्यादावप्युपादानरूपप्रकृति पंचमी । ''सच्चत्यच्चाभवदिति''वाक्यशेषेण तदैक्षत बहुस्यांप्रजायेयेति वाक्येन च प्रतीतसामानाधिकरण्यस्यैव नियामकत्वादिति । तदसत् ॥ यत्प्रयंत्यभिसंविशंतीत्यादिना प्रतीयमान लयाद्यधिकरणत्वस्य गेहे निविष्टो नष्टो घट इत्यादाविवोपपत्तेरस्योपादानत्वाप्रत्यायकत्वात् । सच्चत्यच्चाभवदिति वाक्यस्य ब्रह्मवल्लीस्थस्य यतोवेत्यादि भृगुवल्लीस्थवाक्यं प्रति शेषत्वाभावात् । अवधिपंचमीत्वपक्षे पूर्वोपपादितरीत्योपादानत्वाभावस्यैवावधौ सिध्या तस्योपादानत्वपरत्वकथनासंगतेः । अतएवोक्तनियामककथनमकिंचित्करं । अवधित्वेनैवोपादानत्वाभावस्यैव प्राप्त्या नियामकशतेनाप्युपादानत्वस्यासिद्धेः सच्चत्यच्चेत्यादिवाक्यं तु । सृष्ट्वा जगदिदं सर्वं नियामकतया स्यतु । बहुरूपो भवानीति स्याज्जगच्चेत्यचिंतय''दित्यादि तैत्तिरीयभाष्येण - ''तदैक्षत बहुस्यामि''तिवाक्यं तु - ''बहुस्यामिति संकल्प्य तेजः प्रभृतिसर्जनं । गुरुः स्यामिति संकल्प्य शिष्यसंपादनं यथेत्यादि'' छांदोग्यभाष्येण च सम्यग्व्याख्यातमवगंतव्यं । अत्र यत्परैरुक्तं ॥ परमेश्वरस्य स्वकीयनियामक बहुभावेच्छा नघटते । तद्रूपाणामपि नित्यसिद्धत्वादिति । तत्तु - गुणपूर्णत्वविचारावसरे भगवदत्यंताभिन्नेष्वेव ज्ञानेच्छादिषु शक्तिव्यक्त्यंगीकारेण अचिंत्यशक्त्या विशेषमहिम्ना च रूपविशेषाभिव्यक्तीच्छादेरुपपत्या निरस्तप्रायमेवेति नेह पुनः प्रयतितव्यं ॥

यदपि । ब्रह्मानंदेनोक्तं । ''अवसादसुवाच्यत्वदौर्बल्याज्ञप्त्य साधुताः । प्रकृतिप्रकृतितोन्यत्र कुर्वंस्तन्नामको हरिरिति भाष्यं'' - तच्चा निरुक्तं विज्ञानं तथा निलयनं महान् । सत्यं प्राणस्तथा श्रीश्चेत्यादि भाष्यं च परस्परविरुद्धं । सत्यादिशब्दानां प्राणादिपरत्वे भगवद्गुणाभिव्यक्तिपरत्वायोगात् । योगे वा महरादिपरत्वोक्तेरुन्मत्तप्रलपितत्वापत्तेरिति । तदेवोन्मत्तप्रलपितमनादेयमेव । सत्यादिशब्दैस्तात्तच्छब्दवाच्यप्राणादीनां

तत्तन्नियामकभगवद्रूपस्य च द्वयोरपि प्रतिपादनात् । प्राणादीनां परमात्म प्रतीकत्वेन चैत्रादिशब्दैः पिंडावच्छिन्नचैतन्यस्यैव सत्यादिशब्दैः शरीरस्था-नीयप्राणाद्यवच्छिन्नेश्वरबोधकत्वस्याव्यक्ताधिकरण न्यायसिद्धत्वात् । पर-मते सोऽकामयेतेति कामनायाः जगदुपादानकारणत्वेनाभिमते शुद्धे ब्रह्मण्य-नुपपत्तेः । "तत्सृष्ट्वातदेवानुप्राविशत् तदनुप्रविश्य सच्चत्यच्चाभवदि"युक्तेः जगदुत्पत्ति तत्प्रवेशानंतरमेव सदादिभवनस्योक्तत्वेन तस्य जगत्सृष्टित्वानुपप-त्तेरस्य वाक्यस्य ब्रह्मणो जगदात्मत्वे प्रमाणत्वेनोपन्यासासंभवश्च । न च निमित्तकारणत्वेन कामनोपपत्तिः । परमते विवर्तोपादानत्वातिरिक्तनिमि-त्तकारणत्वस्य दुर्वचत्वेनानुपदमेव तस्य निरसिष्यमाणत्वात् । न च मुखं व्यादाय स्वपतीतिवत् क्त्वाप्रत्ययस्समकालिकत्वार्थकोऽस्त्विति वाच्यं । पूर्वकालिकक्रियायामेव क्त्वाप्रत्ययस्य सूत्रविहितत्वेन क्वाचित्कप्रयोगमात्रसि-द्धलाक्षणिकार्थांगीकारे मानाभावात् । तथात्वेपि सदादिभवनातिरिक्तसर्ज-नप्रवेशयोः प्रकृतोपयोगिनोर्वक्तुमशक्यतया तादृशक्रियाणां परस्परं समका-लिकत्वोक्त्यसंगतेश्च । सत्त्यच्छब्दाभ्यां मूर्तामूर्तरूपनिखिलप्रपंचस्योक्त-त्वेन निरुक्तादिपदवैयर्थ्यं । एवं सदादिभवनस्यैव जगत्सृष्टिरूपत्वे"स इदं सर्वमसृजत"इत्यनेन पौनरुक्त्यं च । शुक्तेः रजतं संभूतं - शुक्ती रजत-मभवदित्यादिव्यवहाराभावेन ब्रह्मणो जगदारोपाधिष्टानत्वे"आत्मन आकाशः संभूतः सच्चत्यच्चाभवदित्याद्ययोगश्च । नच मूर्तामूर्तविवरणरूपत्वान्न निरुक्तादिपदवैयर्थ्यं" । "स इदं सर्वमसृजत" इतिवाक्येन निमि-त्तकारणत्वमात्रमुच्यत इतिभ्रांतिनिरासायोपादानत्वनिर्वाहककार्यतादात्म्यस्य सच्चत्यच्चाभवदित्यनेनोक्तेः । किंच अपंचीकृतसमष्टेरेव सृष्टिं तत्प्रवेशं-चोक्त्वा पंचीकृतसमष्टेः सृष्टिः सचेत्यनेनोच्यत इति नपौनरुक्त्यं । न च पंचीकृतेषु प्रवेशालाभः । अपंचीकृतेषु प्रवेशोक्त्यैव पंचीकृतेषु प्रवेशस्यो-क्तप्रायत्वात् । शुक्त्यवच्छिन्नचित एव रजतोपादानत्वेन शुक्ते रजतोपा-

दानत्वशून्यतया शुक्ती रजतमभवदित्यादिव्यवहाराभावेपि प्रकृते तथा व्यवहारे बाधकाभावान्नोक्तदोष इति वाच्यं । उक्तार्थविवरणरूपतया पौनरुक्त्यपरिहारस्यागतिकत्वेन स्पष्टार्थकशब्दविवरणस्यानावश्यकतया च भाष्योदाहृतप्रमाणप्रदर्शितार्थभेदसंभवे संग्रहविवरणरूपत्वेन समाधानस्यायुक्तत्वात् । स इदं सर्वमसृजतेत्युक्त सृष्ट्युत्तरप्रवेशोत्तरसदादिभवनोक्त्या उपादानतया स्रष्टृत्वालाभेन तद्भ्रांतिनिरसनोपायाभावात् । स इदं सर्वमिति वाक्यस्यापंचीकृतसमष्टिमात्रपरत्वे सर्वपदस्य वृथा संकोचापत्तेः । उक्तकुकल्पनायां नियामकादर्शनाच्च ॥

किंचेत्यप्ययुक्तं ॥ अपंचीकृतप्रवेशोक्त्या पंचीकृतप्रवेशलाभवत् तत्सृष्ट्यैव पंचीकृतसृष्टेरपि लाभेन पुनस्तत्कथनवैयर्थ्याच्च । उपादानतयाशुद्धात्मनः प्रवेशादिक्रियायोगात् तत्प्रतीतावधिष्टानीभूय तत्तादात्म्येन भानस्यैव प्रवेशरूपताया वक्तव्यत्वेन तेनैव त्वदभिमतोपादनत्वसिध्या सच्चेत्यादेर्वैयर्थ्याच्च ॥

एवं शुक्त्यवच्छिन्नेत्याद्यप्ययुक्तं ॥ अधिष्टानभूतचैतन्यावरकाज्ञानावच्छेदकतया शुक्तौ रजततादात्म्यस्य त्वया स्वीकृतत्वेन तादृशव्यवहारस्य दुर्निवारतया आरोपितस्य तादात्म्यं नास्त्येवेति भवत्पक्षे सच्चत्यच्चाभवदित्यस्यायुक्तत्वात् । किं च ब्रह्मणः कर्तृत्वोपादानत्वयोः परस्परविरुद्धत्वेनोभयांगीकारो न युक्तः । नन्वंतःकरण एव सुखादिकं प्रति कर्तृत्वोपादानत्वे दृष्टे । तस्य सुखादिकं प्रत्युपादानत्वात् - तदनुकूलकृतेरप्यंतःकरणोपादानकत्वेन कृतिनिरूपिततादात्म्य संबंधवत्त्वरूपकर्तृत्वस्याप्यक्षेतेरिति चेत् - त्वदुक्तलक्षणस्य मायायामेवातिव्याप्तिः । तस्य जगदुपादानत्वात् ॥ ईक्षणकृत्यात्मनापरिणामाच्च ॥ न च तदारोपाधिष्टानत्वमुपानानत्वमिति वाच्यं । आरोपितं प्रति कारणस्यैवासिध्या आरोपाधिष्ठाने उपादानकारणत्वनिमित्तकारणत्वाद्युक्तेरयोगात् । कल्पिते शुक्तिरूप्यादौ कर्तुरदर्श-

नाच । न च तत्रापि साक्षिण एव कर्तृत्वं । तत्र तदनुकूलकृतेरनुभव-बाधितत्वात् । नन्वत्र कार्यानुकूलज्ञानवत्वमेव कर्तृपदार्थ इति चेत् - किं तत्रोपाधिवशाच्छुद्धस्यैव विवर्तोपादानत्वे कर्तृत्वघटकज्ञानक्रियादिकं तत्रैव स्वीक्रियते - उत मायोपहिते । आद्ये ॥ शुद्धस्यैवेक्षण तज्जन्यकृति-क्रिया तन्नाशादिविकारांगीकारात् शुद्धत्वहानिः । शुद्धत्वमपि स्वसमान सत्ताकविकारराहित्यं चेत् - सत्ता त्रैविध्यादेर्निराकृतत्वेनोक्तसंकोचानुप-पत्तिः । मृत्पिंडादि दृष्टांतानुरोधात् ब्रह्मणः परिणामित्वेनोपादानत्वमंगी-कृत्य निर्विकारत्वश्रुतेः स्वाधिकरणकालत्वव्यापक विकाराभावार्थकत्वेन संको-चापातश्च । एवमेव संकोचः कार्य इत्यत्र नियामकाभावात् । न द्वितीयः ॥ मायोपहितस्य शुद्धान्यत्वेन लक्षणस्य ब्रह्मनिष्ठत्वायोगात् । ततश्चाभिन्ननिमित्तोपादानत्वमतहानिः । स्वरूपविवक्षया तथात्वं चेत् - जीव एवातिव्याप्तिः । ईक्षणमात्रस्य कर्तृत्वपदार्थत्वे मृत्पिंडं दृष्ट्वा एवं कुर्विति प्रेरकस्यापि घटकर्तृत्वव्यवहारापत्तिः । मायापरिणामभूत ज्ञानरूप-कार्यंप्रत्यपि कर्तृत्वनिर्वाहाय ज्ञानांतरस्वीकारे अनवस्था । अस्मन्मते तु अचिंत्यशक्त्या नित्यज्ञानाभिव्यक्त्यादिना निर्वाहः प्रागेवोक्तः । जगद्भ्रमोत्पादनाय प्रेक्षावत्तमस्येश्वरस्य प्रवृत्याद्यसंभवश्च । अधिकं न्याया-मृते व्यक्तं । तथा च ब्रह्मणो विवर्तोपादानत्वसाधकत्वभ्रांत्या परस्य यतोवेत्यादिपंचमीश्रुतिघटित वाक्योदाहरणमयुक्तमिति सिद्धं ॥

यत्तु ॥ एतेन सत्यत्वेपि ज्ञाननिवर्त्यत्वोपपत्तिरिति शंकापि परास्ता । नह्युपादानतत्वसाक्षात्कारनाश्यं रूप्यादि सत्यं दृष्टं । सेतुर्हि न पापानामुपादानमिति न कुत्रापि सत्यस्योपादानतत्वसाक्षात्कारनाश्यत्वं दृष्टच-रमिति । तदशुद्धं ॥ ब्रह्मणः परिणाम्युपादानत्वानंगीकारात् । विव-र्तोपादानत्वस्य जगन्मिथ्यात्वसिद्धेः प्रागसिद्धत्वात् । आरोपाधिष्ठाने उपादानकारणशब्दाव्यवहाराच्च । आरोपितं प्रति कारणमात्रस्यापि निर

स्तत्वाच्च । "तरति शोकमात्मविदि"त्यादावात्मसाक्षात्कारत्वेन ब्रह्मज्ञानस्य निवर्तकत्वोक्तावप्युपादानसाक्षात्कारत्वेन निवर्तकत्वाश्रवणेन तथा कल्पनाया निर्मूलत्वात् । आरोपितस्य मिथ्याभूततया नित्यनिवृत्तत्वेन ज्ञाननाश्यत्वासंभवात् । ध्वंसस्य प्रतियोगिसत्तासापेक्षत्वात् । एतावंतं कालं रजतभ्रम आसीत् - शुक्त्यज्ञानमसीदित्याद्यनुभवेनाधिष्ठानवत्सत्यतयानुभूते अर्थक्रियासमर्थे चाज्ञानभ्रमादौ ज्ञाननाश्यत्वानुभवाच्च । सत्यस्यैव ज्ञाननाश्यतायाः प्रकाशप्रसरे अत्राप्यन्यत्र च सम्यगुपपादितत्वेन दीपिकाकारीयतददर्शनवचनस्याज्ञानमूलत्वाच्चेति ॥

यदपि । अस्मिंश्च पक्षे सर्वस्यापि ब्रह्मज्ञाननाश्यत्वमेव नाविद्यानाशनाश्यत्वमिति भामतीरीत्या नोक्तनाशनाश्यत्वरूपमविद्याप्रयुक्तत्वं विवक्षितुं शक्यं । तथाप्यज्ञानोपहितस्यैव जीवत्वादज्ञानप्रयुक्तत्वं जीवस्य संभवतीति । तदसंबद्धं ॥ अनादिदृश्यघटितस्य सर्वस्याप्यविद्याप्रयुक्तत्वमाक्षिप्य जीवमात्रस्य तत्संभवोक्तेरनुचितत्वात । भामतीमते जीवस्य स्वाश्रिताविद्याप्रयुक्तत्वे अन्योन्याश्रयादिदोषस्योक्तत्वाच्च ।

यत्तु । वाचस्पतिसंमतजीवोपादानतापक्षे अविद्यानाशनाश्यत्वं - कल्पतरुसंमतब्रह्मोपादानतापक्षे तु सत्रेत्यादि । तदयुक्तं ॥ वाचस्पतिमत एवोक्तपक्षद्वयस्य लघुचंद्रिकादावुपपादितत्वात् । तत्प्रकारस्य प्रागुपदर्शितत्वाच्च । जीवोपादानत्वपक्षे सर्वेषामविद्यातिरिक्तानामविद्यानाशनाश्यत्वं - ब्रह्मोपादानतापक्षेतु तन्नेत्यत्र नियामकानिरूपणात् । अनादिदृश्यस्याविद्यानाशनाश्यत्वासंभवस्यासकृदावेदितत्वाच्चेति ॥

यदपि ॥ यथा चास्मिन्मते सर्वस्याप्यविद्याप्रयुक्तत्वं तत्समकालिकत्वेनेति न चरमवृत्तिप्रागभावस्यानाविद्यकत्वं । न ह्यविद्यानाशनाश्यत्वेनानादिभावस्याविद्याप्रयुक्तत्वं वदामः - यद्यपि ज्ञानस्य तत्प्रागभावनाशरूपत्वं - तथापि तत्वेन कारणतायां न मानमिति नाद्वैतहान्यादि-

रिति । तदप्यज्ञानविलसितं ॥ अविद्यासमकालिकत्वमात्रेण तत्प्रयुक्तत्वे ब्रह्मणोपि तत्प्रसंगस्योक्तत्वात् । लघुचंद्रिकादौ दंडप्रागभावादिदृष्टांतेनाविद्यानाशनाश्यत्वेनाविद्याप्रयुक्तत्वस्योपपादितत्वात् । तत्प्रकारस्य लेशतः पूर्वमुपदर्शितत्वाच्च । तत्वेन कारणतायां न मानमित्यप्ययुक्तं । विवरणमते स्वप्रागभावव्यतिरिक्तस्वनिवर्त्येत्यत्र प्रागभावस्य प्रतियोगिनिवर्त्यत्वांगीकारेण प्रागभावध्वंसस्य प्रतियोगिसमनियतत्वेपि तद्रूपत्वाभावात् । अस्तु वा तथापि दंडप्रागभावनाशस्य घटप्रागभावनाशं प्रति प्रयोजकनाशत्वेनैव कारणताया लघुचंद्रिकादौ व्यवस्थापितत्वेन केवलनाशत्वस्यातिप्रसक्तस्य कारणतावच्छेदकत्वोक्तिरयुक्तैव । एवं च चरमवृत्तिप्रागभावस्याविद्यादिकंप्रति प्रयोजकत्वस्यान्वयव्यतिरेकादिसिद्धस्यापलपितुमशक्यत्वेन तन्नाशस्यापि प्रयोजकनाशविधया अविद्यानाशं प्रति हेतुत्वस्यावर्जनीयतया प्रकाशप्रसरोक्तदोषस्य वज्रलेपत्वादित्यलं प्रसक्तानुप्रसक्त्या । तथा च प्रकाशप्रसरोक्त प्रथमविषये अद्वैतदीपिकाकारप्रदर्शित स्वपरपक्षसाधकबाधकानामपक्षपातिभिः प्रेक्षावद्भिरनुपेक्षणेन विमर्शे कृते सति - असंबद्धभाषिणोर्वाचीनस्योत्तानदृशोदीपिकाकारस्यैवाविद्याविलास इति सुदृढनिर्णयस्याकामेनाप्यंगीकार्यत्वात् - अविद्याविलास इत्यादिप्रसरोक्तिः तत्संबोधनेन पुनरपि दीपिकाकारेण विलिखितुं शक्या न वेति निराग्रहो दीपिकाकार एव विभावयतु । तस्मात्प्रकाशप्रसरप्रदर्शिताद्यविषये चंद्रिकोक्तानिदूषणानि - प्रसरोक्तखंडनदूषणानि च सुस्थान्येवेति विफल एवात्रदीपिकाकारस्याशक्यसाधनबाधनभ्रमविलसितः प्रयास इति सिद्धं ॥....

# ❀ सुखादावज्ञानप्रसंगसमर्थनं ❀

यत्तु ॥ चंद्रिकामंडनकारास्त्वित्यारभ्याद्वैतिभिरविद्यावृत्तिप्रतिबिंबितानावृतचैतन्यस्यैव साक्षित्वांगीकारात् - तस्य च सुखादिव्यंजकस्याज्ञानाविरोधित्वानंगीकारात् - तादृशसाक्षिवेद्ये सुखादावज्ञानप्रसंजकालाभेन तत्राज्ञानप्रसंजनं पृष्टताडनेन दंतभंगन्यायमनुकरोति । सुखाद्यव्यंजकशुद्धचैतन्यस्याज्ञानाविरोधित्वेपि सुखादिभासकसाक्षिणोऽज्ञानविरोधित्वस्वीकारादित्यादि । अत्रोच्यते ॥ एतद्विचारस्य साक्षिस्वरूपनिर्णयाधीनत्वात् - तावदादौ अद्वैतमते साक्षिस्वरूपं विचार्यते । तथाहि ॥ अत्रोक्तं श्रुतिमतोद्योताद्वैतचंद्रिकादौ । अविद्याप्रतिबिंबिता चित् साक्षी । यद्वा ॥ अविद्योपहितस्य न साक्षित्वं । तस्य व्यवहारकाले नाशाभावेन तन्नाशरूपसंस्कारस्यासंभवात् । किं तु अविद्यावृत्तिनाशात्तदुपहितस्य नाशसंभवादविद्यावृत्तिप्रतिबिंबितचिदेव साक्षी । वृत्तिप्रतिबिंबितरूपेण द्रष्टृत्वपक्षे वृत्तिविषयावच्छिन्नचिद्रूपेण दर्शनत्वं । परोक्षस्थलेपि वृत्तिद्वारा विषयसंबद्धचित एव प्रकाशकत्वात् । यद्यप्यविद्याप्रतिबिंबितचितः अविद्याकार्याश्रयत्वेनाविद्याकार्यावच्छिन्नचिद्रूपदर्शनाश्रयत्वेपि अनादिविषयावच्छिन्न चिद्रूपदर्शनाश्रयत्वे मानाभावः । वृत्तिप्रतिबिंबितचितोप्यविद्याप्रतिबिंबितचिदभेदात् । तथापि सर्वत्र वृत्तिप्रतिबिंबितनिष्टं दर्शनसंबंधित्वमेव द्रष्टृत्वमव्याहतमिति । तदेतद्बालजनमनोरंजनं । साक्षिणा अविद्यासिद्धौ तत्प्रतिबिंबितस्य तदुपहितस्य वा चैतन्यस्य साक्षित्वसिद्धिः । तत्सिद्धौ च तत्प्रतिभासमात्रशरीराविद्यासिद्धिरित्यन्योन्याश्रयात् । अविद्यावृत्तिघटितस्य साक्षित्वेतु - साक्षिसिद्धौ अविद्यासिद्धिः - तत्सिद्धौ च तद्वृत्तिसिद्धिः-

वत्सिद्धौ च साक्षिसिद्धिरिति चक्रकप्रसंगात् । ननु साक्षिणः अविद्यया तद्वृत्त्यावोपहितरूपत्वात् । तज्ज्ञानस्य तज्ज्ञानापेक्षत्वेपि तयोर्ज्ञानं न साक्षिविषयकज्ञानापेक्षं । साक्षिरूपत्वात् ॥ नापि साक्षिण उत्पत्तौ - अविद्योत्पत्तौ वा परस्परापेक्षा । तयोरनादित्वात् ॥ नाप्यविद्यावृत्ति-साक्षिणोरेकोत्पत्तावन्योन्यापेक्षा - समत्वात् । नाप्युपहितरूपः साक्षी उपाध्याश्रितः । येन स्थितावपेक्षा स्यात् । उपाधेः स्वोपहितचिदाश्रि-तत्वेपि उपहितचितः शुद्धचित्येवाश्रितत्वादिति चेन्न । लोके विशिष्टशु-द्धयोः समसत्ताकत्वदर्शनेन शुद्धाकल्पितस्यतदाश्रितत्वायोगात् । साक्षिणः अविद्यायाः-तदीयविषयविषयिभावस्य चानादित्वेत्वविद्याविषयकत्वं साक्षिणः स्वभावभूतमेवेति बलादापतितं । अविद्यासंबंधाप्रयोज्यत्वात् । तथा च स्वभावस्यानपायात्शुद्धचैतन्यस्य मोक्षेप्यभावप्रसंगः । अविद्याध्यासस्य दोषानधीनत्वप्राप्त्या अप्रामाण्यपरतस्त्वभंगप्रसंगश्च । न चानादेरप्यवि-द्याप्रयोज्यत्वं । अस्मन्मते“द्रव्यं कर्म च कालश्चे”त्यादेरिव त्वन्मते अनादेरविद्याप्रयोज्यत्वग्राहकप्रमाणस्याभावात् । अन्यथा आत्मस्वभाव-भूतानंदादेरात्मनश्चाविद्याप्रयोज्यत्वापातात् । अविशेषात् ॥ एवं वृत्ति-घटितस्य साक्षित्वपक्षेपि वृत्युत्पत्तेः प्राक् साक्षिणोऽविद्याविषयकत्वाभावात् प्रतिभासानधीनसत्ताशून्यायास्तस्याअभावात् वृत्तेरयोगः । वृत्युत्पत्यनंतरं चाविद्याविषयत्वप्राप्त्या अविद्यावृत्तिः । तयाचोपाधिभूतया साक्षिचित् तयाचाविद्येति रीत्या चक्रकं । न च पूर्वपूर्वोत्पन्न वृत्तिसंबंधात्साक्षित्वं - तद्वृत्तीनामप्यविद्यां विना असिद्धेः । तत्तद्वृत्तीनां भेदात्तत्तदुपहितसाक्षि-णामपि भिन्नत्वेन तत्प्रतिभासमात्र शरीराविद्यानामपि भेदापत्तेः । अवि द्यैक्येपि तद्ग्राहकसाक्ष्युपधायकवृत्तीनां भेदे घटादिवत्स्थिरत्वप्राप्त्या अज्ञान-स्यात्मवदनारोपितस्यैव प्राप्तिः । अविद्यातद्वृत्तिपरंपराकल्पनेत्वनवस्था । न च चेतनस्यासंगत्वश्रवणात् अहमज्ञ इति सक्षित्वप्रतीतेश्च प्रमाणद्वयस्य-

थानुपपत्त्या एतत्सर्वं कल्प्यत इति वाच्यं । संबंधाभावसंबंधस्य स्वबोधितस्य निराकरणे श्रुतेर्व्याहतत्वापत्त्या परमात्मनः पापलेपाभावपरत्वात् । अहमज्ञ इत्यादिप्रतीतीनामविद्यानादित्वश्रुतीनां च तत्सत्वेपि संभवात् । अन्यथोपपत्तेरन्यत्रोक्तत्वाच्च । किं च साक्ष्युपाधिभूता अविद्यावृत्तिः सविषया निर्विषया वा । आद्ये यद्ग्रहणे साक्षी स्वोपहितचिद्भवति - तद्विषयिणी - तदन्यविषयिणी वा । नाद्यः ॥ अविद्यायाः स्वाकारवृत्तितया परिणामानंतरमेव तदुपहितचिद्रूपसाक्षिसिध्यंगीकारापत्त्या चक्रकात् । किं च वृत्तेः स्वविषयकत्वाभावेन वृत्तिग्रहणार्थं वृत्त्यंतरापेक्षायामनंतानां यौगपद्यमनुभवविरुद्धमापद्येत । वृत्तेः स्वविषयकत्वाभ्युपगमेपि सुखाद्युत्पत्तिकाले तद्विषयकवृत्त्यभावेन तदवच्छिन्नस्य तत्प्रतिबिंबितस्य वा अभावेन प्रत्यक्षस्य प्रथमक्षणे अभावात् ज्ञातैकसत्वानुपपत्तिः । न द्वितीयः ॥ तदन्यविषयकवृत्त्यवच्छिन्नस्य तं प्रति साक्षित्वे तत्संस्काराभावप्रसंगात् चैतन्यस्य नाशाभावात् वृत्तिनाशेपि वृत्तेः सुखाद्यविषयकत्वेन तन्नाशरूपसंस्कारस्य तद्विषकत्वायोगात् । तत्समानकालिक पदार्थनाशत्वमात्रेण तद्विषयकत्वे सुखादिकालीनानंतवायुसंयोगादि वृत्तिविशिष्टचितामपि साक्षित्वापत्तिः । तादृशवायुसंयोगनाशेपि संस्कारत्वोपगमसंभवात् । न च संयोगादेरस्वच्छतया तत्र चित्प्रतिबिंबनायोगात् तदर्थं वृत्तिरपेक्ष्यत इति वाच्यं । तदुपहितरूपेणैव साक्षित्वसंभवे प्रतिबिंबनस्याकिंचित्करत्वात् । न तृतीयः ॥ अविद्यावृत्तेर्निर्विषयकत्वे तन्नाशस्य संस्काररूपत्वानुपपत्तेः । वायुसंयोगादिकमादाय विनिगमनाविरहस्योक्तत्वाच्च ॥

एतेन ॥ वस्तुतः अविद्योपहितचिदेव साक्षी । लाघवात् ॥ वृत्तेः स्वविषयकत्वाभावेन तन्नाशस्य वृत्तिविषयकत्वाभावेपि संस्कारसामान्यस्यैव वृत्तिस्मारकत्वसंभवादिति परास्तं । अस्य पक्षस्य दूषितत्वात् । एतत्कल्पे संस्कारसामान्यस्य वृत्तिस्मारकत्वोक्तावपि सुखादौ संस्कारस्यानु-

क्तत्वाच्च । स्मर्यमाणविषयकत्वमनादृत्य तत्सामान्यस्य ज्ञानरूपवृत्तिसा-रकत्वे घटसंस्कारात्पटविषयकवृत्तेः स्मरणापातादिति दिक् । अविद्योपा-धिकः सर्वगतो जीवः साक्षीति पक्षस्याप्यन्योन्याश्रयादिना अविद्योपाधिक-त्वासंभवेनायुक्तत्वात् । तथाचाद्वैतमते अविद्याघटितस्य तद्वृत्तिघटितस्य वा साक्षित्वासंभवात् "साक्षी चेता" इत्यादि मानसिद्धं शुद्धचैतन्यस्यैव साक्षित्वं कथंचिदंगीकर्तुं शक्यमिति स्थितं ॥

एतेन ॥ तत्रेदं प्रष्टव्यमित्यादिना फलितमित्यंतेन ग्रंथेन मंडनो-परि दीपिकाकारोक्त दूषणाभासजल्पनमापास्तं । अनावृतचैतन्यस्य आवृ-तशुद्धचैतन्यान्यस्य साक्षितायाः समूलघातं घातितत्वात् - अविद्यायाः अखंडे ब्रह्मणि कृत्स्नैकदेश संबंधविकल्पतद्दूषणाभ्यां आवृतानावृतांशद्वय संपादकत्वायोगस्यावेदितत्वाच्च । इत्थं च अज्ञानाद्यनुपहितशुद्धचैतन्यस्यैव सुखादिसाक्षितायाः अकामेनाप्यवश्यमंगीकर्तव्यत्वात् - तस्य चाज्ञानाविरो-धित्वे सुखादिसत्ताकालेपि नप्रकाशते इत्यादि व्यवहारापत्तिर्दुर्निवारैव । न च सुखादीनामेवाज्ञानविरोधित्वात् न सुखादिसत्ताकाले तदज्ञानापत्तिरिति वाच्यं । साक्षात्साक्षिभास्यानां ज्ञानाज्ञानसुखदुःखादीनां ज्ञातैकसत्वात् । तस्य च स्वप्रागभावाधिकरणकालवृत्तिप्रत्यक्षविषयभिन्नत्वरूपत्वेन सुखदुःखा-देर्यावत्स्वसत्वं स्वप्रत्यक्षसत्वनियमेन तस्य प्रत्यक्षस्याज्ञानविरोधितया तत्स-मनियतसुखादावपि अवर्जनीयसन्निधितया प्राप्तस्वसत्वनियतप्रत्यक्षविषयत्व-मात्रेणाज्ञानविरोधित्वव्यवहारस्य गौणत्वेनान्यथासिद्धे तत्राज्ञाननिवर्तकत्वो-क्तेरनुचितत्वात् । नापि सुखोत्पादकसामग्र्या एव सुखाज्ञानविरोधित्वं । स्वसत्तासमनियतसत्ताक तत्प्रत्यक्षसामग्र्या अन्यथासिद्धत्वात् । अन्यथा वृत्त्युत्पादकसामग्र्या एवाज्ञानविरोधित्वकल्पनापत्त्या वृत्तेरज्ञानविरोधित्वसिद्धां-तभंगापत्तेः । घटादिप्रत्यक्षसामग्र्या एव प्रत्यक्षकार्यकारित्वसंभवेन सर्वत्र-सामग्र्या फलापन्हवापत्तेश्च ॥

एतेनैव ॥ चितोऽज्ञानाविरोधित्वं न साक्षित्वेन किं तु स्वरूपेणे- त्यादिना नाज्ञानप्रसंग इत्यंतेनोक्तमप्यपहस्तितं । परमते शुद्धचैतन्यस्यैव कथंचित्साक्षिताया उपपादितत्वात् । अविद्यादिघटितस्य साक्षिताया दूषि तत्वाच्च । घटादौ चैतन्याभिव्यंजनार्थं तद्विषयकवृत्तेरपरोक्षत्वस्यावश्यकत्वेन घटादिविषयकापरोक्षवृत्त्यैव तदज्ञानादिनिवृत्तिसंभवेन तत्र चैतन्यप्रतिबिंबनादि प्रक्रियाया आकरे दूषितत्वाच्च । घटादेर्विषयावच्छिन्नचैतन्याध्यस्तत्वादेः तादात्म्यस्य विषयतारूपत्वखंडनप्रस्तावे ज्ञेयस्य ज्ञानाध्यस्तत्वं तत्तादात्म्य- रूपं तद्विषयत्वमित्यादितत्प्रक्रियाखंडनेन निरस्तत्वाच्चेति ॥

यत्तु ॥ इदमत्र घटादीनां सुखादिभ्यो वैलक्षण्यं यद्घटादिकमा- वृतचैतन्याध्यस्तं - सुखादिकंत्वनावृतचैतन्याध्यस्तमित्यारभ्य न किंचिदप्य- नुपपन्नमित्यंतं । तदप्येतेनैवापाकृतं । आवृतानावृतचैतन्यभागभेदस्या संभवदुक्तिकताया उक्तत्वात् । सुखादीनां घटादीनां च ज्ञातैकसत्व तद- भावाभ्यां वैलक्षण्यसंभवेनोक्त कुकल्पनाया अयुक्तत्वात् । ज्ञातैकसत्वस्य च यावत्स्वसत्वं स्वप्रत्यक्षसत्वादिनैवोपपत्तेः । सुखादीनां स्वसत्तादशाया मपि अनित्यत्वादिविवादेन न जानामीत्यादिव्यवहारस्य घटादाविव त्वयैवो- पपादितत्वाच्च । तदावरकाज्ञानकल्पितस्यैव तत्रारोपितत्वेन स्वोपादाना- ज्ञानाविषये साक्षिचैतन्ये सुखादीनामध्यस्तत्वासंभवस्यासकृदावेदि - तत्वाच्चेति ॥

यदपि ॥ अत्रेदं प्रष्टव्यं । सुखादावज्ञानप्रसंग इति कोर्थः । किं न प्रकाशते इति व्यवहारापत्तिः - उत आवृतचैतन्याध्यस्तत्वापत्ति रिति । आद्ये आवृतचैतन्याध्यस्तत्वरूपप्रयोजकाभावात् न तथा व्यव- हारः । अत एव न द्वितीयः । तदेवह्यावृतचैतन्याध्यस्तं - यत्स्वो- त्पत्तिकाल एवाज्ञानविरोधि न भवति । यथा घटादीत्यादि । तदप्ये- तेन परस्तं । अज्ञानाद्यनुपहितशुद्धचैतन्यस्यैव त्वन्मते साक्षिपदार्थतायाः

व्युत्पादितत्वात् । सुखादिविषयकप्रत्यक्षरूपोक्तसाक्षिणोऽज्ञानाविरोधित्वे अज्ञातघटादाविव ज्ञातसुखादावपि न प्रकाशत इत्यादिव्यवहारापादनस्य सुलभत्वात् ॥ त्वदीयकुकल्पनायास्तु आवृतचैतन्याध्यस्तत्वाभावरूपप्रयोजकाभावे सिद्धे - न प्रकाशत इत्यादि व्यवहाररूपप्रयोज्याभावसिद्धिः । तत्सिद्धौ च स्वोत्पत्तिकाल एवाज्ञानविरोधित्वसिध्या अज्ञानविरोधित्वरूप प्रयोजकाभावत् आवृतचैतन्याध्यस्तत्वरूपप्रयोज्याभावसिद्धिरिति त्वदीत्यैवान्योन्याश्रयादिना दुष्टत्वात् । आवृतानावृतचैतन्यद्वैविध्यासंभवस्योदितत्वाच्च । सुखादीनां स्वावच्छेदमात्रेणाज्ञाननिवर्तकत्वे वृत्तिदृष्टांतीकरणंत्वत्यंतानुचितं । वृत्यादेरपि साक्षिभास्यतया सुखादितुल्ययोगक्षेमत्वेन विप्रतिपन्नत्वात्। एतेनैव मनः सुखादौ प्रतिबिंबाश्रयमनः सुखाद्यवच्छेदकत्वंतदुत्पादकसामग्री नियम्यमित्यादिर्बिंदुटीकोक्तमप्यपास्तं । घटादौ वृत्तिप्रतीव मनः सुखादौ मनः सुखादिकं प्रति विषत्वरूपावच्छेदकत्वासंभवात् । चिति केवलमनः सुखाद्यवच्छेदेन प्रतिबिंबविशिष्टमनआदेरध्यासस्यानुवेधाभावादिना निराकृतत्वाच्च ॥

यत्तु ॥ स्वच्छेप्यावृते ब्रह्मणि प्रमाणवृत्या तदाकारता - अस्वच्छे अनावृतेपि शुक्तिरूप्यादावविद्यावृत्या - स्वच्छे सुखादौ अनावृते सुखादौ स्वत इति सिद्धांतबिंदुसंमतिकथनं । तदसारं ॥ तद्विषयत्वरूपतदाकारत्वं प्रति स्वच्छतादेरप्रयोजकत्वात् । शुद्धस्य वृत्तिविषयतायास्त्वयैव निरस्तत्वात् । जगन्मिथ्यात्वसिद्धेः प्रागविद्यावृत्तिरूपभ्रमासिद्धेरुपदर्शितत्वात् । सुखादौ स्वाज्ञानविरोधिस्वप्रत्यक्षं विना तदाकारताया असंभवदुक्तिकत्वात् । उक्तविभागस्याप्रामाणिकत्वाच्चेति ॥

एतेनैव तथाचायं निष्कर्षः ॥ अद्वैतिभिरावृतचैतन्यभास्यत्वस्य सुखादावनंगीकारात् अनुक्तोपालंबनं - अद्वैतमतस्वरूपाज्ञाननिबंधनं चेदमापादनं चंद्रिकाकाराणामित्याद्यसत्प्रलापोप्यपोढः । तन्मते उपहितचैतन्यस्य

साक्षित्वासंभवस्योक्तत्वेन शुद्धस्यैव साक्षित्वसिध्या तत्रोक्तापदनस्य सूपपन्नत्वात् । विना मानं अद्वैतिभिरनंगीकारमात्रेणावृतचैतन्यभास्यतात्यागे तार्किकाणानंगीकारेणेश्वरस्य सुखरूपताया अपि त्यागापत्तेः । एतत्कुकल्पनाया निर्मूलत्वाच्चेति ॥

यदपि ॥ किं च वृत्तेरज्ञानविरोधित्वं तन्निवर्तकत्वनिबंधनं । साक्षिणस्तु तदप्रसक्तिनिबंधनं । स्वरूपचैतन्यंसाक्षीति नाद्वैतिनोऽनुमन्यंते। सुखादौ तत्प्रतिबिंबितंचैतन्यंज्ञानं । घटादौ तु तदाकारवृत्तिप्रतिबिंबितं चैतन्यं ज्ञानमित्यादि । तदप्यत एव परास्तं ॥ उपहितचैतन्यस्य साक्षिताया दूषितत्वात् । सुखादिविषयक वृत्त्यंगीकारपक्षे वृत्तेरज्ञानविरोधित्वं - पक्षांतरे तु तद्ग्राहकशुद्धचैतन्यरूपसाक्षिण एवाज्ञानविरोधित्वमूरीकर्तव्यं । अन्यथा तत्राज्ञानप्रसंगात् । न्यायरत्नावल्युक्तायाः वृत्तिज्ञाने चैतन्यप्रतिबिंबनादिप्रक्रियाया दूषितत्वात् । सुखादौ स्वच्छत्वेन चैतन्यप्रतिबिंबने तादृशे स्फटिकादावपि तत्प्रतिबिंबनापत्त्या वृत्तिवैयर्थ्यात् । परोक्षवृत्तावपि तत्प्रतिबिंबनप्रसंगात् । आत्मनीव सुखादिवृत्तेरेव वा साक्षिण एव वा सुखादि ज्ञानत्वसंभवेन तत्र चैतन्यप्रतिबिंबनादेरप्रामाणिकत्वात् । लघुचंद्रिकायां सुखादौ वृत्त्यभ्युपगमेन सुखादेरेवाज्ञानविरोधित्वानंगीकारात् प्रकृते तदुदाहरणस्यानुचितत्वाच्चेति ॥

यत्तु । तथा च यत् स्वाज्ञाननिवर्तकशून्यं - तदज्ञानविषय इति नियमेपि न क्षतिः । सुखादेरेव तदज्ञानविरोधित्वांगीकारात् । आपादकाभावसहितस्यैवापाद्यानिष्टत्वस्य प्रयोजकत्वात् । अज्ञानापादकश्च यद्य ज्ञाननिवर्तकाभावः तर्हि तुच्छस्यापि तदापत्तिः । न च तदिष्टं ॥ विद्यमानस्यैव पदार्थस्याज्ञानांगीकारादित्यादि - नाज्ञानापादकं प्रसज्यत इत्यंत । तदप्येतेन परास्तं ॥ सुखादेरेवाज्ञानविरोधित्वस्य वृत्तेः स्वतुल्ययोगक्षेमायाः दृष्टांततायाश्चनिराकृतत्वात् । सुखादिसाक्षिणः शुद्धचैत-

न्यस्याज्ञानाविरोधित्वांगीकारात् । यत् विद्यमानत्वे सति अज्ञाननिवर्तकशून्यं तदज्ञानवदिति नियमस्य निराबाधत्वाच्च । सुखादौ अज्ञाननिवर्तकसद्भावमंगीकृत्य पुनस्तदभावस्यापादकत्वदूषणप्रयासस्य व्यर्थत्वाच्च । तेन सतोपि निवर्तकाभावस्यापादकत्वं न संभवतीतिप्राप्त्या पूर्वविरोधेन व्याहतत्वाच्चेति । तथाच सुखादिभासकस्यानुपहितचैतन्यरूपसाक्षिणोऽज्ञानाविरोधित्वे अन्यस्य तद्विरोधिनोऽभावेनाज्ञाननिवर्तकज्ञानाभावोऽवर्जनीय एवेति प्रकृते आपादकसंपत्या आपाद्यानिष्टत्वेनचाज्ञानापादनं युक्तमेव । त्वन्मते तुच्छेपि विकल्पाख्य वृत्तेः तस्याः धीत्वस्य चांगीकारेण किंचिद्रूपेणाज्ञानस्य संमतत्वात् आपदकशरीरे विद्यमानत्वे सतीत्यस्य विवक्षितत्वाद्वोक्तातिप्रसंगपरिहारसंभवाच्च । नित्यातींद्रिये गुरुत्वादौ तज्ज्ञानस्याज्ञानानिवर्तकत्वे अज्ञानापादनस्येष्टत्वाच्चेति ॥

यच्च ॥ इत्यान्विशेषः । नित्यपरोक्षाणां कदापि न भातीति वा भातीति वा न व्यवहारः । सुखादीनां तु सर्वदा न नभातीति व्यवहार एवेति अभानापादकाज्ञानाप्रसक्तिरेवात्र विवक्षितेति न विरोध इति । तदप्यत एव निरस्तं । नित्यपरोक्षेपि धर्मादौ तद्भासकसामग्र्यभावदशायां स्वसत्ताकालेपि धर्मादिकं न जानामीत्यादि व्यवहारस्य सर्वानुभवसिद्धत्वेनाभानापादकाज्ञानस्यैव प्रसक्तत्वात् । सुखादावप्यज्ञाननिवर्तकाभावे अभानापादकाज्ञानस्यैवापाद्यमानत्वाच्च । त्वयापि सुखादावनित्यत्वादिविषये स्वसत्तादशायामप्यभानापादकाज्ञानस्याभ्युपगतत्वाच्चेति ॥

एतेनैव ॥ सुखादावसत्वापादकाज्ञानसत्वेपि नाभानापादकाज्ञानं - सुखादेरेव वा तत्साक्षिणो वा अज्ञानविरोधित्वादित्यादि - प्रकाशप्रसरोक्तमपास्तमित्यंतं निरस्तं । सुखादिग्राहकानुपहितचैतन्यरूपसाक्षिणोऽज्ञानाविरोधित्वांगीकारात् । सुखादेरेव विरोधिताया निरस्तत्वात् - अनुपपत्तिदा-

ज्ञायामसत्वापादकाज्ञानस्यैवोत्पत्तिर्ज्ञायामपि अज्ञाननिवर्तक सामग्र्यभावे अभानापादकाज्ञानस्याप्यनिवारणीयत्वात् । घटादौ वृत्तेरज्ञानविरोधितायाः संमतत्वेन तत्राज्ञानापादनस्यानुचितत्वाच्चेति ॥

यत्तु ॥ अत एव सुखादिकं - अज्ञानविषयः । स्वाज्ञाननिवर्तकज्ञानाविषयत्वात् अंधकारस्य घटवदिति प्रसरोक्तमपास्तं । असत्वापादकाज्ञानविवक्षायां सिद्धसाधनात् । अभानापादकाज्ञानविवक्षायांस्वरूपासिद्धेः । सुखादेरेवाज्ञाननिवर्तकज्ञानपदेन ग्रहणसंभवात् । सुखाद्युत्पत्तिसमकालमेव सुखावच्छिन्नं चैतन्यमनावृतं भवति । घटादिकंत्वावृत चैतन्याध्यस्तं । ततो न ज्ञातैकसदित्यादि - नेहवितन्यते इत्यंतं । तदप्येतेनैवापास्तं ॥ उत्पन्नदशापन्नं सुखादिकं पक्षः । अभानापादकाज्ञानविषयत्वमेव साध्यं । स्वाज्ञाननिवर्तकस्वसमानविषयकज्ञानाविषयत्वमेव हेतुः ज्ञानं तु ज्ञप्तिरेव । नचोक्तदोषः ॥ सुखादेरेवाज्ञानविरोधित्वस्य दूषितत्वात् । सुखविषयकज्ञानपदेन सुखविवक्षावचनस्योन्मादमूलत्वाच्च । न हि सुखं - स्वविषयं - ज्ञानपदवाच्यं - दृष्टमिष्टं वा - ज्ञानपदेन ज्ञप्तेरेव विवक्षितत्वात् । त्वयापि साक्षिण एव सुखादिज्ञानत्वांगीकाराच्च । सुखाद्युत्पत्तिसमकालमेव सुखावच्छिन्नं अनावृतं भवतीति कल्पना तु - न युक्ता । अनावृतप्रदेशावच्छेदेनैव सुखादिकमुत्पद्यत इत्यंगीकार विरोधात् । उत्पत्तिसमय एवानावृतं भवतीत्यत्र कारणविशेषानिरूपणात् । पूर्वोक्तरीत्या अन्योन्याश्रयाच्च । अखंडे चैतन्येमगभेदासंभवस्योक्तत्वाच्च । उत्पत्तिसमये अनावृतत्वकल्पनायामपि अनियतानंतांतःकरणप्रदेशावच्छेदेनतत्रैवचैतन्ये तदैवोत्पन्नघटादीनामपि ज्ञातैकसत्वप्रसंगाच्च । सुखादेरुत्पत्तिज्ञप्त्योः समनियतत्वमात्रेण ज्ञातैकसत्वोपपत्तावनावृतचैतन्यादिकल्पनाया निर्मूलत्वाच्च । घटादेर्विषयावच्छिन्ने - मृत्पिंडाद्यवच्छिन्ने वा चैतन्ये अध्यस्तत्वेन साक्षात् शुद्धचैतन्याध्यासस्यासंभवदुक्तिकत्वाच्चेति ।

यत्तु ॥ अयमत्र निष्कर्षः सुखादिकं साक्षिचैतन्याध्यस्तमेवोत्पद्यते । उत्पत्तिसमकालमेव प्रकाशमानमित्यादि - तदप्ययुक्तं ॥ सुखादेर्यावत्स्वसत्वं प्रकाशमानत्वनियमेन - स्वोत्पत्तेः स्वज्ञप्तिसमनियततया ज्ञातैकसत्वस्योपपादितत्वेन तदर्थमध्यासकल्पनाया अयुक्तत्वात् । अनावृतस्याध्यासाधिष्टानताया निरस्तत्वाच्च । सुखाकारवृत्यनभ्युपगमे - सुखादिभासकसाक्षिणोनुपहितस्याज्ञानाविरोधितया स्वाज्ञाननिवर्तकज्ञानाभावेच सति सुखादौ स्वसत्तादशायामपि भातीति व्यवहारानुपपत्तेर्दुर्निवारत्वात् । न्यायरत्नावल्युक्तप्रकारस्य - लघुचंद्रिकोक्तस्य च प्रकारस्यदूषितत्वाच्च ॥

यत्तु । भातिशब्दार्थोहि साक्षात्कारः स्वावच्छिन्नवृत्तिनिष्ठत्व स्वनिष्ठत्वान्यतरसंबंधेन विषयविशिष्टप्रतिबिंबप्रयोजकप्रयोज्यविशिष्टचिदेव - सुखोत्पादकसामग्र्येवाज्ञानविरोधिनीति न्यायरत्नावलीपक्षे अज्ञानविषयत्वाभावप्रयोजकविशिष्टचित् साक्षात्कारः । अनित्यत्वभ्रमाधिष्टानतया सुखादावज्ञानविषयत्वस्यप्रसिद्धत्वादित्यादि । तदप्येतेन परास्तं ॥ घटदिवृत्तौ चैतन्यप्रतिबिंबनस्य - स्वच्छतामात्रेण सुखादौ चैतन्यप्रतिफलनस्य चानेकातिप्रसंगगहननिविष्टतया तत्कल्पनाया निर्मूलत्वात् । चरमवृत्तौ ब्रह्मणि वा चैतन्यप्रतिबिंबनाभावेन चरमवृत्तेः साक्षात्कारत्वानुपपत्तेश्च । ज्ञानसाम्ग्र्यामपि दुर्लभस्याज्ञाननिवर्तकत्वस्योत्पादकसामग्र्यामसंभावितत्वात् । सुखादावनित्यत्वभ्रमप्रयोजकाज्ञानविषयत्वाभावं प्रति नित्यत्वप्रकारकानुमित्यादेः प्रयोजकत्वेपि सुखस्वरूपग्राहकचितस्तत्प्रयोजकत्वाभावेनोक्तांगीकारस्यानुचितत्वात् । वृत्तिप्रतिबिंबितचितः फलशब्दार्थत्वेपि भाति शब्दार्थत्वानंगीकारात् प्रतिबिंबितचित एवार्थप्रकाशकत्वसंभवेन तत्प्रयोजकप्रयोज्यविशिष्टचितः साक्षात्कारत्वोक्तेरयुक्तत्वात् । सुखादावनित्यत्वाज्ञानस्याभानापादकस्याप्यंगीकारे मंडनाद्युक्ताज्ञानप्रसंगखंडनस्य स्वव्याहतत्वापाताच्चेति ॥

यद्पि । घटावच्छिन्नचितः शुद्धचितश्चाभेदेन घटज्ञानादेव मोक्षापत्तिरिति प्रसरोक्तं न क्षोदक्षमं । विशिष्टज्ञाने शुद्धस्याभानादित्यादि । तदप्येतेनैव परास्तं । त्वन्मते विशिष्टकेवलयोस्तादात्म्यांगीकारेण कल्पितभेदसत्वेपि तयोरभेदस्य तात्विकत्वात् । अतात्विकस्य च तात्विककार्याविघातकत्वाच्च विशिष्टचिद्विषयकज्ञानस्यापि विशिष्टकेवलतात्विकाभेदबलेन केवलविषयकत्वानपायेनोक्तापत्तेः दुर्निवारत्वात् । विशिष्टचिति शुद्धचितोऽनुगमेन विशिष्टज्ञाने शुद्धभानस्यावर्जनीयताया असकृदावेदितत्वाच्चेति । तथा च चंद्रिकोक्तं सुखादावज्ञानप्रसंजनं न शतेनापि प्रयत्नानां दीपिकाकारेण परिहर्तुं शक्यमितितत्राशक्यकार्ये दीपिकारप्रयासः स्वाज्ञानाद्याविष्कारनिदानत्वान्नकेवलं निष्फलः किं तु विरुद्धफलश्च । तस्मात्परोक्तस्याभासत्वाद्वंयक्तदुक्तं दूषणंसुस्थमितिसिद्धं ॥ .... ....



## ❀ परमते विषयार्थमध्यासभंगः ❀

यत्तु । चंद्रिकायामित्यारभ्य प्रकाशप्रसरकाराः सदेवेत्याद्युपक्रमादिसंदर्भः विशिष्टार्थपारः जीवब्रह्मभेदमेव गोचरयति । तत्त्वमसि वाक्यस्य विशिष्टाभेदेऽप्यवांतरंतात्पर्यमिति निरूपयंति । मंडनकारास्तु ॥ प्रलये अनादिभावानां सत्वांगीकारेण द्वितीयसामान्याभावबोधने तात्पर्यायोगात् - चिन्मात्रतात्पर्यकत्ववर्णनं सदेवेत्यादेरनुचितमेव । ततश्च तत्त्वमसिवाक्यस्य विशिष्टाभेदपरत्वमेव । अन्यथा ह्यप्रसक्तप्रतिषेधापत्तिरिति । अत्राद्वैतिनां समाधानं तु विशिष्टाभेदतात्पर्यग्राहकानिरूपणात् न विशिष्टाभेदपरत्वं । किं तु न्यायामृतोक्तस्य चैतन्यमात्रपरत्वाभावस्य शतधा दूषणेनाद्वैतसिध्याद्युक्तरीत्या चैतन्यमात्रपरत्वमेवोपक्रमादिबलादित्यादि ॥

तदविमर्शसुंदरं ॥ तथाहि । "एकमेवाद्वितीयं सन्नामरूपविवर्जितं । सृष्टेः पुराधुनाप्यत्र तादृक् सत्तदितीर्यते । श्रोतुर्देहेंद्रियातीतं वस्त्वत्र त्वंपदेरितं । एकता ग्राह्यतेऽसीति तदैक्यमनुभूयता"मिति रहस्योपनिषदुक्तरीत्या पूर्वप्रक्रांतवाचिना तत्पदेन पूर्वप्रकृतं सर्वज्ञत्वाद्युपलक्षितं चैतन्यमात्रं - त्वं पदेन तु देहेंद्रियातीतं अल्पज्ञत्वाद्युपलक्षितचैतन्यरूपवस्तुमात्रं च विवक्षित्वा तात्पर्यग्राहकासिपदसमभिव्याहृतसामानाधिकरण्येन तयोरुपलक्षितयोर्भेदभ्रमविरोधी उपलक्षिताभेदबोधोद्धारभूतः चैतन्यस्वरूपमात्रबोधः फलीभूतो जायत इति त्वत्सिद्धांतानुरोधेन तत् - त्वं पदाभ्यामुपलक्षितचैतन्यमात्रस्य विशिष्टविषयकशक्त्या - लक्षणायावाबोधने

सति तयोरुपलक्षितयोरभेदबोधः सामानाधिकरण्येन भवतीति खल्वद्वैतिनां तत्त्वमसिवाक्यार्थनिष्कर्षः । सति चैवं तत्ववादिभिः सदेवेत्याद्युपक्रमस्य निर्विषेषचैतन्यस्वरूपमात्रे तात्पर्यनिरासेन सच्छब्दस्य विशिष्टार्थत्वं - तत एव तत्पदस्यापि विशिष्टपरत्वं - त्वंपदस्य तु संबोध्य चेतने शक्तस्य तच्छरीरावच्छिन्नविशिष्टचेतनार्थत्वमिति रीत्या तत्वंपदयोर्विशिष्टापरत्वे व्यवस्थापिते सति तयोर्विशिष्टयोरसिपदसमभिव्याहृतसामानाधिकरण्येनाद्वैतमतरीत्या अभेदबोधनसंभवेन तत्त्वमसीत्यस्य विशिष्टाभेदबोधतात्पर्यनिर्णायकस्य परोपन्यस्तोपक्रमादेरेव तत्ववादिभिर्विशिष्टार्थपरत्वेन निर्णीतस्य जागरूकत्वप्राप्त्या विशिष्टाभेदतात्पर्यनिर्णायकाभावोक्तिस्तावदयुक्तैव । यथा हि त्वन्मते सदेवेत्याद्युपक्रमादेश्चैतन्यमात्रपरत्वेन तत्त्वमसीत्यस्य चैतन्यस्वरूपाभेदबोधतात्पर्यनिर्णायकत्वं - तथा तत्ववादिभिः सच्छब्दस्य प्रलयकालावस्थितत्व - सत्ताश्रयत्व - प्रजाधारकत्वादि विशिष्टार्थकत्वेन तद्घटितोपक्रमोदेरपि विशिष्टार्थत्वेसमर्थिते सति - तस्यैवोपक्रमादेस्तत्त्वमसिवाक्येन विशिष्टाभेदे बोधनीये तात्पर्यनिर्णायकत्वमवर्जनीयमेव । उक्तोपक्रमादेरन्यत्र विशिष्टभेदतात्पर्यनिर्णायकत्ववचनं तु तत्त्वमसीत्यादेस्तत्ववादिरीत्या व्याख्यानमनुरुध्येति न तद्विरोधः । प्रकृते तु अद्वैतरीत्या तद्वाक्यव्याख्यानं विवक्षित्वोक्तोपक्रमादेर्विशिष्टार्थकादेव तत्पदस्यापि विशिष्टार्थपरत्वे सिद्धे अद्वैतरीत्या तत्त्वंपदविवक्षितयोर्विशिष्टयोरभेदस्यासिपदसहितसामानाधिकरण्येन बोधनस्य निर्बाधतया तत्त्वमसीत्यस्य विशिष्टाभेदबोधतात्पर्यनिर्णायकत्वं परोपन्यस्तविशिष्टार्थपरोपक्रमादेरक्षुण्णमेव । तथा च प्रकाशप्रसर - मंडनाद्युक्तरीत्या विशिष्टार्थपरात् त्वदुपन्यस्तोपक्रमादेरद्वैतिरीत्या तत्त्वमसीत्यनेन विशिष्टाभेदबोधने तात्पर्यनिर्णायकताया अकामेनाप्यंगीकार्यत्वात् । न्यायामृतोक्तस्याद्वैतसिध्यादौ शतधा निरसनवत्त्वं तु बालभाषणमेव । प्रकाशप्रसर, एव महा वाक्यार्थखंडनप्रकरणे अद्वैतसिद्धिलघुचंद्रिकाद्युक्तयुक्त्याद्याभासनि-

शसेन न्यायामृतोक्तस्यादूष्यतया सुस्थिरतायाः प्रदर्शितत्वात् । अत्रापि तत्र तत्र प्रसक्तानुप्रसक्त्या लघुचंद्रिकादिनिरसनप्रकारस्योपदर्शितत्वादुपदर्शयिष्यमाणत्वाच्च । तथाच तथावचनं - तत्ववाद्याकरग्रंथांध्यनिमित्तं प्रेक्षावद्भिरनादेयमेवेति ॥

यत्तु । एतेन मुख्यार्थत्वाय विशिष्टाभेदः प्रतिपादनीय इतिमंडनोक्तमपास्तं । तात्पर्यविषयार्थबोधकत्वं हि मुख्यार्थत्वं । न हि विशिष्टाभेदतात्पर्यनिरूपणं मंडनाकारैरन्यैर्वा कृतं - किं तु सदेवेत्याद्युपक्रमस्य विशिष्टार्थत्वेन विशिष्टभेदतात्पर्यनिरूपणमेव कृतं - न हि चैतन्यमात्रतात्पर्यकत्वाभावावधारणं - विशिष्टभेदतात्पर्यनिरूपणं वा विशिष्टाभेदतात्पर्यनिर्णयोपयुक्तं । किं तु तद्विरोध्येवेति विशिष्टाभेदतात्पर्यनिरास एव कृत इति चंद्रिकामुंडनमेवकृतमित्यादि । तदप्येतेनैव निरस्तं । सदेवेत्यादि त्वदुपन्यस्तोपक्रमादेर्विशिष्टार्थत्वोपपादनद्वारा तत्त्वमसीत्यस्याद्वैतमतरीत्या व्याख्यानमनुरुध्य विशिष्टाभेदतात्पर्यनिर्णायकत्वस्योपपादितत्वेनाद्वैत्यभिमतश्रुत्यर्थानुरोधेन विशिष्टाभेदतात्पर्यनिरासस्याकृतत्वात् तत्क्रमनिबंधनासंबद्धसोत्प्रासदूषणाभासजल्पनस्योन्मत्तप्रलपत्वेनानादरणीयत्वात् । क्वचिद्विशिष्टाभेदतात्पर्यनिरासस्तु तत्ववाद्यभिमतश्रुत्यर्थमनुरुध्येति प्रागेवावोचाम ॥

यदपि ॥ न हि निर्विशेषचैतन्यविज्ञाने विशिष्टाभेदबुद्धिरुपाय इति न तत्रावांतरतात्पर्यमपि । महातात्पर्योपयुक्त एवावांतरतात्पर्यांगीकारात् । न हि गंगायां घोष इत्यत्र शक्यार्थबोधेप्यवांतरंतात्पर्यं कस्यापि संमतं । अत एव यजमानः प्रस्तर इत्यादौ प्रस्तराभेदे नावांतरतात्पर्यं । सन्मूलइत्यादौ तु निषेधार्थं प्रसक्त्यपेक्षसद्वितीयत्वबोधनं महावाक्यार्थसिध्युपयोग्येव । किं च यत्र शक्यार्थसंबंधः प्रमाणांतराबाधितः तत्रैव शक्यार्थबोधे अवांतरं तात्पर्यं - न च विशिष्टाभेदः प्रमाणांतराबाधितइत्यादि । तदप्युक्तार्थाज्ञानविजृंभितमेव । तथा हि ॥ तत्त्वं पदार्थभूतयोर्विशिष्ट-

चेतनयोरभेदबोधोप्यखंडार्थबोधं प्रति द्वारत्वेन संक्षेपशारीरके अभिहितः । "सामानाधिकरण्यमत्र भवति प्राथम्यभागन्वयः पश्चादेव विशेषणेतरतया पश्चाद्विरोधोद्भवः । उत्पन्ने तु विरोध एकरसके वस्तुन्यखंडात्मधीः सर्वैरेवपदैरयं समुदितो ज्ञेयः क्रमः सूरिभि"रित्युक्तेः । सामानाधिकरण्यं समानविभक्तिकत्वनिश्चयः । प्राथम्यभागिति सामानाधिकरण्यविशेषणं । विशेषणेतरतयान्वयः पदार्थयोस्तादात्म्येन विशेषणविशेष्यभवावगाहिबोधः । पश्चादनंतरं विरोधोद्भवः बाधकप्रतिसंधानेनोक्तबुध्यप्रामाण्यधीर्जायते । ततश्चैकरसे वस्तुनि चैतन्ये तद्विषय इति यावत् । अखंडात्मधीः अखंडस्वरूपधीर्जायत इति तत्पद्यविवरणमद्वैतचंद्रिकायां कृतं । तथाचात्र चिद्विषयकबोधद्वयस्यैवोक्तविशिष्टयोस्तादात्म्यधियोप्युक्तप्रणाड्याद्वारतायाः कंठत एवेक्तत्वात् तदनुपयोगवचनं तावदज्ञानमूलमेव ॥

अत्रोक्तमद्वैतचंद्रिकायां ॥ तादृशतादात्म्यावगाहिबुद्धेः क्वचिदुक्तत्वमात्रेण तस्य द्वारत्वोक्तिः । नियमेन तादृशबोधोत्पत्तौ मानाभावात् । अन्यथा गंगायां घोष इत्यादावपि नियमेन प्रवाहवृत्तिर्घोष इत्याकारकबाधितार्थबोधस्यावश्याश्रयणीयत्वात् प्रागेव विशेषदर्शिनां तद्वाक्याच्छाब्दानुभवाभावप्रसंगात् । न चान्यत्र तन्नियमाभावेपि प्रकृते तादृशबोधनियमोस्तु । नेहनानेत्यादिवाक्यस्याखंडार्थबोधपरत्वेपि द्वारीभूतमिथ्यात्वबोधे अवांतरतात्पर्यस्य सत्वेन तादृशबोधवदितिवाच्यं । तत्र मिथ्यात्वबोधे अवांतरतात्पर्यस्ययुक्तत्वात् मिथ्यात्वस्य व्यावहारिकत्वेन तदंशे व्यावहारिकप्रामाण्याक्षतेः । प्रकृते च विशिष्टद्वयतादात्म्यस्य प्रातीतिकत्वेन तदंशे व्यावहारिकप्रामाण्यायोगात् । तथात्वे यजमानप्रस्तरत्वादिबोधेपि श्रुतेरवांतरतात्पर्यापत्तेरिति । अत्रोच्यते ॥ विशिष्टद्वयतादात्म्यस्य प्रातीतिकत्वेपि कुतस्तदंशे अप्रामाण्यं । प्रातिभासिकविषयकस्य प्रामाण्यं विप्रतिषिद्धमिति चेत्तर्हि व्यावहारिकविषयकस्यापि कुतो न विप्रतिषिद्धं ।

विषयीभूतस्य यत्किंचित्कालाबाध्यत्वस्यां ततो बाध्यत्वस्य च साम्यात् । विषयस्य बाध्यत्वे तुल्ये बाधविलंबाविलंबयोरप्रयोजकत्वात् । तयोश्च विषयवैलक्षण्यासंपादकत्वात् । अन्यथा असंजातबाधभ्रमविषयस्याप्यर्थक्रियापातात् । ज्ञानेनाज्ञाननिवृत्त्या तत्कार्यनिवृत्तावद्वितीयब्रह्मभावरूपमोक्षसिद्ध्या प्रातिभासिकप्रामाण्यादिप्रक्रियायाएवाप्रयोजकत्वात् । किंच प्रातिभासिकविषयकत्वंचेदप्रामाण्यं शुक्तिरजतं दोषजन्यप्रतीतिविषय इति वाक्यमप्रामाणं स्यात् । तद्विधेयकत्वमप्रामाण्यं चेत् शुक्तिरजते दोषजन्यप्रतीतिविषयत्वमिति ज्ञानमप्रमाणं स्यात् । प्रकारतायामाधेयतासंबंधानवच्छिन्नत्वोपदाने ह्रदे वन्हिरित्यादि ज्ञानमप्रमाणं न स्यात् । ज्ञानं विषयितया प्रातिभासिकवदिति ज्ञानस्य भ्रमत्वापत्तिश्चेति ॥

किं च विशिष्टयोर्मिथ्याभेदे प्रत्यक्षादिना गृहीतेपि तयोरभेदस्य भेदविषमसत्ताकस्याबाधितत्वान्न तद्बोधस्याप्रामाण्यं । वस्तुतस्तु ॥ तत्त्वमसीतिश्रुत्या अनन्यशेषया ह्यसंभावितदोषया च महावाक्यरूपया लक्षणां विनैव लब्धे सर्वज्ञत्वाल्पत्वोपहितयोरभेदे तात्त्विकतैव युक्ता । नहीदृशश्रुतिप्रमापितार्थे संभावितदोषयोः प्रत्यक्षानुमानयोर्बाधकत्वं संभवदुक्तिकमपि । न च नेहनानेति श्रुत्योपहितयोरेव मिथ्यात्वबोधनेन तदभेदस्य न तात्त्विकत्वसंभव इति वाच्यं । महत्तरवाक्यस्य मुख्यार्थत्वानुरोधेन किंचनेति सामान्यश्रुतेरेव संकोचस्यौचित्यात् । उक्तं च वेदांतपरिभाषायां ॥ ‘‘ननु नाहमीश्वर इत्यादिप्रत्यक्षेण - विरुद्धधर्माध्यासलिंगेन च जीवपरयोर्भेदस्यावगतत्वेन तत्त्वमसिवाक्यमुपचरितार्थमिति चेन्न । भेदप्रत्यक्षस्य संभावितकरणदोषस्यासंभावितकरणदोषजन्यज्ञानेन बाध्यमानत्वात् । अत एव नानुमानमपि प्रमाणं । अगमबाधात् ॥ मेरुपाषाणमयत्वानुमानवदिति । नाप्यागमः ॥ अनुपलंभात् - समत्वाच्चेति’’ ॥

किं च व्यावहारिकविषयकत्वेन प्रामाण्योक्तिरयुक्तैव । व्यावहारिकार्थबोधकस्य दीर्घभ्रांतिहेतत्वेनात्यंताप्रामाण्यापातस्यासकृदावेदित - त्वात् ॥

किं च त्वन्मते मृत्वघटत्वोपहितयोस्तादात्म्यांगीकारात् अविरुद्धोपाधिद्वयोपहितयोस्तादात्म्यमवश्याभ्युपगंतव्यं । तथा च जीवत्वेशत्वयोरेककाले एकस्मिन् चेतने समावेशस्य त्वन्मतसिद्धतया तत्र भवता विरोधस्य दुरुपपादत्वात् तदुपहितयोरभेद एव बोध्यतां । तत्र भेदस्य कल्पितत्वेनाभेदस्य तात्विकत्वांगीकारात्

किं च "कार्योपाधिरयं जीवः कारणोपाधिरीश्वर" इति श्रुतिबलादविद्यांतःकरणरूपकारणकार्योपाध्युपहितयोर्जीवेश्वरत्वप्राप्त्या कारणोपहितस्य कार्योपहितं प्रति कारणत्वसंभवात् जीवेश्वरयोस्तादात्म्यस्यैव बोधनसंभवादखंडार्थत्वं निर्मूलमेव

एवं बाधायां सामानाधिकरण्यं तत्त्वमसीत्यादौ सिद्धांतलेशादिषूपपादितमितिनाखंडार्थतावश्यकतापि ॥

किं च अद्वैतचंद्रिकायामेव शोधकवाक्यजन्याखंडसाक्षत्कारस्य प्रपंचभ्रमनिवर्तकत्वमाशंक्य जीवत्वेशत्वनिष्टप्रकारता निरूपितचैतन्यमात्रनिष्टविषयताकज्ञानस्यैव जगन्निवर्तकत्वं सिद्धांतयित्वा तत्त्वमसीति महावाक्यजन्यबोधीयचैतन्यविषयता स्वपूर्वतनज्ञानविषयीभूत जीवत्वेशत्ववृत्तिप्रकारता निरूपिता भवति । तज्ज्ञानाविषयस्यापि तन्निष्टविषयतानिरूपितप्रकारतायाः प्राचीननैयायिकैरंगीकारात् । अत एव निर्विकल्पकोपस्थित घटत्वनिष्टप्रकारतानिरूपकत्वमात्रं सविकल्पके - न तु घटस्यापि तत्र विषयत्वं तैरंगीकृतं । गुरुणापि भ्रमस्थले इदंज्ञानाविषयीभूतरजतत्वनिष्टप्रकारता निरूपितविषयता इदं ज्ञाने स्वीक्रियते । तथा च तादृशजीवत्वेशत्वोपलक्षित चैतन्यविषयक महावाक्यार्थज्ञानं स्वाविषयीभूतेशत्वजीवत्वनिष्टप्रकारता-

निरूपितचैतन्यमात्रनिष्ट विषयताकं भवतीति मतांतरमुपन्यस्तं । तथा अनृतत्वादिभ्रमहेतुभूतयोरीशत्व जीवत्वोपलक्षितचैतन्यविषयकाज्ञानयोर्निवर्तके अवांतरवाक्ये तादृशचैतन्ययोर्भेदभ्रमहेतुभूतचैतन्यमात्रविषयकाज्ञाननिवर्तकं महावाक्यमिति विवेक इति चोक्तं । ततश्च तत्पदार्थशोधकसत्यादिवाक्यस्य नियामकत्वादिधर्ममिथ्यात्वग्रहपूर्वके जीवस्य निरतिशयत्वादिबोधे तात्पर्यवत् - प्रजाधारकत्वादिविशिष्टबोधे निषेध्य समर्पकतया सदादिपदघटितसृष्टिपरवाक्यस्य तात्पर्यवच्च - जीवत्वेशत्वोपलक्षित चैतन्ययोर्भेदभ्रमनिरासकतत्त्वमसीति महावाक्यस्यापि सर्वज्ञत्वादिधर्ममिथ्यात्वग्रहपूर्वक स्वस्वरूपनिरतिशयानंदाद्यात्मकत्वनिश्चयाय निषेध्यसमर्पकोपहिताभेदबोधेपि तात्पर्यमावश्यकमेव । त्वयैवोत्तरत्र उपहिताभेदबोधस्याप्युपलक्षितभेदभ्रमनिवर्तकत्वोक्तेश्च तत्रावांतरतात्पर्यनिरासः स्वव्याहत्यादिना अनुचितएव ॥

किं च उपहितयोर्भेदस्य व्यावहारिकत्वे अभेदस्तात्त्विकोस्तु । न तु प्रातीतिकः ॥ मानांतराविरोधस्योक्तत्वात् । तस्मादुपहिताभेदबोधतात्पर्यग्राहक त्वदुपन्यस्तोपक्रमादेरुपपादनात् - अखंडार्थबोधीयचैतन्यविषयतायाः जीवत्वेशत्वनिष्टप्रकारतानिरूपितत्वप्रयोजकत्वात् - निषेध्यसमर्पणार्थत्वात् - तयोः कार्यकारणभावापन्नत्वेन तत्तादात्म्यस्यांगीकृतत्वात् - अविरुद्धोपाधिद्वयवतोरभेदस्याबाधितत्वात् - उपहिताभेदबोधस्याप्युपलक्षितभेदभ्रमविरोधित्वाभ्युपगमाच्च विशिष्टाभेदबोधे महावक्यस्यावांतरतात्पर्यमकामेनाप्युपेयमिति सिद्धं । एतेनप्रतिबंदीद्वयमपि मोचितं । बहुधा वैषम्यात् । तथाहि ॥ प्रकृते विशिष्टाभेदबोधस्यानेकधा महावाक्यार्थबोधोपयोगस्योपदर्शितत्वेन तद्वत् गंगायां घोष इत्यादौ बाधितवाच्यार्थबोधस्य विवक्षितार्थबोधानुपायत्वात् । तात्पर्यग्राहकाभावात् - अर्थस्य बाधितत्वात् - अद्वैतचंद्रिकायामेव बहुधा वैलक्षण्यस्योपपा-

दितत्वाच्च न तत्प्रतिबंदी युक्ता । यजमानः प्रस्तर इत्यादावपि तद्बो-धस्य विवक्षितबोधानुपायत्वात् - तत्तात्पर्यग्राहकाभावात् । यजमानप्रस्त-राभेदस्य प्रत्यक्षबाधितत्वात् - तत्सिद्धिपेटिकया तत्र गौणार्थतायाः पूर्वतंत्रे समर्थितत्वात् - अद्वैतिभिरप्यत्राखंडबोधस्यानंगीकृतत्वाच्च न तत्प्रतिबंद्यपि युक्ता । प्रकृते तु विशिष्टयोस्तात्त्विकाभेदस्यमानांतराबाधितत्वोपपादनेन शक्यार्थसंबंधस्या बाधितत्वात् । प्रत्युत सत्यादिवाक्ये शबले सत्यत्वादिसंबं-धस्य बाधितत्वेपि तत्रापौनरुक्त्यादिलाभायापर्यायतासिद्धये च बाधितवाच्या-र्थविषयकबोधे तात्पर्यांगीकाराच्च प्रकृते नावांतरतात्पर्यनिराक्रियाशक्या । अवांतरतात्पर्यविषयस्याबाधितत्वेन तात्विकतापि दुर्निवारैव । तथा च प्रकाशप्रसरोपदर्शितरीत्या तत्त्वमसिवाक्यस्य तात्विकविशिष्टाभेदबोधकत्वसं-भवेन विषयार्थमध्यासवर्णनमयुक्तमिति चंद्रिकोक्तदूषणस्यात्यंतसंश्लिष्टस्य केनाप्युद्धर्तुमशक्यतया वज्रलेपत्वादत्र दीपिकाकारस्य प्रयासो विफलो विरुद्धफलश्चेति सिद्धं ॥

यदपि ॥ यत्तु प्रकाशप्रसरे - कथं सर्वज्ञत्वाल्पज्ञत्वयोर्विरोधः । एकस्मिन् चैतन्ये समावेशांगीकारात् । भिन्नधर्मिनिष्टत्वे च न धर्मपरि-त्यागेनापि धर्मिणोरैक्यं । न हि गोत्वाश्वत्वपरित्यागेन गवाश्वयोरभेदः संभवतीत्युक्तमद्वैतस्वरूपानवबोधविजृंभितं । न हि गवाश्वयोर्जीवेश्वरयोरि-वौपाधिकोभेदः । न वा सर्वज्ञत्वाल्पज्ञत्वयोरेकचैतन्यनिष्टत्वमित्यादि । तदेवोक्तवाक्यार्थाज्ञानविजृंभितं । सर्वज्ञत्वाल्पज्ञत्वयोः स्वभावतोभिन्नध-र्मिनिष्टत्वे खलु धर्मपरित्यागेपि धर्मिणोरैक्यं न सिध्यतीत्यत्र गवाश्वादिक-मुदाहृतं । न हि घटाकाशमठाकाशयोर्गवाश्वयोरिवानौपाधिकभेदोस्ति । तथाच गवाश्वयोर्घटाकाशमठाकाशादिवैषम्योपपादनं न परसमीहिता-र्थस्यसाधकं । प्रत्युतास्मदभिमतार्थस्यैव । न च मायांतःकरणरूपोपा-धिभेदभिन्नधर्मिनिष्टत्वमेव विवक्षितं । न त्वनौपाधिकभेदवद्वृत्तित्वं अत

उक्तं सर्वं युक्तमितिवाच्यं । मायादिरूपोपाधेश्चैतन्ये कृत्स्नैकदेशसंबंध-विकल्पतद्दूषणादिनौपाधिकभेदस्यान्यत्र दूषितत्वात् । खंडने मायांतःकर-णादिरूपनानोपाधिसंबंधादेकस्मिन्नेव चैतन्ये सर्वज्ञत्वासर्वज्ञत्वादिनानाधर्मसं-क्रांतेरुक्तत्वात् - चैतन्यस्यस्वभावतोऽखंडत्वेनांशभेदाभावात् । कृत्स्नैकदेश-संबंधानुपपत्त्या भेदकल्पनायोगाच्च सर्वज्ञत्वाल्पज्ञत्वयोरैकचैतन्यनिष्टत्वस्यावर्ज-नीयतया प्राप्तत्वेन तदपलापायोगश्चेति ॥

एतेन यथाचेत्यादिना न्यायामृतादिनिरासेन तत्त्वमसीत्यादेश्चैतन्य-मात्रपरतया अद्वैतसिध्यादिषु समर्थनोक्तिः - ब्रह्मविद्याभरणादौ भेदपरत्व-खंडनोक्तिश्च परास्ता । अद्वैतचंद्रिकादिखंडनेन तत्त्वमस्यादिवाक्यानामख-खंडार्थनिष्टतायां बहुधा महावाक्यार्थखंडने दूषितत्वात् - प्रकाशप्रसरे लेश-तस्तत्प्रकारस्योपदर्शितत्वाच्च । ब्रह्मविद्याभरणादिखंडनेनैकाद्वितीयादि-पदानां विशिष्टार्थपरतायाः समर्थितत्वात् - मिथ्यात्वादिपरतया निरा-कृतत्वाच्चेति ॥

यत्तु । यदपि प्रकाशप्रसरे इत्यादिना सदेवेत्यादि वाक्यं तत्त्वम-सित्वाक्यस्य नोपक्रम इत्युक्तं न क्षोदक्षमं । लघुचंद्रिकायां सदेवेत्यादेरुप-क्रमत्वपरतया व्याख्यातत्वात् । किं तु कारणव्यतिरेकेण कार्याभावः प्रतिज्ञावाक्यावगतः सदेवेत्यनेनावगम्यत इति तस्यैवोपक्रमत्वमित्यादि । तदप्यज्ञानमूलं ॥ सदेवेत्यादेर्ब्रह्मानंदोक्तार्थस्य प्रकाशप्रसर एव दूषितत्वात्। नवप्रकरण्या अवांतरभिन्नप्रकरणत्वात् । ब्रह्मणः परिणाम्युपादानत्वस्या-द्वैत्यसंमतत्वात् - विवर्तोपादानव्यतिरेकस्य च तत्र कल्पिते तत एव विषम-सत्ताके कार्ये ब्रह्मण्यनृतव्यावृत्तित्वादिनांगीकार्यत्वात् । तयात्वेवा महा-प्रकरणविवक्षयां एकविज्ञानेन सर्वविज्ञानवाक्यस्य - अवांतरप्रकरणविवक्षायां स्वप्नांतं मे इत्यादेरेवोपक्रमतायाअवश्यांगीकार्यत्वात् - अन्यत्र त्वदीयग्रंथेषु तथैवोदाहृतत्वाच्च न कथंचिदपि सदेवेत्यादेरुपक्रमत्वंशक्यसंपादनमिति ॥

एतेन अद्वितीयपदेन द्वितीयसामान्याभावबोधनात् तदा अनादिपदार्थानां सत्वमिति मंडनोक्तिः परास्तेति दीपिकाकारोक्तिरेव परास्ता ॥ अनादिदृश्यस्य तम आदिशब्दबोध्यस्य - अपंचीकृतसमष्ट्यादेश्च तदानीं सत्वस्य तम आसीदिति श्रुतिसिद्धस्य त्वत्पूर्वाचार्यैरंगीकृतस्य चापलपितुमशक्यत्वात् । दृग्दृश्ययोस्तात्विकत्वातात्विकात्वाभ्यां व्यतिरेकस्याभ्युपगतत्वात् । ब्रह्मव्यतिरेकेणाभावे ब्रह्मात्मनासत्वप्राप्त्या तन्मिथ्यात्वाशाया दूरविसर्जनीयत्वापाताच्चेति ॥

यत्तु ॥ सदेवेत्यादेः शंखः पांडुर एवेत्यादेरिव इदं पदार्थकार्यजातस्य सत्वबोधन एव तात्पर्यं प्रसरोक्तमनुपपन्नं तदाकारणस्यापि सत्वादित्यादि । तत्प्रकाशप्रसरोक्ताज्ञानमूलं ॥ अत एवानुक्तोपालंभनं च । प्रकाशप्रसरे हि ॥ यत्तु सदेवेत्यस्य सद्व्यतिरेकेणेदं नासीदित्यर्थः तथा च सर्वस्य मिथ्यात्वमत्रोच्यत इति ब्रह्मानंदप्रभृतिभिरुक्तमिति । तदसारं ॥ शंखः पांडुर एवेत्यादिवत् सदेवेत्यनेन सर्वस्य सद्रूपतालाभेन मिथ्यात्वप्रतिकूलत्वात् । एकाद्वितीयादिपदानामपि त्वन्मते मिथ्यात्वपरतया पौनरुक्त्यापातच्चेत्युक्तं । सति चैवं ग्रंथसंदर्भे दीपिकाकारोक्तदूषणाभासः कथं संभवदुक्तिक इति सूरयो विमर्शयंत्विति ॥

यत्तु ॥ यदपि मंडने मिषदित्यनेन व्यापाररहितद्वितीयसत्वमवगम्यत इत्युक्तं । तदतिसाहसं - स्वांतेवासिव्यामोहकं च । मिषदित्यस्य व्यापारवत् इतरद्वा सर्वमिति भाष्ये व्याख्यानात् । तम आसीदित्यादेर्व्यावहारिकार्थसत्वबोधकत्वादित्यादि । तदप्येतेन परास्तं ॥ असंकुचितेन किंचनेत्यनेन द्वितीयसामान्यसंग्रहे मिषदित्यस्यव्यर्थत्वापातात् । मिषस्पर्धायामिति धातुव्याख्यानेन व्यापारवदर्थकमिषदित्यस्य तद्रहितार्थताया अनुचितत्वात् । तस्य ब्रह्मानंदप्रभृतिभिरप्यन्यथा व्याख्यातत्वात् । तम आसीदित्यादि श्रुतिविरोधाच्च । "तर्ह्यव्याकृतमासीत् - तम आ-

सी''दित्यादिश्रुत्या व्यावहारिकंसत्वं बोध्यते इत्युक्तमप्ययुक्तं । स्थिति-दशायामिव प्रलयेपि व्यावहारिकद्वितीवस्तुसद्भावस्यैव मंडनाभिप्रेतत्वेन तदा व्यापररहितद्वितीयसत्वस्येदानीमिवावर्जनीयतया प्राप्तत्वेन मंडनोक्तस्य सूप-पन्नतया तस्य शिष्यव्यामोहकृत्वप्रलापस्य विद्वेषमात्रमूलत्वादिति । तस्मात् अद्वैतमते तत्त्वमसीत्यादेस्तात्विकविशिष्टाभेदपरत्वसंभवसमर्थनं चंद्रि-कानुयायिनां सोपपत्तिकं समूलं निर्बाधं चेति सिद्धं ॥

## ❀ प्रयोजनार्थमध्यासभंगः ❀

यत्तु ॥ कर्तृत्वादिबंधस्येत्यादिना - बंधः ब्रह्माज्ञानकार्य-स्वका-रणब्रह्मसाक्षात्कारनाश्यत्वात् - शुक्तिसाक्षात्कारनिवर्त्यरूप्यवदिति प्रयोगो विवक्ष्यते । न हि सेतुः पापस्योपादानं ॥ तथा च नापि प्रयोजना-र्थमध्यासः - सेत्वज्ञानाकार्यस्यापि पापस्य सेतुज्ञानान्निवृत्तेरिति चंद्रिकाकृतां दूषणं विवरणाशया ज्ञानमूलमेवेत्यादि । तद्बालभाषणं ॥ उक्तरीत्या प्रयोगविवक्षाया निर्मूलत्वात् । बहुदोषदुष्टतयातिहेयत्वाच्च । तथा हि ॥ पंचपादिकाविवरणयोः''तेन सूत्रकारेणैव ब्रह्मज्ञानमनर्थहेतुनिर्बर्हणं सूत्रयता अविद्याहेतुकं कर्तृत्वादिकं प्रदर्शितं भवति''इत्युक्त्या - ''तरति शोकमात्मविदित्यादिश्रुत्या च ब्रह्मज्ञानस्य तत्साक्षात्कारत्वेनाज्ञाननिवर्तकत्वा-वगमेपि कारणसाक्षात्कारत्वेन निवर्तकत्वाप्राप्त्या स्वकारणसाक्षात्कारनाश्य-ताया अश्रुतत्वेन निर्मूलतयास्वरूपासिध्यापत्तेः । अस्तुवा सा ना-श्यता हेतुः । तथापि किं तत्कारणत्वं - यद्ब्रह्मविशेषणतया नाश-

कतावच्छेदकत्वौ पापे व्यभिचारपरिहारायेप्सितं । किमुपादानत्वं - उत निमित्तत्वं - तद्विशेषः कर्तृत्वं वा । आद्येपि । किं परिणाम्युपादानत्वं- उत विवर्तोपादानत्वं । नाद्यः ॥ अनंगीकारात् । निर्विकारश्रुतिविरोधाच्च । अत्र विवरणोक्तं समाधानं तु प्रकाशप्रसर एव लेशतो दूषितं । विशेषतस्तन्निरासश्चाकारे व्यक्तः । किं च परिणाम्युपादानसाक्षात्कारस्य कार्यानुकूलत्वेन तन्निवर्तकत्वमसंभवदुक्तिकमेव । न द्वितीयः ॥ पक्षीकृते बंधे ब्रह्माज्ञानकार्यत्वसिद्धिं विना तदारोपाधिष्टानत्वरूपविवर्तोपादानत्वासिध्या अन्योन्याश्रयात् - अधिष्टानत्वस्य च भ्रमोपादानाज्ञानविषयत्वरूपत्वात् । अरोपाधिष्टाने कारणत्वाव्यवहाराच्च । तस्मादिदंसंभूतं - जायते - जीवतिचेत्यादि व्यवहारादर्शनाच्च । न हि शुक्तेः रूप्यं संभूतं - जायते - जीवतिचेति व्यवहारो दृष्ट इष्टो वा । अस्ति च ब्रह्मणि "आत्मन आकाशः संभूतः यतो वा इमानि भूतानि जायंते ये नजातानि जीवंती"त्यादितद्व्यवहारः । दृष्टांतासिद्धिश्च ॥ शुक्तिज्ञानाद्रूप्यं नष्टमित्यप्रतीत्या रूप्ये तन्नाश्यतायाः - शुक्तौ तत्कारणतायाश्च प्रतिवादिनोऽसिद्धत्वात् । ज्ञातस्य ब्रह्मण उक्तकारणत्वानुपपत्या अज्ञातस्यैव कारणत्वे वाच्ये नागृहीतविशेषणन्यायेनाज्ञानकार्यत्व एव पर्यवसानेन साध्या विशिष्टता च । नापि द्वितीयः ॥ निमित्तकारणसाक्षात्कारेणकार्यनाशादर्शनात् । त्वन्मते ब्रह्मण आरोपाधिष्टानत्वरूपोपादानत्वातिरिक्त निमित्तत्वासंभवाच्च । अत एव न तृतीयः ॥ "अधिष्टाने तथा भ्रांते भ्रामके च न कर्तृता । लौकिकीकृतिमत्ता तु नदृष्टारोपितं प्रती"त्याद्युक्तरीत्या कर्तृत्वस्य निरस्तत्वात् । अत्राद्वैतिसिध्यादिप्रदर्शितासत्साधनबाधननिरसनप्रकारो गुर्वामोदादौ व्यक्तो द्रष्टव्यः । किं च त्वन्मते विद्यमानस्यैवाज्ञानं न तुच्छस्येत्यंगीकारेण घटादेर्विषयविधया स्वाज्ञानं प्रत्यन्वयव्यतिरेकाभ्यां कारणत्वप्राप्त्या स्वकारणघटज्ञाननिवर्त्येतदज्ञाने व्यभिचारश्च ।

कारणशब्देनोपादानकारणविवक्षा तु - प्रागेव निराकृता । तस्मान्नोक्तविवक्षा युक्तेति ॥

यत्तु । एतेन "तमेवं विदित्वातिमृत्युमेति - अथातो ब्रह्मजिज्ञासेति" श्रुतिसूत्रयोः ब्रह्मज्ञानेन बंधसंबंधवियोगरूपमोक्षस्य प्रतिपादनेपि उपादानेन सह सत्यभूतकार्यस्यापि निवृत्तौ बाधकाभावेन तदर्थमध्यासोक्तिरयुक्तेति मंडनोक्तमपास्तं । तमेवं विदित्वेत्यादौ कारणज्ञानात्खलु कार्यनिवृत्तिः प्रतिपादिता । कारणज्ञानेन निवृत्तिश्चासत्वं विना रूप्यस्येव न संभवतीत्यादि । तदप्येतेनैव परास्तं ॥ तमेवं विदित्वेत्यादौ तच्छब्देन सहस्रशीर्षत्वादिगुणकपुरुषपरामर्शेन कारणवाचकपदाभावात् । यदि च "यस्माद्विराडजायते"त्यादौ कारणत्वमप्युक्तमिति मनुषे - तदोक्तपंचम्या निमित्तत्वमेवोदितमिति त्वत्प्रतिकूलमेव । न हि निमित्तकारणनाशात्कार्यनाशः शुक्तेः रूप्यमजायतेत्यादि व्यपदेशो वा प्रामाणिकः । तथा च श्रुत्याद्यनुरोधेनानेकोपद्रवोपप्लुतं कारणत्वांशं विहाय ब्रह्मसाक्षात्कारत्वेनैव तन्नाश्यत्वे विवक्षणीये तस्य सत्वेप्युपपत्या पापादावुक्तो व्यभिचारो दुर्निवार एवेति मंडनखंडनोद्यमेन स्वमुंडनमेवसंपादितं दीपिकाकारेण ॥

किं च न हि दृष्टसामर्थ्यात् ज्ञानाद्बंधनिवृत्तिः - येन तदुपपत्तये बंधमिथ्यात्वमपेक्षितं भवेत् । किंतु "तरति शोकमात्मवित् - दृष्ट्वैव तं मुच्यते - तस्मिन्दृष्टे परावरे - ज्ञानाग्निः सर्वकर्माणि - तदधिगमे उत्तरपूर्वाघयोः" इत्याद्यागम एव - "सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति । रथस्थं केशवं दृष्ट्वा सर्वपापैः प्रमुच्यते - तद्यथेषीकातूलमग्नौ प्रदूयते - एवमेवं विदिसर्वे पाप्मानः प्रदूयंते" इत्याद्यागम इव ब्रह्मज्ञानाद्बंधनिवृत्तिं श्रावयति । प्रमिते च साध्यसाधनभावे - का नामानुपपत्तिः - यच्छमनायोपपादकमज्ञानकार्यत्वादिकं मृग्यं स्यात् । ननु श्रुतस्यैव यागे स्वर्गसाधनत्वस्योपपत्तये अपूर्वमिव श्रुतोपपत्यर्थमेव बंधमिथ्यात्वकल्पनमिति

चेन्न । वैषम्यात् । नियतपूर्ववृत्तिता शून्यस्य कारणताया इव सत्यस्य निवृत्तौ वाधकाभावात् । सत्यस्यापि निवृत्ताकात्मापि निवर्तेतेति चेत् - अनादिभावस्यापि निवृत्तौ आत्मनोपि निवृत्तिः किं न स्यात् । निवर्तकभावाभावाभ्यां विशेषइति चेत् - कुत आत्मनि वृत्तिः - विरोधिसद्भावस्यैव निवृत्तौ प्रयोजकत्वांगीकारेण प्रकृते तदभावात् । दृष्टांते सत्यस्यैव पापादेः अग्निप्रक्षिप्तेषीकादेश्च सेतुदर्शनादिनेव ब्रह्मज्ञानेनापि सत्यस्यैव निवृत्तिबोधनात् । त्रैकालिकनिषेधप्रतियोगिन उत्तरकालमात्रवृत्यभावरूपध्वंसायोगेन ध्वंसस्य प्रतियोगिसत्तासापेक्षत्वात् । नाशस्य ध्वंसरूपत्वे सत्यत्वमवर्जनीयमेव । बाधरूपत्वेतु "तरति शोकमित्यादि" श्रुतिविरोधः ॥

किंच "विद्वान्नामरूपाद्विमुक्त" इत्यादि श्रुतिर्यदि शुक्तिसाक्षात्कारसाधारणाधिष्टानसाक्षात्कारत्वादिना स्वाज्ञानकल्पितबंधनिवृत्तिं प्रति कारणतां बोधयति तदा लोकसिद्धकारणतानुवादस्य व्यर्थत्वात् अनुपादेयैव स्यात् । न हि लोकसिद्धार्थे उपदेशोपेक्षितः । अपि च विद्वानित्यादिश्रुतेस्त्वदभिमतकारणताबोधन एव तात्पर्यं नत्वस्मदभिमतमहिमातिशयाधायकविलक्षणकारणताबोधन इत्यत्र त्वद्वचनातिरिक्तप्रमाणाभावेन तत्कल्पनाया अयुक्तत्वात् । प्रत्युत ध्वंसोक्त्या तत्सत्यताया एवावगमाच्च नानुवादित्वं युक्तं । किं चैवं सति ; शुक्त्यादिज्ञानापेक्षया ब्रह्मज्ञाने सेतुदर्शनादाविव महिमातिशयोऽपि न सिध्येत् । ततश्च ब्रह्मज्ञानप्रशंसा "एष हि ब्रह्म आयाती"त्यादिसिद्धा विरुध्येत । नह्यधिष्टानज्ञानेनाध्यस्तनिवृत्तिरपूर्वा । शुक्त्यादिज्ञानसाधारण्यात् । तस्माद्ब्रह्मसाक्षात्कारत्वेन निवर्तकताया अलौकिकतया अपूर्वाया एव श्रुत्याबोधनं युक्तमिति चंद्रिकोक्तदोषानुद्धार एव । कारणत्वनिवेशाग्रहेपि स्वोत्तरोत्पन्नघटानुव्यवसाय निवर्त्ये तत्पूर्वभाविनि घटस्मरणे व्यभिचार एव । स्वकारणघटव्यवसायविषयकसाक्षात्कारनाश्यतायास्तत्स्मरणे सद्भावात् - उक्तसाध्याभावाच्च ।

एवं प्रतिवादिमते ब्रह्मज्ञानाकार्ये अनादिकामकर्मादिप्रवाहे सर्वकारणे ब्रह्मणि स्वकारणत्वस्यापि सत्वेन हेतुभावात् - साध्याभावाच्च व्यभिचारश्च । "व्यभिचारो हेत्वसिद्धिरेकपक्षेपि दूषण"मित्युक्त्या अन्यतररीत्या व्यभिचारस्यापि दोषत्वात् । न चानादेरुत्पत्त्याद्ययोगेन तत्कारणत्वायोगः । सिद्धांते पराधीनविशेषावाप्तिरूपोत्पत्तेर्नित्यादिसाधारण्यादिति दिक् ॥

एवं ब्रह्मज्ञानस्य स्वतः फलत्वोक्तिरप्ययुक्ता । तस्यैव बंधनिवृत्तिरूपमोक्षहेतुत्वं विना स्वत एव पुरुषार्थत्वे प्रयोजनार्थमध्यासवर्णनपरभाष्याद्यसामंजस्यापातात् । तरतीत्यादिश्रुतिविरोधात् । अज्ञानाविरोधि ब्रह्मस्वरूपस्य ज्ञानरूपत्वसर्वदृश्योच्छेदरूपत्वाद्यसंभवस्योक्तत्वात् । वृत्तिरूपज्ञानस्य मिथ्यात्वेन पुरुषार्थतायोगात् । ब्रह्मसाक्षात्कारस्य सकलदृश्योच्छेदरूपताया अनुपदमेव निराकरिष्यमाणत्वाच्च । उपादानेन सह कार्यनिवृत्तिर्बाध इत्यप्ययुक्तं । अनादिभावबाधाभावापातात् । रूप्यादेर्नाशानंगीकारात् । अज्ञानस्योपादनत्वे उपादानसाक्षात्कारत्वेन ब्रह्मज्ञानस्य निवर्तकत्वोक्त्यसांगत्यापत्तेः । विवरणे ध्वंसरूपनिवृत्तिविवक्षाभावस्यानुपदमेव व्युत्पादयिष्यमाणत्वाच्चेति । एतेन ब्रह्मकार्याणां निवर्त्यता उपादानेन सह कार्यनिवृत्तिरेवेत्याद्यपि परास्तं । एतत्पक्षस्य दूषितत्वात् । सत्यस्यैव निवर्त्यताया उपपादितत्वाच्च । तथाच श्रुतिसूत्रार्थाज्ञानविलासोशुद्धभाषिणो दीपिकाकारस्यैवेति सिद्धं ॥

यत्तु ॥ सेतुज्ञानस्येत्यारभ्य शुक्तितत्वसाक्षात्कारेण हि युगपदेव रजतं - तदुपादानं पल्लवाज्ञानं च नश्यतीति खल्वनुभवसिद्धं । न हि वयं ज्ञानातिरिक्तं सोपादानकार्यनाशकं नास्तीति वदामः । किं तु साक्षात्कारेण सोपादानकार्यनिवृतिः कार्यस्यासत्वं विना नोपपद्यत इति । तथा च सेत्वकारणकपापे न व्यभिचार इत्यादि । तदप्यतएवापास्तं । उपादानेन सह कार्यनिवृत्तिरूपस्यबाधस्योदाहृतश्रुत्यादावप्रमितत्वात् । लघुचंद्रि-

कायामुक्तविवरणवाक्यव्याख्यावसरे अज्ञानस्य निवृत्तिर्नाशः तत्कार्यस्य तु बाध एवेत्युक्तत्वेन सर्वत्रैकविधनिवृत्तेरनुचितत्वात् । असदेव रजतं प्रत्यभादित्येवानुभवेन शुक्तिज्ञानेन रूप्यं नष्टमिति प्रतीतेस्त्वदनुभवमात्रवेद्यत्वेनाप्रामाणिकत्वात् । तादृशज्ञानस्य च एतावंतं कालं शुक्त्यज्ञानमासीदित्याद्यनुभवेन सत्यत्वात् । एतत्कल्पस्य निरस्तत्वाच्चेति । यत्तु ॥ एतेनेत्यादिना अनादिबंधस्य नात्रपक्षत्वं विवरणाभिप्रेतमिति । तन्न ॥ पंचपादिकाविवरणयोरनाद्यध्यासस्यापि मिथ्याज्ञाननिमित्तत्वनैसर्गिकत्वयोर्द्वयोरपि शंकासमाधिभ्यामुपपादितत्वेनानादिबंधस्यापि पक्षताया विवरणाभिप्रेतत्वावगमात् । अन्यथा तदुच्छेदासिध्याब्रह्मज्ञानस्यापुरुषार्थत्वापातात् । नच बाधः ॥ साधनादिसाधारणाज्ञानप्रयुक्तत्वस्यैवाज्ञानकार्यपदेन विवक्षणीयत्वादिति" ॥

यदपि ॥ अस्तु वा बंधः ब्रह्माज्ञानकार्यं ब्रह्मसाक्षात्कारनिवर्त्यत्वादित्येव प्रयोगोत्र विवक्षितः । एवमप्यत्र निवर्त्यत्वं बाध्यत्वं विवक्षितमिति न पापादौ व्यभिचार इति । तदपि न ॥ निवृत्तिपदेन त्रैकालिकनिषेधादिरूपबाधविवक्षायां "तरति शोकमात्मवित् - ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेर्जुन । तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशौ" इत्यादिश्रुतिसूत्रादिविरोधस्योक्तत्वात् । बाध्यत्वस्याप्यन्यत्र विकल्पासहत्वेन दूषितत्वात् । दृष्टांतासिद्धेश्चेति ॥

यच्च । अस्तु वा अनादिबंधसाधारणस्यैवात्रपक्षता । एवमपि ज्ञानजन्यध्वंसप्रतियोग्यज्ञानप्रयुक्तत्वमेवात्रनिवर्त्यत्वं । विवेचितं ह्यनादीनामपि क्षेमसाधारणमविद्याप्रयुक्तत्वमित्यादि । तदप्यसारं ॥ ज्ञानजन्यध्वंसप्रतियोग्यज्ञानप्रयुक्तत्वमात्रस्य हेतुत्वे - शुक्त्यज्ञानप्रयुक्ते रूप्यार्थिप्रवृत्तिकालीनकंटकवेधादिजन्यदुःखाद्यनर्थे - यत्र विपरीतप्रमया रज्वारोपितभुजगनाशः तत्प्रयुक्तभयकंपादिनाशश्च तत्र रज्वज्ञानप्रयुक्ते भयकंपादौ

च व्यभिचारात् । क्षेमसाधारणप्रयुक्तत्वस्य ब्रह्मसाधारणतया तस्याप्यज्ञानप्रयुक्तत्वे सत्यानृतविभागभंगप्रसंगाच्च । एतेनेत्यारभ्य उपादानेन सह कार्यनिवृत्तिरित्यत्रोपादानपदेन प्रयोजकमात्रविवक्षणात् नानादिभावासंग्रह इत्युक्तमप्यत एव परास्तं । तथा विवक्षयां बंधस्याज्ञानोपादानकत्वाक्षिध्या सत्यत्वेप्युक्तबाध्यत्वसंभवेन तन्मिथ्यात्वासिद्धिप्रसंगात् । अस्य पूर्वमेव निराकृतत्वाच्च ॥

यदपि एतेन यद्यत्रेत्यादिना न ह्यस्मन्मते अनादिपदार्थानां साक्षादेव ज्ञाननाश्यत्वमंगीक्रियते । ज्ञाननिवर्त्यानादिभावत्व - तन्निवर्त्यकारणकत्वान्यतरस्यैव हेतुता वक्तव्येति न पापादौ व्यभिचारः । अनादिपक्षतायां तु - साध्ये कार्यपदं प्रयुक्तपरं - साक्षात्कारे स्वाविषयकत्वविशेषणान्न ब्रह्मणि व्यभिचारः । प्रयोजकत्वं च समकालिकत्वं । सर्वथा बंधानां पापवैलक्षण्यं विशदमित्यंतमुक्तं । तदप्ययुक्तं ॥ अनादिदृश्यानां साक्षाज्ज्ञाननिवर्त्यत्वस्य त्वयैवानंगीकृतत्वेनासिद्धेः । भावत्वनिवेशे चरमवृत्तिप्रागभावासंग्रहस्य दुर्वारत्वात् । उत्तरज्ञानप्रयुक्त व्यतिरेकप्रतियोगिपूर्वज्ञानजन्यसंस्कारे व्यभिचारात् । प्रतिवादिमते अनादिभावस्यापि सत्यस्यैवकामकर्मादिप्रवाहस्यानादिप्रकृतिरूपाज्ञानस्य च ब्रह्मसाक्षात्करनिवर्त्यत्वांगीकारेण तत्रान्यतररीत्या व्यभिचारात् । हेतुशरीरे ज्ञाननिवर्त्यत्वनिवेशवैयर्थ्यात् । क्षेमसाधारणप्रयुक्तत्वमात्रस्य साध्यत्वे तस्य सत्वेप्युपपत्या अर्थांतरत्वात् । ब्रह्मसाधारण्येनासाधारण्यापाताच्चेति । साक्षात्कारे स्वाविषयकत्वादिनिवेशप्रलापस्त्वत्यंतासंबद्ध एवेति ॥

यदपि । वस्तुतस्तु ॥ सेतुदर्शनस्य क्रियात्वेनैव पापनिवर्तकत्वं - न तु साक्षात्करत्वेन । आत्मसाक्षात्कारस्तु फलं न विधेयः । सेतुं दृष्ट्वेत्यत्र सेतुदर्शनप्रयोजकतद्देशगमनादिकमेव लक्षणयाविधेयमभिप्रेतं । अत एव हि तत्र व्रतकल्पादीतिकर्तव्यताविधिः । क्रियाया

एव हीति कर्तव्यताकांक्षा । यथा सेतुदर्शनस्य फलमुक्तं न तथा साक्षात्कारस्य । तदुद्देशेन श्रवणनियमपक्षेपि नियमापूर्ववैशिष्ट्यं न साक्षात्कारस्य । श्रवणनियमापूर्वस्यापि श्रवणफलसंपादन एवोपयोगः । ततो नियमापूर्ववैशिष्ट्यं श्रवणस्यैव युक्तमित्यादि । तदप्यापातरमणीयं ॥ पूर्वं सेतुदर्शनस्य क्रियात्वेन पापनिवर्तकत्वमुक्त्वा ततः परं सेतुदर्शनोद्देश्यकतद्देशगमनादेरेव विधेयत्वेन पापनिवर्तकत्वोक्त्या व्याहतेः । सेतुं दृष्ट्वेत्यत्र सेतुदर्शनस्य क्रियात्वेन निवर्तकत्वे "दृष्ट्वैव तं मुच्यते" इत्यत्र ब्रह्मदर्शनस्यापि तथात्वापत्तेः । अविशेषात् । आत्मसाक्षात्कारस्य मोक्षसाधनत्वं विना स्वत एव फलत्वं निरस्तं - निरशिष्यते च । सेतुं दृष्ट्वेत्यत्र तद्देशगमनलक्षणायाः कल्पना तु निर्मूलैव । न हि सेतुदर्शनस्य पापनिवर्तकत्वं प्रमाणांतरबाधितं । किं तु कपिलादिदर्शनस्य तत्प्रमितं च । एवं विफला विरुद्धफलाच ॥ सेतुदर्शनं विना गमनमात्रेण पापनिवृत्तेरप्रमितत्वात् । अन्यथा दृष्ट्वैवतमित्यादावपि ब्रह्मदर्शनोद्देश्यकगुरुसमीपगमनादिकमेव विधेयमभिप्रेतं स्यात् । करणस्य खल्विति कर्तव्यताकांक्षा । न तु क्रियाया एवेति नियमः । अत एव वेदेन करणेन ब्रह्मणि प्रमीयमाणे मीमांसाहीति कर्तव्यतेति सर्वमतेप्यविप्रतिपन्नो व्यवहारः । "तरति शोकमात्मवित् - ज्ञानाग्निः सर्वकर्माणी"त्यादौ सेतुदर्शनस्येव ब्रह्मसाक्षात्कारस्यापि शोकतरण - कर्मक्षयादिफलस्य स्पष्टमुक्तत्वात्तदभावोक्तिरज्ञानमूलैव । अवघातादाविव श्रवणादावपि क्रियातन्नियमादृष्टयोर्भिन्नफलत्वस्य समर्थितत्वेन अवघातजन्यवैतुष्यान्यतदगंकयागसाध्यपरमा पूर्वे अवहननियमादृष्टस्योपयोगवत् - श्रवणादिजन्य ब्रह्मज्ञानान्य श्रवणाद्यंगक ब्रह्मज्ञानसाध्याज्ञाननिवृत्याद।वेव श्रवणनियमादृष्टस्योपयोग इत्यस्य सर्वपरीक्षकसंमततया श्रवणसाध्यफल एव श्रवणनियमापूर्वस्याप्युपयोगांगीकारोक्तिरनुचितैव । तथात्वे अवघातनियमापूर्वस्याप्यवघात साध्य-

फलांश एवोपयोगोंगीकर्तव्यः स्यात् । ततश्च श्रवणस्यैव तन्नियमादृष्टवैशिष्ट्यवचनमयुक्तमनेकातिप्रसंगपराहतं च । अधिकं तु प्रकाशप्रसरे व्यक्तं ॥

यत्तु । वस्तुतस्तु ॥ व्रीहीनवहंतीत्यादिस्थलेपि नियमापूर्वमानुषंगिकं - अनुद्देश्यं - अनंगं च नैवं व्रतकलाप इति तद्विशिष्टसेतुदर्शनस्य न साक्षात्कारत्वेन निवर्तकतेत्यादि । तन्न ॥ विवरण एव व्रीहीनवहंतीत्यादेरुभयार्थत्वस्योक्ततया नियमापूर्वस्यावांतरोद्देश्यतायाः परमा पूर्वे अंगतायाश्च स्पष्टमवगमात् । अन्यथा यागसाध्यापूर्वार्थिनः नियमेनावघाते प्रवृत्तिर्न स्यात् । अवघातसाध्यवैतुष्यस्थल एव नियमापूर्वस्योपयोगांगीकारात् अन्यथेत्युक्तमप्यसंबद्धमेव । तथा च नियमापूर्वस्य साधनांतरपरित्यागेन तत्रैव प्रवृत्तिप्रयोजकतयोद्देश्यत्वात् । वितुषव्रीह्यंगकयागसाध्यपरमा पूर्वे अंगत्वाच्च - श्रुत्यभिप्रेतो मोक्षहेतुब्रह्मसाक्षात्कारः पापनाश हेतुसेतुसाक्षात्कार इव वैराग्याद्यनेकसाधनसाध्यादृष्टपूर्वकत्वरूपविशेषविशिष्ट एव वा - तत्साध्यशक्तिविशेषविशिष्ट एव वा विवक्षितो वक्तव्य इति तादृश विशिष्टसाक्षात्कारः सेतुसाक्षात्कार इव विधेय एव । तस्य च शुक्तिप्रमादिविलक्षणरूपेणैव बंधनिवर्तकतायाः श्रुत्यभिप्रेतत्वात् - तन्निवर्त्यस्य सत्यत्व एव तादृशनिवर्त्यत्वस्योपपत्त्या सूत्राक्षिप्तप्रयोजनार्थमध्यासवर्णनं भाष्ये अयुक्तमेवेति स्थितं ॥

एतेन तत्वतस्तु सेतुदर्शनस्य चाक्षुषत्वेनैव पापनाशकत्वं - न साक्षात्कारत्वे नेत्युक्तमपास्तं । दृष्ट्वैव तं मुच्यत इत्यादावपि ब्रह्मज्ञानस्य चाक्षुष त्वेनैव निवर्तकत्वापातात् । रूपादिहीनस्याप्यात्मनः सर्वप्रत्ययवेद्यत्वेन चाक्षुषताया अंगीकृतत्वात् ॥

यत्तु ॥ परमार्थतस्तु । सेतुं दृष्ट्वेति वाक्यं तत्स्नानविधिपरमेव - अत एवांधानां पापनिर्हरणं । लघुचंद्रिकायां सेतुज्ञानस्य चाक्षुष-

त्वेन निवर्तकत्वोक्तिः श्रवणादिनियमापूर्वस्य प्रमाप्रतिबंधकपापनिवृत्तावुप-योगोक्तिश्चाभ्युपेत्यवादेन - व्यक्तंचैतद्विवरणलेशीय इति । तदसत् ॥ सेतुं दृष्ट्वेत्यस्य स्नानविधिपरत्वकल्पनायादुष्करत्वात् । न हि दृष्ट्वेत्यस्य स्नात्वेत्यर्थस्त्वदन्येन केनापि सचेतसा वक्तुं शक्यः । लक्षणादिकल्पनं तु निर्मूलमेवेति प्रागेवावोचाम । सर्वपुराणाद्यभिमत सेतुदर्शनमहिमाति-शयालाभात् । स्नानविधेस्तत्फलस्य च पृथक् कथनाच्च । अंधाना-मपि सेतुविषयकत्वाचसाक्षात्कारेण पापनिवृत्तेः स्मार्तत्वात् । सर्ववि-धीनां सर्वाधिकारिकत्वाभावात् । दरिद्राणां पंगूनां सेतुदर्शनजन्य पापप-रिहारोपायाभावेन तत्रापि प्रकारांतरस्य कल्पनीयत्वापातात् । तत्र गता नां चक्षुष्मंतामपि सन्निपातादिना स्नानासमर्थानां विध्यंतरकल्पनापत्तेश्च अन्यथा दृष्ट्वैवव्रतमित्यत्रापि मंदाधिकारिणां शोकतरणसिद्धये किंचिद्व्यान-स्यैव विधेयत्वापातः ॥

यत्तु ॥ एतेन व्रतकलापस्य नियमापूर्वस्येव साक्षात्कार एवोप-योग इति प्रकाशप्रसरोक्तं परास्तं । आरादुपकारकाणां व्रतकलापानां दृष्टसाक्षात्कारफलोपयोगासंभवात । न हि ब्रह्मसाक्षात्कार इव पापनि-वृत्तिं विना सेतुसाक्षात्कारोपि व्रतकलापं विना न संभवतीति वक्तुमलतिति । तत्र ॥ व्रतकलापस्येव आरादुपकारकस्य नियमापूर्वस्यापि दृष्टब्रह्मसा-क्षात्कारफलोपयोगासंभवात् । ब्रह्मज्ञानप्रतिबंधकपापनिवृतिर्नियमापूर्व-साध्या चेत् - सेतुदर्शनप्रतिबंधकपापनिवृत्तिः व्रतकलापाधीना स्यादविशे-षात् । स्वप्रतिबंधकपापनिवृत्तिं विना ब्रह्मसाक्षात्कारस्येव सेतुसाक्षात्का रस्याप्ययोगात् - विना व्रतकलापं पापनिवर्तनक्षमसेतुसाक्षात्कारासंभवाच्च । विहितसांगनिवृत्तकर्मानुष्टानादिना प्रतिबंधकपापनिवृत्तेर्भामत्यादिषु व्यक्तमे-वोक्तत्वाच्च । तथा च नियमाधीतवेदांतश्रवणाद्युपयुक्तनिवर्तकर्मानुष्टाना-दिना दर्शनप्रतिबंधकदुरितनिवृत्यादर्शने जाते नियमापूर्वविशिष्टमेव ज्ञानं

शोकतरणोपायः । तथा उत्कटेच्छया भगवद्भक्तिध्यानादिना च प्रतिबंधकदुरितनिवृत्या सेतुदर्शने जाते व्रतकलापविशिष्टं सेतुदर्शनं पापपरिहारोपायस्तद्वदित्येव वक्तुं युक्तमिति ॥

यत्तु ॥ न हि दृष्टफले साक्षात्कारे व्रतकलापविशिष्टे तदविशिष्टे च विशेषः । न हि दृष्टफले अदृष्टापेक्षा । यत्र हि नियम्यमानस्य स्वफलद्वारा अदृष्टफलांतरोपयोगः तत्रैव नियमापूर्वस्य साध्यफलोपयोगः । यत्र तु नियम्यमानसाध्यं स्वतः फलं - तत्र नियमापूर्वस्य स्वतंत्रं अदृष्टफलांतरार्थत्वमेवेति श्रवणनियमापूर्वस्य स्वतंत्रं प्रमाप्रतिबंधकपापनिवृत्त्युपयोगो नानुपपन्नः । तमेवं विदित्वेत्यादेर्लोकसिद्धकारणतानुवादित्वान्मिथ्यात्वाभिप्रायकमेव श्रुतिसूत्रादीत्यादि । तदसत् ॥ विवरणमते श्रोतव्य इत्यादेर्नियमविधित्वांगीकारेण नियमाधीतवेदांतश्रवणोत्पाद्यमेव ब्रह्मज्ञानं बंधनिवर्तकं । न तु भाषाप्रबंधादिजन्यमित्युपपादितत्वेन श्रवणनियमापूर्वस्य श्रवणसाध्यफलांश एव सहकारित्वप्राप्त्या तस्य दुरितनिवर्तकत्वकल्पनायानिर्मूलत्वात् । ब्रह्मज्ञानस्य स्वतः फलत्वं तु निरस्तमेव - निरशिष्यते च । तथा च सेतुसाक्षात्कारस्येव ब्रह्मसाक्षात्कारस्यापि दृष्टफलत्वाविशेषात् - तत्र नियमापूर्वापेक्षा ह्ययुक्तैव । तत्रेवात्रापि साक्षात्काररूपे फले अविशेषोपि सुवच एव । यदि च व्रतकलापविशिष्टमेव सेतुदर्शनं पापनिवृत्तिहेतुः । न केवलमिति विशेषः ॥ तर्हि श्रवणनियमापूर्वविशिष्टमेव ब्रह्मज्ञानं शोकतरणोपायः - अन्यत्तु नेति प्रकृतेपि विशेषः सूपवाद एव । व्रीहीनवहंतीत्यत्र नियमापूर्वस्य वैतुष्यांशे उपयोगानंगीकारान्न तत्प्रतिबंदीग्रहणं युक्तं । व्रतकलापं विना सेतुदर्शनमिव नियमापूर्वं विना पि श्रवणादिमात्रेण प्रमाप्रतिबंधकपापनिवर्तकनिवृत्तकर्मानुष्टानादिसाध्यांतःकरण शुद्धिपूर्वकेण ब्रह्मदर्शनमपि युक्तमेव । निवृत्तकर्मादिनैव-पापनिवृत्तिसंभवात् । तदुक्तं भामत्यां ॥ "नित्यनैमित्तिकानुष्टानप्रक्षी-

णकल्मषस्य ज्ञानोत्पत्तिंदर्शयत्याथर्वणी श्रुति''रिति । ब्रह्मज्ञानस्य स्वतः फलत्वाभावेन अवघातनियमापूर्वस्येव श्रवणनियमापूर्वस्यापि नियम्यमानश्रवणादिसाध्यब्रह्मज्ञानरूपफलांश एवोपयोगेन फलोपकार्यंगतया स्वरूपोपकारकत्वाभावेन फलोपयोग एवयुक्तः न तु पापनिवृत्त्युपयोगः । तस्य अन्यतः सिद्धत्वादिति । तमेवंविदित्वेत्यादेर्लोकसिद्धकारणतानुवादित्वं तु निरस्तमेवेति ॥

यत्तु ॥ श्रुतीनां विलक्षणकारणताबोधकत्वमेव युक्तमिति प्रसरोक्तमसंगतं । सेतुंदृष्ट्वेत्यत्र ह्यदृष्टफलत्वं न लोकसिद्धकारणतया निर्वहति । तमेवेत्यत्र तु अव्यवहितोत्तरभाव्यपूर्वानपेक्षफलबोधनान्न दोष इत्यादि । तन्न ॥ सेतुदर्शनस्येव ब्रह्मदर्शनस्यापि शोकतरणकर्मक्षयाद्यदृष्टफलकतायाः प्रमितत्वात् । नियमापूर्वस्यारादुपकारकत्वेन फलस्य तन्निरपेक्षत्वोक्तेरनुचितत्वात् । लोकसिद्धकारणतावादितायाः दूषितत्वाच्चेति ॥

यत्तु ॥ वस्तुतस्तु तमेवमिति वाक्यं न विधिः किं तु सिद्धार्थकथनं । न चापूर्वार्थताहानिः ॥ नह्यात्मज्ञानं मृत्युनाशकमिति विनाशास्त्रं केनाप्यवगतं । न हि ज्ञानं विधेयमित्यादि । तन्न ॥ सिद्धार्थकत्वापूर्वार्थत्वयोर्विरुद्धत्वेन व्याहतभाषित्वात् । अधिष्टानतत्वज्ञानस्य तत्र कल्पितार्थनाशकताया लोकसिद्धत्वे तत्र शास्त्रानपेक्षणेनापूर्वार्थताया दुरुपपादत्वात् । सेतुदर्शनस्य पापनिवर्तकताया अपि विना शास्त्रमवगंतुमशक्यत्वेन सेतुदर्शनापेक्षया ब्रह्मज्ञाने विशेषस्य दुरुपपादताया उक्तत्वाच्च । ज्ञानविधिसमर्थनेन तस्यापि विधेयत्वादिति ॥

यत्तु । सेतुदर्शनस्याविधेयत्वे तत्पापनिवृत्तिसाधनमिति कथमवगतं । तमेवेत्यत्राधिष्टानसाक्षात्कारत्वेन निवर्तकताया लोकसिद्धत्वान्नानुपपत्तिरिति । तन्न ॥ सेतुदर्शनस्य पापनिवर्तकतायाः सेतुं दृष्ट्वेति-

स्मृत्यादिप्रमितत्वात् । तमेवेति वाक्ये अधिष्टानसाक्षात्कारत्वेन निवर्तकताया लोकसिद्धत्वे न ह्यात्ममात्रविषयकं ज्ञानं मृत्युनाशकमितिविना शास्त्रं केनाप्यवगतमिति त्वयैवोक्तत्वेन स्वव्याहतत्वापातात् । तत्पक्षस्य निराकृतत्वाच्चेति ॥

यत्तु ॥ प्रकाशप्रसरकाराणां भाषाप्रबंधजन्यब्रह्मज्ञानान्मोक्षस्येष्टत्वादिति शंका - गुरूपसत्यादि वैयर्थ्यापत्तिरिति समाधानं चानुक्तोपालंभनमेव । रूप्यस्य सत्तादात्म्यवत्वात्तुच्छतो वैलक्षण्यं । मिथ्यापदार्थस्यासत्वं सिद्धवत्कृत्योक्तानिदूषणानि न गणनीयानीत्यादि । तन्न ॥ "भाषाप्रबंधादिना ब्रह्मज्ञाने पाक्षिकतया प्राप्ते तद्व्यवच्छेदेन वेदांतवाक्यविचारे नियमविधिरूपाणि जिज्ञासाविधिवाक्यानीत्यादि" सिद्धांतलेशादिग्रंथेषु श्रुतिमतोद्योतोदाहृतलघुचंद्रिकादिग्रंथेषु च प्रकाशप्रसरोक्तशंकासमाध्योर्व्यक्तमुक्ततया तत्रानुक्तोपालंभनवचनस्य तद्ग्रंथांध्यमूलत्वात् । रूप्यं सदित्यादौ अधिष्टानगतेदंत्वादेरिव तद्गतसत्वस्यापि प्रतीतिसंभवे अप्रामाणिकसदर्थतादात्म्यकल्पनायोगस्योक्तत्वात् । शशशृंगं सदित्यादिप्रतीत्या तुच्छेपि सत्तादात्म्यापाताच्च । त्रैकालिकनिषेधप्रतियोगिनोबाध्यस्यासत्वसिद्धेर्निष्प्रत्यूहत्वाच्च प्रसरोक्तदूषणानामकामेनापिगणनीयत्वादिति ॥

यदपि ॥ अध्यासासंभवेनजगन्मिथ्यात्वायोगात् नेहनानेत्यादेरन्यार्थपरत्वात् । असत्यमप्रतिष्टमिति तन्निंदाश्रवणाच्चाद्वैतमतमत्यंतहेयमिति मंडनोक्तमेतेन परास्तं । न हि प्रतिज्ञामात्रेणार्थसिद्धिः - तथाच पापविलक्षणस्य ज्ञाननिवर्त्यस्य बंधस्य मिथ्यात्वात् प्रयोजनार्थमध्यासवर्णनंयुक्तमेवेत्यादि । तत्तुच्छं ॥ अद्वैतमते जगदारोपासंभवस्य - नेहनानेत्यादेरुचितार्थांतरत्वस्य - असत्यमप्रतिष्टंते इत्यादेर्मिथ्यात्वनिंदापरत्वस्य च लघुचंद्रिकादिनिरासेनाकरग्रंथेषु समर्थितत्वेन तत्प्रतिज्ञामात्रत्ववचनस्य तद्ग्रंथाज्ञानविजृंभितत्वात् । मंडनकारैरपि ग्रंथगौरवभियैवान्यत्र प्रपंचितस्या-

त्राप्रपंचनात् । अन्यथैवंजातीयक त्वदीयोक्तेरपि तत्रतत्रानुचितत्वापातात् । सत्यस्यैवनिवृत्तिसमर्थनेन प्रयोजनार्थमध्यासवर्णनस्यानपेक्षितत्वाच्चेतिसंक्षेपः ॥

तयाचायमत्राद्वैतमतनिष्कर्षः ॥ "दृष्ट्वैव तं मुच्यते" इति श्रुतौ इतरासहकृतब्रह्मदर्शनेन बंधापगमरूपामुक्तिः श्रूयते । सा च विद्यया सत्यस्य बंधस्यात्मनोविश्लेषेण न घटते । सत्यस्य ज्ञानेन विश्लेषस्य कुत्राप्यदृष्टत्वात् । अतोधिष्टानज्ञानेन शुक्तिरजतादेरप्रतीतिरूपनिवृत्तिरिव निवृत्तिर्वाच्येतिरीत्या ज्ञानान्मोक्षाभिधानं बंधस्य ज्ञाननिवर्त्यत्वेन मिथ्यात्वमाक्षिपति । इदमेव सूत्राक्षिप्तं प्रयोजनं ॥ ततस्तत्सिध्यर्थं बंधस्याध्यस्तत्वरूपमज्ञानकार्यत्वं समर्थयितुमध्यासवर्णनं भाष्य इति । अद्वैतचंद्रिकायांतु । किंतज्ज्ञाननिवर्त्यत्वं-यद्बलाज्जगन्मिथ्यात्वसिध्यभिलाष इत्याशंक्य त्रेधा तत्परिष्कृतं । तथा हि ॥ ज्ञानत्व व्याप्यधर्मावच्छिन्नजनकताकध्वंसप्रतियोगित्वं तत् । ततश्चोत्तरज्ञाननिवर्त्ये पूर्वज्ञाने संस्कारे च न दोषः । यद्वा साक्षात्कारत्वघटितधर्मावच्छिन्नकारणताकनाशप्रतियोगित्वं तत् । ब्रह्मज्ञानस्य शुक्तिज्ञानस्य च साक्षात्कारत्वेनैवाभानापादकाज्ञाननाशकत्वं । नच सेतुदर्शननिवर्त्यपापेव्यभिचारः । तस्य चाक्षुषत्वेनैव निवर्तकत्वात् । नच शुक्तिज्ञानमपि चाक्षुषत्वेनैव निवर्तकं अन्यथा शुक्तिस्पार्शनेनापि रजतनिवृत्यापातादिति वाच्यं । शुक्तिस्पार्शनस्य चाक्षुषस्येवाधिष्टानतत्वसाक्षात्काररूपत्वे तस्यापि निवर्तकत्वे क्षत्यभावात् । नचोपादानसाक्षात्कारत्वावच्छिन्नजनकताकनाशप्रतियोगिनि तत्प्रागभावे व्यभिचारः । नाशत्वेन जन्यताया विवक्षणात् । यद्वा इतरनिरपेक्षसाक्षात्कारनिवर्त्यत्वं तत् । सेतुदर्शनादेः पापनिवर्तकत्वं छत्रपादुकधारणाद्यभाव स्वकृतदोषोद्घाटनाद्यनेकव्रतकलापनियमजन्यादृष्टसहकृतस्यैव । अन्यथा तन्नियमविधानवैयर्थ्यापत्तेः । न च ब्रह्मसाक्षात्कार-

स्यापि नियमादृष्टसहकृतस्यैवाज्ञाननिवर्तकत्वं । नियमादृष्टादेः साक्षात्कारोत्पत्तावेवोपयोगात् । अन्यथा भाषाप्रबंधादिना साक्षात्कारापत्तेः । न च सेतुदर्शनस्थलेपि तथैवास्त्वितिवाच्यं । नियमं विना गमनमात्रेण सेतुदर्शनसंभवेन व्यभिचारितया नियमादृष्टस्य तत्राहेतुत्वात् । तत्र दर्शन मात्रस्य पापनिवर्तकत्वे दैवादागतयवनादेरपि तत्प्रसंगात् । न च भवन्मतेपि भाषाप्रबंधांतर्गतेनाद्वैतपरेण तत्त्वमस्यादिवाक्यसमानार्थकेन वाक्येनात्मापरोक्षसंभवेन तत्र नियमादृष्टाभावाद्व्यभिचारः । नच तत्रापरोक्षधीरेव नोदेतीति युक्तं । ज्ञानापरोक्ष्यस्य त्वन्मते विषयीभूतब्रह्मस्वाधीनतया तत्त्वमस्यादि वाक्याधीनाखंडाकारवृत्तेरिव भाषाप्रबंधजन्यवृत्तेरप्यापरोक्ष्यस्यावर्जनीयत्वात् । नच भाषया ज्ञानमेव न जायत इति वक्तुं युक्तं । सर्वानुभवापलापापत्तेः ॥ न च साक्षात्कारे वैजात्यमज्ञाननिवर्तकतावच्छेदकं स्वीकृत्य तदवच्छिन्नं प्रति श्रवणादिनियमादृष्टस्य कारणत्वांगीकारान्नोक्तव्यभिचार इति वाच्यं । सेतुदर्शनस्थलेपि तथैवांगीकारसंभवात् । दैवादागतयवनादिनिष्टदर्शने तादृश वैजात्याभावेन तद्दोषवारणसंभवाच्चेति-चेन्न । आत्मनोध्यानसहकृतमनोजन्यसाक्षात्काविषयत्वाभ्युपगमपक्षे उक्तव्यभिचरानवकाशेन तद्रीत्यैतत्कल्पोत्थानात् । कल्पत्रयेपि तन्निवर्त्य - तदभिन्न - तत्प्रयुक्तान्यतमत्वंविवक्षिणीयं । तेनाज्ञानतदुपादानक - तत्प्रयुक्तानादिदृश्यादीनां नासंग्रहः । एतच्च सत्यवस्तुव्यावृत्तं मिथ्यानिष्टमेवेति विवक्षितलाभ इति ॥

अत्रोच्यते ॥ तत्राद्यकल्पस्य द्वितीयकल्पस्य च सेतुदर्शननिवर्त्यपापे व्यभिचारः । तस्य साक्षात्कारत्वेन निवर्तकत्वात् । ज्ञानत्वव्याप्यत्वाच्च । न च तस्य चाक्षुषत्वेनैव निवर्तकत्वमिति वाच्यं । अंधस्यापि तत्स्थानं प्रति भक्तिनियमादिपूर्वं गंतुः पापनिवृत्तेः प्रमितत्वेन चाक्षुषस्पार्शनसाधारणसाक्षात्कारत्वस्यैव निवर्तकतावच्छेदकत्वौचित्यात् ।

दृशेश्चाक्षुषे व्यवहाराधिक्यमात्रेण चाक्षुषस्यैव ग्रहणे दृष्टैव तमित्यादावपि दृशिग्रहणात् ब्रह्मचाक्षुषत्वेनैव निवर्तकत्वापातात् । न च "विद्वान्नामरूपाद्विमुक्त" इत्यादौ ज्ञानसामान्यग्रहणान्नचाक्षुषस्यैव निवर्तकत्वमिति वाच्य । सामान्यवाक्यस्य विशेषवाक्यानुसारेणैव पर्यवसानस्य कर्तव्यत्वात् । नच रूपहीनं ब्रह्म कथं चाक्षुषे स्फुरतीति शंक्यं । चित्रावयविनिरूपानंगीकारपक्षे तदीयमहत्वादेरेव शक्तिविशेषेण चाक्षुषादिकारणत्ववदत्रापि महत्वे वा चक्षुः संयोगे वा तादृशशक्तिस्वीकारेणोपपत्तेः । भवन्मते ब्रह्मणः षडिंद्रियवेद्यत्वांगीकाराच्च । नीरूपस्यापि कालवच्चाक्षुषत्वस्य त्वयैव भाषितत्वेन विरोधस्य त्वयैव परिहर्तव्यत्वात् । सत्वोपहितं दृश्यत इत्युच्यते मयेति चेत् - तर्हि द्रष्टव्य इत्यादि श्रुतिस्वारस्याय केवलचक्षुषा न दृश्यते । किंतु उपनिषदर्थश्रवणादिवासितमनःसंयुक्तेन चक्षुषा दृश्यत इत्यपि वक्तुं शक्यत एव । एवमपि चाक्षुषानंगीचारे "यतो वाचो निवर्तंते" इत्यादिश्रुतिभिः शाब्दापरोक्षविषत्वमपि न स्यात् । तत्र संकोचे प्रकृतेपि तत्प्राप्तेः । प्रत्युतदृशिग्रहणसामर्थ्याचाक्षुषत्वाभ्युपगम एव युक्तः । एवं प्रियवस्तुदर्शननिवर्त्ये तद्विरहजन्यदुःखे - "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" । तद्यथेषीकातूलमग्नौ प्रदूयते एवमेव हैवंविदि सर्वे पाप्मानः प्रदूयंते "इत्यादिवचनैर्ब्रह्मसाक्षात्कारत्वेनाप्रारब्धकर्मनाशकत्वस्योभयमतसिद्धत्वात्तादृशकर्मसुचव्यभिचारः । एतेन तृतीयपरिष्कारोप्यपोढः । प्रियवस्तुसाक्षात्कारातिरिक्तासाधारणकारणस्य दुःखनिवृत्तौ ब्रह्मसाक्षात्कारातिरिक्तासाधारणकारणस्याप्रारब्धनिवृत्तौचानुपलंभात् । साधारणकारणविवक्षायांत्वज्ञाननिवृत्तेरपि कार्यत्वाददृष्टसापेक्षत्वेनासिद्धिप्रसंगात् । किंच "प्रारब्धनाशात्प्रतिभासनाश" इति स्मृत्या सविलासाज्ञाननाशे ब्रह्मसाक्षात्करेण जननीये प्रारब्धकर्मरूपप्रतिबंधकाभावस्य सहकारित्वासिद्धेर्निरपेक्षसाक्षात्कारनाश्यत्वमसिद्धमेव । एवं चित्रलिखितसिंहसा-

क्षात्कारेणेतरनिरपेक्षेण रोगविशेषनिवृत्तिदर्शनात् - कूर्मेक्षणमात्रेण तच्छिशुक्षुधानिवृत्तिदर्शनाच्च तत्र व्यभिचारो दुर्वारएव । एवं सेतुदर्शनस्थले नियमादृष्टस्य पापनिवृत्तावेवोपयोगः - ब्रह्मज्ञानस्थले तु नियमादृष्टस्य साक्षात्कार एवोपयोगः न तु तत्फल शोकनाश इत्यत्र त्वद्वचनातिरिक्तनियामकाभावेनैवमेवेति नियंतुमशक्यत्वात्पुनः पापेपि न व्यभिचारनिस्तारः ॥

एवं गुरुचंद्रिकोक्तपरिष्कारद्वयमप्ययुक्तं ॥ आद्यस्य - ज्ञानप्रयुक्तत्वावच्छेदकीभूतध्वंसत्वनिरूपकत्वरूपस्योक्तक्रमेण सेतुदर्शननिवर्त्यपापादौ व्यभिचारादिना दुष्टत्वात् । पापादिनिरूपितध्वंसत्वस्य सेतुदर्शनादिकार्यतावच्छेदकतायाः सेतुदर्शनेन पापं नष्टमित्यादि प्रामाणिकव्यवहारेणावश्याभ्युपगंतव्यत्वात् । ज्ञानप्रयुक्तस्वसमानसत्ताकस्वनिष्टतादात्म्यप्रतियोगित्वावच्छिन्नप्रतियोगिताकाभावकत्वरूपस्य द्वितीयपरिष्कारस्यापि रजतनिष्टशुक्त्यनुयोगिकतादात्म्यप्रतियोगित्वावच्छिन्नाभावस्य तदधिकरणत्वस्य वा शुक्तौ सदाविद्यमानस्यैव बाधेन सर्वदा विषयीकरणमात्रस्य कृतत्वेन तादृशाभावस्य ज्ञानप्रयुक्तत्वोक्तेरत्यंतासंभावितत्वात् । अधिकमाकरे व्यक्तं ॥

अधिष्टानसाक्षात्कारत्वेन निवर्तकत्वं त्वशक्यशंकं ॥ तस्य तदज्ञानकार्यत्वानिश्चये तन्निवर्तकज्ञानविषये तदारोपाधिष्टानत्वस्यासिध्या अन्योन्याश्रयसंदिग्धासिध्याद्यनेकोपद्रवकलुषितत्वात् । तस्मात् ध्वंसघटितपक्षाश्रयणमयुक्तमेव । एवं ज्ञानप्रयुक्तोच्छेदप्रतियोगित्वं तत् । तच्च स्व स्वीयसंस्काराधिकरणकालनिष्ट तदन्यतराधिकरणकालपूर्वत्वाभावकत्वमिति पक्षाश्रयणमप्ययुक्तं । अनादिदृश्यसंस्कार तत्वज्ञान तत्समकालिक वायुसंयोगादिषु व्यभिचारात् ॥

अपि च तादृशोच्छेदरूपाभावस्य ध्वंसस्य च नाशो वर्तते न वा । आद्ये तन्नाशस्यापि नाशांतरप्राप्त्या नाशधाराविश्रांत्यभावापातेन न कदापि शुद्धात्मरूपमोक्षाशा । क्वचिद्विश्रांतौ तस्यैव नाशाभावेनात्मस्वरूपारोपित-

तयासिध्या न निष्प्रपंचब्रह्मरूपावस्थितिः ॥ न द्वितीयः ॥ तस्यैवानाशेनोत्तरत्राप्यनुवृत्या स्वपदेनोपादेये तस्मिन् स्व स्वीयेत्यादि लक्षणगमनायोगः । स्वाधिकरणक्षणे तादृशान्यतराधिकरणीभूतक्षणपूर्वत्वस्य सत्वात् ॥

किंत्वाद्वैतचंद्रिकायां ज्ञाननिवर्त्यत्वलक्षणव्याख्यावसरे "अधिष्टनयाथात्म्यज्ञानेनाविद्यायां विलीनायां स्वयमेव तत्प्रयुक्तं निवर्तते" इति विवरण-'वाक्यव्याख्यायां अज्ञानस्य निवृत्तिः तत्प्रयुक्तस्य तु बाध एवेत्यभिहितं । एवं-अधिष्टानयाथात्म्यज्ञानेन स्वजन्यपटुतमसंस्कारसहिताधिष्टानापरोक्षज्ञानेन विलीनायां त्रैकालिकनिषेधप्रतियोगित्वेन गृह्यमाणायां स्वयमेव तन्नाशाधीननाशप्रतियोगितां विनैव निवर्तते बाधबुद्धिविषयीभूतं भवतीति विवरणे निवृत्तिपदमत्यंताभावपरमपि वार्तिकानुसारादित्यप्यभिहितं । वार्तिकं तु । "तत्त्वमस्यादिवाक्यार्थसम्यग्धीजन्ममात्रतः । अविद्यासहकार्येण नासीदस्ति भाविष्यतीति" । तथा - ज्ञाननिवर्त्यपदेन ज्ञानप्रयुक्तावस्थिति सामान्याभावकत्वस्य विवक्षितत्वादिति चोक्तं । तथाचोक्तपक्षद्वयेपि अज्ञानप्रयुक्तरजतादीनां नाशाभावप्राप्तेर्नाशघठितपरिष्करस्तत्परमसिद्धांताज्ञानमूले नादरणीय एवेति स्थितं ॥

यदपि । एतेन भाषाप्रबंधादिभिरात्मसाक्षात्कारस्य शाब्दापरोक्षमते जायमानत्वेन तेनापि मोक्षापत्या श्रवणादिनियमाद्दष्टपूर्वकत्वविशिष्टस्य तस्य विधेयत्वं युक्तमित्यपास्तं । प्रमात्वेन निश्चितज्ञानस्यैवाज्ञाननिवर्तकत्वेन भाषाप्रबंधादिजन्यज्ञानस्यातथात्वेन विशिष्टविधेरनपेक्षणात् । श्रवणादीनामसंभावनाविपरीतभावनानिवृत्तिद्वारा प्रमात्वनिश्चयजनकत्वे मानाभावात् । नचात्मसाक्षात्कारस्य शुक्तिप्रमासाधारण्येन कारणत्वे शुक्तिज्ञाने रजतस्येवात्मज्ञाने जगन्निवृत्यापत्या जीवन्मुक्ताभावप्रसंग इति वाच्यं । शंखभ्रमे पीतादेरिव जगद्भ्रमे प्रारब्धकर्मणां ज्ञानोत्तरमप्यज्ञाननिवृत्तिविरो-

वित्वादिति । तदप्ययुक्तं ॥ ज्ञानसुखादिसाक्षात्कारस्याविधेयत्वेपि सूक्ष्मार्थविषयकसाधनरूपज्ञानस्य विधेयताया आकारे समर्थितत्वात् । इष्टसाधनताया एव विधिरूपत्वात् । श्रवणादीनां प्रामाण्यनिश्चये एवोपयोगांगीकारे प्रामाण्यस्य ज्ञप्तौ स्वतस्त्वेन यत्र भाषाप्रबंधादिनैव कस्यचिदतिश्रद्धालोर्निश्चितप्रमात्मकमेव शाब्दापरोक्षज्ञानं जातं । तेनजीवन्मुक्तत्वापत्तेः । प्रमाण्यज्ञप्तौ नियमेनान्यापेक्षणे तस्य स्वतस्त्वानुपपत्तेः । नचोक्तभाषाप्रबंधाधीनज्ञानान्मुक्तिरिष्टैवेति वाच्यं । वैराग्यशमादीनां नैरर्थक्यापातात् । पित्तादीनां तदज्ञानोपादानकत्वाभावेन ज्ञानोत्तरंतत्सत्तासंभवेपि कर्मणां मूलाज्ञानोपादानकानां तन्नाशविरोधित्वे तदनिवृत्तेरेवापातात् । ग्रंथगौरवभयादेवोपरम्यते । ततश्च सूत्राक्षिप्तप्रयोजनार्थमध्यासोक्तिरयुक्तैव । उक्तदिशा सत्यस्यैव ज्ञाननिवर्त्यत्वात् । तस्मादत्रदीपिकाकारोक्तस्याभासत्वेनातिहेयत्वात् ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

यत्तु ॥ चंद्रिकायां स्वसिद्धांतानुगुणमित्यारभ्य अनुचितत्वादित्यंतेन ग्रंथेन चंद्रिकायां पूर्वपक्षे प्रमाणाभावेन जीवब्रह्मातिरिक्तेश्वराभावात् वेदांतानामखंडस्वात्ममात्रबोधकत्वात् तस्य चाहं धीसिद्धतया विषयत्वायोगादित्यादिना वेदांतानांचैतन्यमात्रबोधकत्वेप्युपादेयत्वं प्रामाण्यं चांगीकृत्य विचारशास्त्रस्य तादृशचैतन्यविषयकत्वे सिद्धार्थविषयकताप्राप्त्यासंदिग्धविषयाभावेनानारंभणीयत्वमप्रामाण्यं च स्यादिति वादः गुरुनतिविषयस्य शिष्यनत्यविषयत्ववादमनुकरोति । अपौरुषेयाणां वेदांतानामनुवादकत्वस्य सह्यत्वे पौरुषेयस्यविचारशास्त्रस्यापि सह्यत्वादित्यादि । तदेतन्मूर्खप्रलपनं चंद्रिकाप्रकाश एव "नहि वेदांतनां चैतन्यबोधकत्वेप्यनधिगतार्थत्वेन प्रामाण्यं विचारशास्त्रस्यचाधिगतार्थत्वेनाप्रामाण्यं च वदामः । किंतु वेदांतानां विचारशास्त्रस्यचाधिगतार्थत्वेन प्रेक्षावदनुपादेयत्वमेव" इत्यादिनाऽनुक्तोपालंभनत्वादिना निरस्तत्वात् ॥

तीयावकाश इति कुतस्तद्रीत्या पूर्वपक्षानौचित्य " मित्यालोच्य जीवस्य देहादिभिन्नत्वेन तन्मते विचार्यत्वसंभवेन शास्त्रानारंभासिद्धेरिति दूषणांतरमुक्तमिति ॥

यत्तु ॥ तदिदं सिद्धमित्यादिना आत्मनः स्वतःसिद्धत्वेपि प्रमाणतः सिद्ध्यभावाद्वेदांतानां तद्बोधकानां प्रामाण्यमित्यादि । तन्न ॥ आत्मनः स्वात्मानं प्रति स्वतःसिद्धत्वे शास्त्रे अधिकृतं तत्वतः स्वाभिन्नं जिज्ञासुं जीवं प्रत्यपि सिद्धत्वप्राप्त्यासिद्धार्थत्वेनानुपादेयत्वस्यावर्जनीयत्वात् । भवन्मते आत्मनः षडिंद्रियवेद्यत्वांगीकारात् - विशिष्टज्ञाने विशेष्यभाननियमात् - अध्यासाधिष्टानत्वेन सिद्धत्वाच्चानधिगतार्थत्वस्य दुर्लभत्वाच्च । शास्त्रवेद्यस्य शुद्धस्याहंप्रत्ययविषयतायाः समर्थितत्वाच्चाद्वैतरीत्या पूर्वपक्षः संगत एवेति ॥

यदपि ॥ जिज्ञासाधिकरणं हि प्रत्यक्षप्राबल्यमंगीकृत्य प्रवृत्तमित्यद्वैतिनां संप्रदायः - अतस्तन्मते प्रत्यक्षस्य दुर्बलत्वादिति प्रकाशोक्तिरयुक्तेत्यादि । तदपि दुरुक्तं ॥ भामत्यां पूर्वपक्षे प्रत्यक्षप्राबल्यावलंबनेपि सिद्धांते तस्य श्रुतिबाधितत्वेन दुर्बलत्वस्यैव "तदेव मुक्तक्रमेणाहंप्रत्यये पूतिकूष्मांडीकृते भगवतीश्रुतिरप्रत्यूहमहमनुभवप्रसंजितं कर्तृत्वादिकं निषेद्धुमर्हती"त्यादौ स्पष्टमुक्तत्वात् । त्वयैवाहंप्रत्ययस्य पूतिकूष्मांडवदप्रमाण्यस्वीकारेण खलु सिद्धांतप्रवृत्तिरिति भामतीग्रंथानुवादेन स्वव्याघाताच्चेति । अधिकमाकरे व्यक्तं ॥

यत्तु ॥ तथाचेत्यादिना वेदांतानामहमनुभवसिद्धात्मपरत्वे सिद्धार्थे प्रामाण्यायोगेन कर्मशेषस्तावकतयोपयोगप्राप्त्या अर्थवादविधयैव प्रामाण्यं वाच्यमिति निष्प्रत्यूहभेदवाक्यैर्भेदसत्यत्वसिद्धेर्नाद्वैतरीत्या पूर्वपक्षसंभव इत्यादि । तदपि नामंदबुद्धिगम्यं ॥ पूर्वपक्षिणा वेदांतानां सिद्धात्ममात्रपराणां प्रेक्षावदनुपादेयत्वस्यैवोक्तत्वेन कर्मशेषत्वानंगीकारात् । सिद्धा-

र्थत्वेपि याथार्थ्यरूपप्रामाण्याहानेश्च । वेदांता न विचार्या इति पूर्वपक्षिणा वेदांतवाक्यगतेरवाच्यत्वाच्च । अद्वैतमते द्वैताद्वैतपराणां सर्वेषां वेदांताभिमतोपनिषद्वाक्यानां चैतन्यमात्रपरत्वांगीकारेणानुवादकैर्भेदवाक्यैर्भेदसत्यत्वसिध्यसंभवात् । जपादिनाभ्युदयाद्युपयोगांगीकारेपि स्तावकतयोपयोगानंगीकाराच्च । सिद्धांते निरवकाशत्वादिनाप्रबलैर्भेदवाक्यैर्भेदसत्यतासिध्यभ्युपगमेपि पूर्वपक्षदशायां तद्विवक्षाभावाच्चेति । एतेन अद्वैतवाक्यनिचयः कर्मशेषो भवेत्तदेति खंडनकारवाक्यमसंबद्धप्रलपनमिति मंडनोक्तमयुक्तं - तस्य पूर्वपक्षानुपपन्नत्वसाधकत्वादिति दीपिकोक्तपरास्तं । भेदसत्यत्वापादनद्वारा पूर्वपक्षानुपपन्नत्वसाधनत्वासंभवप्रकारस्योपदर्शितत्वात् । अत एव त्वत्कल्पितस्य खंडनकारीयदुराशयस्यानुपपन्नत्वेनतद्वाक्यस्यासंबद्धप्रलापत्वं मंडनकारैरुक्तं युक्तमेव ॥

यदपि ॥ यत्तु चंद्रिकामंडने अस्मदीयपूर्वपक्षे ब्रह्मण एव विषयत्ववर्णनेनाद्वैतस्य सिद्धत्वासिद्धत्वाभ्यां दूषणाभिधानमज्ञानविजृंभितमित्युक्तमयुक्तं । अद्वैतमते जीवब्रह्माभेदस्यैव ब्रह्मशब्दार्थत्वात् । अत एवाद्वैतरीत्या अभेद एव ब्रह्मशब्दव्यावर्त्य इति प्रकाशोक्तिरुपपद्यत इत्यादि । तदपि न युक्तं ॥ अद्वैतमते वस्त्वपरिच्छेदवाचिब्रह्मशब्दस्य जीवब्रह्माभेदपरताया ग्रंथकृद्भिरेव बहुधा दूषितत्वात् । इहाप्यनुपदमेव दूषयिष्यमाणत्वाच्च । जीवब्रह्मविशेषिताभेदस्य सखंडत्वेन ब्रह्मपरवेदांतानामखंडार्थताभंगप्रसंगात् । केवलाभेदस्याविरोधित्वात् । विशिष्टशक्त्या लक्षणया वा ब्रह्मशब्दस्य शुद्धचैतन्यमात्रपरत्वसाधकलघुचंद्रिकादिविरोधात् । "तदेव ब्रह्म परमं कवीनां । अथ कस्मादुच्यते ब्रह्मे"त्यादि श्रुतिविरोधात् । "ब्रह्मशब्दः परे विष्णौ" इत्यादि स्मृतिविरोधाच्च । न ब्रह्मशब्दो जीवपराभेदपरः किंतु चिदचिद्विलक्षवस्तुवाचीति नाद्वैतस्य सिद्धत्वादिना दूषणाभिधानं युक्तमिति मंडनकारीयं तथोक्तेरज्ञानविजृंभितत्ववचनमुप-

पन्नमेत । स्वपक्षसाधकत्वभ्रांत्या प्रकाशसंमतिकथनं तु महामोहमूलमेव। "जिज्ञास्ये ब्रह्मशब्दे न गुणपूर्त्यभिधायिना । गुणाल्पत्वेनानुभूताज्जीवाद्भिन्नं प्रतीयते" इति चंद्रिकोक्तदिशा जीवव्यतिरिक्तेश्वराभावात्तस्य च स्वप्रकाशत्वादजिज्ञास्यतेत्यभेदमूलकनिर्विषयत्वाक्षेप एव ब्रह्मशब्दव्यावर्त्यः । मुमुक्षुमात्रस्यानधिकारित्वान्निरधिकारिकत्वं - कर्मादिनापि मोक्षसंभवान्निष्प्रयोजनत्वं च जिज्ञासाया इत्यादि पूर्वपक्षस्तु अथशब्दातःशब्दव्यावर्त्य इत्यभिप्रायकप्रकाशवाक्यस्य त्वदभिमताद्वैतार्थत्वासाधकत्वात् । अद्वैतस्य शास्त्रार्थताया आकरे दूषितत्वाच्चेति ॥

यत्तु । एतेन किंचेत्यारभ्य शास्त्रयोनित्वाधिकरणे संमतं हि पूर्वोत्तरपक्षयोरपि ब्रह्मणोनुमानविषयत्वं । न तु प्रत्यक्षवदनुमानमीश्वरे अप्रमाणमित्यादि । तदसारं ॥ "नेंद्रियाणि नानुमानमि"त्यादि श्रुत्या प्रत्यक्षस्येवानुमानस्यापि ब्रह्मणि प्रामाण्यनिषेधेन तत्संमतत्वोक्तेरयोगात् - नीरूपस्यापि ब्रह्मणः कालादिवत्प्रत्यक्षत्वस्याद्वैतचंद्रिकादौ भाषितत्वात् । वेदानुकूलानुमानस्येवोपनिषदर्थश्रवणादिवासितांतःकरणवेद्यत्वस्य "मनसैवेदमाप्तव्यमित्यादौ प्रमितत्वात् । अन्यथा "अशब्दमित्यादिश्रुत्यौपनिषदत्वस्याप्यभावप्रसंगात । सिद्धांते आगमोपजीव्यनुमानस्येव तदुपजीविप्रत्यक्षस्यापि ब्रह्मविषयकत्वसंभवेन तदप्रामाण्यांगीकारस्य निर्बीजत्वाच्चेति" ॥

यत्तु ॥ परैः शुद्धचितः स्वव्यवहारनिर्वाहकत्वांगीकारात - स्वव्यवहारहेतुत्वस्यैव स्वविषयत्वरूपत्वात् - तद्रीत्या पूर्वपक्ष इति प्रकाशोक्तिर्ब्रह्मणः प्रमाणांतरानपेक्षत्वमेव गमयतीति वेदांतानां प्रमांतरसिद्धार्थबोधकत्वेनानुवादकत्वपूर्वपक्षाननुकूलैवेत्यादि । तद्भ्रांतिमूलं ॥ स्वविषयप्रकाशत्वरूपस्वप्रकाशत्वस्य परसंमतत्वेन तद्रीत्यैव पूर्वपक्षसंभवप्रदर्शनपरप्रकाशवाक्यस्य प्रमाणांतरानपेक्षत्वमात्रगमकत्वोक्तेरज्ञानमूलत्वात् तस्य तुच्छादिसाधारण्येन तन्मात्रपर्यवसानस्यायुक्तत्वाच्च ॥ प्रमाणांतरसिद्धत्व इव स्वतःसिद्धत्वेपि

तद्विषयाणां वेदांतानां सिद्धार्थत्वापरिहारेणानुवादकत्वपूर्वपक्षानुकूलतया तद-नानुकूलत्वोक्तेरपि भ्रांतिमूलत्वाच्चेति । ततश्चात्र परप्रदर्शितस्य किंचिद्दूषणाभासस्याप्यसंबद्धताया उपदर्शितत्वादत्र विस्तारभयादुपरम्यत इत्युक्तो परमः परस्य ग्रंथकृदुक्तसद्दूषणपरिहारासामार्थ्यनिबंधन एव - न तु सत्यपि तत्सामर्थ्ये ग्रंथविस्तरभयाधीन इति सिद्धं ॥

यदपि ॥ एतेन सिद्धांतोपि व्याख्यातः । न हि विचारविधि-वाक्यगतब्रह्मादिशब्दानां "बृहत्वाद्बृंहणत्वाच्चात्मैवब्रह्मेति गीयते" इति भाम-त्युक्तरीत्या जीवपरत्वमंगीकृत्य कृतः पूर्वपक्षः ब्रह्मशब्दार्थमात्रपर्यालोचनया असंगतः । किंतु सिद्धांताभिमतार्थेब्रह्मशब्दस्य तात्पर्यलिंगान्येव वक्त-व्यानि - न्यायामृते अद्वैतोपक्रमादीनां गत्यंतरोक्तिर्न सिद्धांतसमर्थनार्थं । ब्रह्मनारायणादि शब्दानां प्राबल्योक्तिरुभयत्र तुल्या तेषामपि जीवपरत्वाश्र-यणात् । तस्मात् चंद्रिकोक्तौ पूर्वपक्षावनुपपन्नाविति । तदेतन्मंददर्शनं । पूर्वपक्षे अविमर्शदशायां ब्रह्मादिशब्दानामज्ञरूढ्यादिना जीवपरत्वाश्रयणेपि सिद्धांतदशायां सति विमर्शे "अथकस्मादुच्यते ब्रह्मेति बृंहतो ह्यस्मिन्गुणाः-तदेव ब्रह्म परमं कवीना" मित्यादिश्रुत्या - "ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते । असंपूर्णोः परे यस्मादुपचारेणवा भवे"दित्यादिस्मृत्या - सूत्रकृदुक्तजगत्कारणत्वमुक्तप्राप्यत्वादिर्लिंगैः - अवयवशक्त्या - सूत्रकार-विवक्षाज्ञापकेन "स विष्णुराहहि - तं ब्रह्मेत्याचक्षते" इति निरंतरसूत्रद्वयेन-"नारायणोसौ परमो विचिंत्य" इत्यादौ मोक्षजनकज्ञानविषयत्वादिर्लिंगेन-"ओमिति पुनः कस्य वक्ते"त्यादिश्रुत्या - "यो गुणैः सर्वतो हीनः सर्वदो-षविवर्जितः । हेयोपादेयरहितः स आत्मेत्यभिधीयते" इत्यादिस्मृत्या - "तत्र यः स आत्मा केवलो निर्गुणश्चेत्या"दिश्रुतिभिश्च समाकर्षाधिकरण-सिद्धमहायोगविद्वद्रूढ्यादिना ब्रह्म - नारायण ओमात्मादिशब्दानां विष्णु-मात्रपरत्वस्याकरे व्यवस्थापितत्वेन जीवपरत्वस्याशक्यशंकतया सिद्धांतसाध-

कानां पूर्वपक्षासांगत्यसंपादकताया अतिसुलभत्वात् । विष्णुरूपार्थ एव सूत्रकारविवक्षाज्ञापकलिंगानामुपदर्शितत्वात् । जीवग्रहणे बाधकानामप्युपदर्शितत्वाच्च । भामत्यां "बृहत्वाद्ब्रह्मणत्वाद्वात्मैव ब्रह्मेति गीयते । सचाकी टपतंगेभ्यो देहादिभ्यो विवेकेनाहमित्यसंदिग्धानुभवसिद्ध" इत्यादिना - स्वशरीरव्यापित्व - तत्परिणामयितृत्वादिना पूर्वपक्षे ब्रह्मशब्दस्य जीवपरत्वांगीकारेपिसिद्धांते परिच्छेदत्रयराहित्यवाचिना ब्रह्मशब्देन शुद्धचैतन्यमात्रबोधनवदेव तत्ववादिमतेपि जिज्ञास्ये श्रुते न ब्रह्मशब्देनावयवशक्त्या- "बृहंतो ह्यस्मिग्गुणा" इत्यादिश्रुत्याचान्यत्रासंभावितदेशकालगुणापरिच्छेदवद्वस्तुवाचिना जीवान्यविष्णवाख्यचिदचिद्विलक्षणवस्तुसिध्या सिद्धांतसाधकताया अक्षुण्णत्वात् । अद्वैतमते पूर्वपक्षे ब्रह्मशब्दस्य हेतूकरणाभावेन तत्र तत्प्राबल्यादिविचारस्यानवसारग्रस्तत्वात् । तत्ववादिमते सिद्धांते विषयसिद्धौ ब्रह्मशब्दादेर्हेतूकरणेन तत्प्राबल्यादिविचारस्यावश्यकत्वात् । विष्णुपरत्वइव जीवपरत्वे साधकाभावेन बाधकाभावेन च प्राबल्याद्ययोगाच्च । न्यायामृतादौ अद्वैतोपक्रमाद्यभिमतानामद्वैततात्पर्यग्राहकतानिरासात् - द्वैततात्पर्यज्ञापकोपक्रमादीनामुपदर्शितत्वाच्चात्र यावता विषयादिसिद्धिस्तावन्मात्रस्यैव वक्तव्यत्वात् । नारायणादिशब्दानां जीवपरत्वस्यायुक्तताया अकरे असकृदावेदितत्वाच्चेति । अधिकं तु प्रकाशप्रसरे व्यक्तं । तस्माच्चंद्रिकोक्तपूर्वोत्तरपक्षयोनिर्दोषतया महादरेण शिरसा सर्वमान्यत्वादत्र दीपिकाकारप्रयासो भ्रांत्यादिमूलो विफल एवेति ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

# ॥विवरणाद्युक्ताध्यायादिसंगतिभंगः॥

यत्तु ॥ अत्रायमाशयः ॥ समन्वयाद्यशेषविचारहेतुत्वादिति कल्पतरुवाक्यस्य समन्वयात्मकविचारहेतुत्वात् - तत्साधारण सर्वविचारार्थत्वाच्चेत्यर्थद्वये तात्पर्यं । अन्यथा समन्वयपदवैयर्थ्यात् । तथाचाशेषविचारहेतुत्वेन शास्त्रसंगतिः । समन्वयविचारहेतुत्वेन प्रथमाध्यायसंगतिश्च । समन्वयपदेन तद्विविशेषविवक्षया पादसंगतिश्च निरूपितैव । तथाच शास्त्रसंगत्यतिरिक्तस्य द्वितीयाध्यायादिव्यावृत्तस्य संगतिविशेषस्य पादसंगतेश्चानुक्तिरिति चंद्रिकाकृतां शंका कल्पतरुवाक्यार्थाज्ञानविजृंभितेत्यादि । तदेतन्मूर्खप्रलपितमनादेयमेव । कल्पतरुवाक्यस्य त्वत्कल्पितार्थद्वयतात्पर्यस्यायुक्तत्वात् । आद्यसूत्रस्य कर्मतंत्र देवतंत्र - कामतंत्रादिसाध्याशेषविचारहेतुत्वाभावेनानुपपन्नभाषित्वापत्तिवारकत्वेनान्यथासिद्धस्य समन्वयपदस्य भवदुक्तायुक्तार्थद्वयविवक्षाज्ञापकत्वासंभवेन तथा तात्पर्यकल्पकाभावात् । तत्कल्पनायामप्युक्तरीत्याशेषविचारहेतुत्वस्यात्र बाधितत्वात् । समन्वयस्योपक्रमादिर्लिंगनिर्णीतशक्तितात्पर्यान्यतरलक्षणसंबंधरूपस्य न्यायानुसंधानरूपविचारात्मकत्वोक्तेरज्ञानमूलत्वात् । समन्वयनिमित्तत्वस्येवाविरोधादिनिमित्तत्वस्यापि सत्वेनाध्यायचतुष्टयसंगतस्यास्य विशिष्यप्रथमाध्यायसंगतिरिति द्वितीयाध्यायादि व्यावर्तकप्रथमपदप्रयोगस्यानुचितत्वात् । समन्वयपदेन तद्विशेषविवक्षायां द्वितीयादिपादसंगतेरप्यवर्जनीयतया तत्रापि द्वितीयादिपादव्यावर्तकप्रथपदस्यायुक्तत्वाच्च । प्रथमातिक्रमे कारणाभावेन तत्रैव संघटनस्य युक्तत्वेपि सर्वाध्यायसंगतौ - सर्वपादसंगतौचाविशिष्टायां

शास्त्राध्यायपादसंगतय इत्येव वाच्ये प्रथमाध्यायप्रथमपादेति - प्रथमपद- प्रयोगोऽनुपपन्न इत्यत्र तात्पर्यात् । शास्त्रस्य पंचप्रघट्टिकारूपत्वेनाध्याया- द्यसंगतावपि शास्त्रमात्रसंगतेः श्रीमभ्यायसुधादावुक्तत्वाच्च । तथाच द्वितीयाध्यादिष्व्यावृत्तस्य प्रथमाध्यायमात्रानुवृत्तस्य - द्वितीयपादादिष्व्यावृत्त- स्य प्रथमपादमात्रानुवृत्तस्य च संगतिविशेषस्योक्त कल्पतरुवाक्यात्कथंचिदपि लाभासंभवात् - दीपिकाकारकुबुद्धिमात्रपरिकल्पितदुराशयस्यातिहेयत्वाच्च चंद्रि- कोक्तं दूषणं न कल्पतरुवाक्यार्थाज्ञाननिबंधनं । किंतु - दीपिकाकृतां तथाप्रलपनमेव स्वपरग्रंथतात्पर्याज्ञानविजृंभितमिति ॥

यदपि ॥ एतेन शास्त्रप्रत्यस्याधिकरणस्योपोद्धातसंगतेरेवोक्तप्राय- त्वेनाध्यायाद्यसंगतत्वमित्यपास्तं । अनुक्तोपालंभनत्वाच्चेति । तदसत् ॥ विवरणोक्तदूषणप्रस्तावे खंडनकारेणोपोद्धातरूपस्याधिकरणस्येत्युक्तत्वेन तस्या नुपपन्नताप्रदर्शनाय प्रवृत्तस्य प्रकाशप्रसरवाक्यस्याशयमविदुषः कल्पतरूक्त- दूषणावसरे तस्यानुक्तोपालंभनत्ववचनस्यासंबद्धप्रलापत्वादिति ॥

यत्तु ॥ एतेन चंद्रिकाकृतां विवरणखंडनमपि परास्तं । विवर- णे चंद्रिकानूदितरीत्या श्रोतव्यादिवाक्यानां स्वार्थे समन्वयस्य तद्द्वारेण विचार्यमाणवेदांतवाक्यानां ब्रह्मणि समन्वयस्य च निमित्तत्वादिति चशब्दघ- टितवाक्याभावेन चशब्दघटितपाटविशेषमर्थविशेषं च परिकल्प्योच्छ्रृं खलम- तखंडनस्यानादरणीयत्वादनुक्तोपालंभनमेवेति सिद्धमित्यादि । तदप्यसारं ॥ चंद्रिकोदूषणलंघनजंघालत्वाभावात् । यद्यप्यधुनातनमुद्रितपुस्तकेषु श्रोत- व्यादिवाक्यानां स्वार्थे समन्वयद्वारेण विचार्यमाणवेदांतवाक्यानामपि ब्रह्मणि समन्वयनिमित्तत्वात् समन्वये च संबंध इत्येव विवरणपाठो दृश्यते । तथापि प्राचीनतालापुस्तकस्थपाठानुसारेण चंद्रिकोक्तिरित्यदोषः । अस्तु- वैवमेव पाठः तथापि तद्वाक्यार्थविमर्शे ग्रंथकृदुक्तदूषणानि श्लिष्टान्येव । भवदुक्तपाठेपि अपिशब्दोद्वापएव कृतः चशब्दस्तु न त्यक्तः । ततश्चो-

दाहृतविवरणवाक्ये श्रोतव्यादिवाक्यानां स्वार्थे समन्वयनिमित्तत्वात् । वेदांतवाक्यानामपि तद्द्वारा ब्रह्मणि समन्वयनिमित्तत्वाच्चेति - न केवलं शास्त्रे - किंतु समन्वयाध्यायेचाद्यसूत्रसंगतिरिति च - चशब्दो व्याख्येयः । तथा च स्वार्थसमन्वयमात्रेणेत्यादिदूषणमनिवार्यमेव । स्वार्थसमन्वयद्वारकसमन्वयहेतुत्वस्येव तद्द्वारकाविरोधादिहेतुत्वस्यापि संभवेन द्वितीयाध्यायादिसंगतिप्रसंगस्य दुष्परिहरत्वात् । विचारकर्तव्यतायाः समन्वयनिमित्तत्वस्येवाविरोधादिनिमित्तत्वस्यापि प्रकाशप्रसर एवोपदर्शितत्वाच्च । स्मृत्यधिकरणादेरपि - यतोवेत्यादेः पाशुपतादिविरोधेन स्वार्थपरत्वाभावे शंकिते तद्विरोधनिरासेन विष्णुकर्तृत्वरूपस्वार्थे प्रामाण्यस्थापनद्वारा ब्रह्मणि प्रमाणभूतवेदांतसमन्वययुक्ततोपपादनेन स्वार्थसमन्वयद्वारक वेदांतसमन्वयहेतुत्वस्यावर्जनीयतयाप्राप्तत्वेनाद्याध्यायसंगत्यापातानिवारणात् । स्वयमेव चशब्दघटितं वाक्यमुदाहृत्य चशब्दाभावादित्युक्तेरुन्मत्तप्रलापत्वात् । समन्वयपदस्य तद्विशेषपरत्वे द्वितीयपादादिसंगतेरप्यवर्जनीयत्वात् । वेदांतसमन्वयहेतुस्वार्थसमन्वयपरत्वस्येवाविरोधहेतुस्वार्थसमन्वयपरत्वेन द्वितीयाध्यायादिसंगतेरप्यनिवार्यत्वाच्च । तथाच चशब्दघटितपाठस्य स्वयमेवानूदितत्वात् - विवरणवाक्यस्य सर्वपरीक्षकसंमतसंभावितार्थमवलंब्यैव दूषणाभिधानाच्च न किंचिदत्रोनुक्तोपालंभनमिति यत्किंचिदेतदिति ॥

यत्तु । जिज्ञासाधिकरणं हि श्रोतव्यादिवाक्यस्य प्रत्यगभिन्नब्रह्मसमन्वयद्वारकं वेदांतानां ब्रह्मणि समन्वयं प्रति निमित्तमेवेति नात्र संगत्यनन्वयः । एतेन आद्यसूत्रस्य विचारकर्तव्यताद्वारेणैव समन्वयहेतुत्वादुक्तविवरणवाक्ये साक्षान्निमित्तत्वविवक्षायां समन्वयाध्यायसंगतिरपि न स्यादिति प्रकाशप्रसरोक्तमपास्तं । अनुक्तोपालंभनत्वात् ॥ भवदीयपाठस्याप्रामाणिकत्वाच्चेति । तदसारं ॥ जिज्ञासासूत्रस्य ब्रह्मज्ञानायवेदांतविचारः कर्तव्य इति विवरणे व्याख्यातत्वेन श्रोतव्यादिविधिवाक्यस्याप्येतदर्थ-

कताया अवश्यवक्तव्यत्वात् । निर्णयनिर्णायकयोरैकार्थ्यनियमाच्च प्रत्यगभिन्ननिर्विशेषाखंडब्रह्मसमन्वयद्वारकसमन्वयहेतुत्वोक्तेरनुचितत्वात् । श्रोतव्यादिवाक्यस्य विचारकर्तव्यतारूपस्वार्थसमन्वयस्यैव व्युत्पादितत्वात् । अखंडे ब्रह्मणि समन्वयस्योत्तरत्र दूषयिष्यमणत्वाच्च । विवरणे ब्रह्मणि समन्वयनिमित्तत्वादिति व्यक्तमुक्ततया तत्र साक्षात्परंपराविकल्पस्य संभावितत्वेन कथाक्रमशिक्षणाय प्रवृत्तविकल्पतद्दूषणानामनुक्तोपालंभनत्ववचनस्य विवरणग्रंथांध्यनिमित्तत्वात् । भवदीयपाठानुसारेणैवानुपपत्तेरुक्तत्वाच्चेति ॥

यदपि । यत्तु चंद्रिकायामित्यादिना यथा प्रथमपादे स्पष्टब्रह्मलिंगविचार एव तथानंदमयाधिकरणे स्फुटीकरिष्याम इति न काप्यापत्तिः प्रसरोक्ता समुन्मिषतीत्यादि । तन्न । प्रतिज्ञामात्रेण प्रकाशप्रसरोक्तापादनापरिहारात् । स्पष्टब्रह्मलिंगविचारपरत्वाभावस्यैव तत्र समर्थयिष्यमाणत्वाच्चेति ॥

यत्तु । एतेन मंडनोक्तं परास्तं । श्रोतव्यादिवाक्येपि ह्यात्मपदस्य प्रत्यगभिन्नब्रह्मपरत्वप्रतिपादनात्तत्र जीवधर्मतया अप्रतीयमानविचार्यत्वादिरूपलिंगस्य स्पष्टब्रह्मलिंगताप्रयोजकत्वाच्चेति सर्वं सुस्थमिति । तदयुक्तं ॥ आत्मपदस्य "आदानादनकर्तृत्वादात्मेत्युक्तो जनार्दन" इत्यादिस्मृत्या - आदेयंमातीत्यादिव्युत्पत्या - शक्तिग्राहककोशादिना च स्वामित्वाद्यनेकार्थकत्वेपि प्रत्यगभिन्नार्थकताया अप्रामाणिकत्वात् । "स्वशब्दा" दिति सूत्रकारणैव प्रत्यगर्थपरत्वस्य निरस्तत्वाच्च । जीवस्यापि देहादिभिन्नत्वाणुत्वादिना विचार्यत्वसंभवेन विचार्यत्वस्य जीवधर्मतया अप्रतीयमानत्वाभावाच्च तादृशस्पष्टत्वपरिष्कारस्योत्तरत्र दूषयिष्यमाणत्वाच्चेति । तस्माद्दीपिकाकारोक्तस्यात्याभासत्वात् कल्पतरूक्तं विवरणोक्तंचाध्यायसंगत्यादिकमयुक्तमिति तत्र ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

# विवरणमते
# ❀ विचारलक्षणाविवक्षाभावभंगः ❀

यदपि ॥ यत्तु चंद्रिकायां जिज्ञासाया इत्यारभ्य वयं तु भामतीमत इव विवरणमतेपि जिज्ञासाशब्देन लक्षणया विचाराविवक्षामेवावगच्छामः । तथा च भामतीमतविवरणमतयोर्जिज्ञासाशब्दार्थविषये विशेस्यैवाभावात् प्रकाशप्रसरे विवरणव्याख्यानस्योद्भाष्यत्ववर्णनमनुक्तोपालंभनं । नहि विवरणमते जिज्ञासाशब्दो विचारलाक्षणिक इत्यत्र प्रमाणमस्ति । अन्यथा "एतेन जिज्ञासाशब्दवाच्ययेच्छया आक्षिप्तोविचारइह विधीयत" इति चंद्रिकाकृतां विवरणानुवादोऽनुपपन्नः स्यादित्यादि । तदेतद्विवरणग्रंथांध्यादिमूलमनादेयमेव । तथाहि ॥ विवरणे चतुर्थवर्णकोपसंहारप्रकरणे "भाष्यं व्याचष्टे । ब्रह्मजिज्ञासोपन्यासव्याजेनेति । जिज्ञासापदेनांतर्णीतं विचारमुपलक्ष्य तत्कर्तव्यतापरं सूत्रमित्युक्तं भवति । योजनांतरमाह । अथवेति ॥ जिज्ञासाकर्तव्येत्युक्ते ज्ञानमिष्यमाणं साध्यतया कर्तव्यमिति सूत्रार्थः संपद्यते । आतोऽर्थात्सिद्धविचारकर्तव्यतापरं सूत्र" मितीति । स्थलांतरेपि ॥ "स्वयमवयवार्थत्वाभावेप्यवयवार्थसंसर्गाविनाभावाल्लक्षणया प्रयोगप्रत्ययोपपत्तौ न शक्त्यंतरकल्पना । अनन्यथासिद्धकार्याभावादिति परिहरति । अंतर्णीतविचारार्थत्वादिति" चोक्तं । तथाच विवरणे लक्षणापक्षज्ञापकवाक्यानामुदाहृतत्वात् । चंद्रिकायां विवरणाभिप्रेतं मतांतरं निरस्तमित्युक्तत्वेन तदभिप्रेतपक्षांतरस्य प्रदर्शितत्वाच्च विवरणमते विचाराक्षेप एवेति दीपिकाकारोक्तिरयुक्तैवाज्ञानादिमूलेति संक्षेपः ॥

यत्तु ॥ चंद्रिकायां जिज्ञासाशब्दस्य लाक्षणिकत्वमयुक्तं । रूढ्यैव विचारबोधनसंभवादित्याद्युक्तमयुक्तं । जिज्ञासाशब्दस्य विचारार्थत्वानुशासनात् । बुभुत्सापद जिज्ञासापदयोः केवलज्ञानेच्छापरत्वविचारसाध्यज्ञानेच्छापरत्वाभ्यां विशेषात् । इच्छाप्रतीतिं विना जिज्ञासाशब्दार्थाबोधाच्चेत्यादि । तन्न ॥ जिज्ञासाशब्दस्य विचारे रूढत्वे अनन्यधीपूर्वकविचारप्रतीतिरूपस्य तत्र बुभुत्सादि पदत्यागेन नियमेन जिज्ञासापदप्रयोगादिरूपस्यचानन्यथासिद्धकार्यांतरस्य - तत्र नियमेन जिज्ञासापदप्रयोगान्यथानुपपत्तिरूपस्य - "जिज्ञासितं सुसंपन्न"मित्यादि भागवतादिप्रयोगरूपस्य च शक्त्यंतरकल्पकप्रमाणस्य चंद्रिकायामेवोक्तत्वेन रूढेः साधितत्वात् । बुभुत्सापदजिज्ञासापदयोः प्रकृत्याप्रत्ययेन वा विचाराबोधनेन तुल्यार्थकप्रकृतिप्रत्ययघटितत्वेनचार्थविशेषज्ञापकलेशस्याप्यभावेनार्थविशेषपरत्वमित्यत्र त्वद्वचनातिरिक्तप्रमाणाभावेन तस्याप्रामाणिकत्वात् । ज्ञानेच्छावाचिनो जिज्ञासाशब्दस्य विचारे रूढिमनंगीकृत्य लक्षणयैवप्रयोगाद्युपपादने मंटपादिशब्दानां मंडपानकर्तरि मुख्यवृत्तिः तत्संबंधाद्गृहे लक्षणा प्रवीणशब्दस्य प्रकृष्टवीणावति वृत्तिर्मुख्या - प्रकृष्टवीणावादनसमर्थगतप्रौढत्वरूपगुणयोगान्निपुणे गौणीवृत्तिः - कुशलशब्दस्यापि कुशच्छेत्तरि मुख्यवृत्तिः - कर्तृत्वरूपतद्घटकार्थसंबंधान्निपुणे लक्षणैव न रूढिः - वाजिशब्दस्यान्नवदर्थकस्य तद्घटकान्नेपि प्रयोगप्रसंगइत्याद्यतिप्रसंगरूपबाधकस्य चंद्रिकायामेवोक्तत्वात् । त्वन्मते ज्ञानसामान्येच्छाया अभावात् - अपरोक्षेच्छायां - च जिज्ञासाशब्दस्यावयवशक्त्यभावात् - समुदायशक्तेः कल्प्यत्वे अविशेषात् - विचारे समुदायशक्तिः अपरोक्षेच्छायां च लक्षणेत्येव किं न स्यात् । "स्वीकृतश्च त्वयापि विचारसाध्यज्ञानेच्छाजिज्ञासाशब्दात्प्रतीयते नोपदेशमात्रसाध्यज्ञानविषयेति वदता विचारप्रतीतेरिच्छाप्रतीतिपूर्वकत्वाभाव"इत्यादिना ग्रंथकृद्भिरेव शंडिति प्रत्ययनियतप्रयोगयोरन्यथानुपपत्तिवर्णनेन रूढेः

समर्थितत्वाच्चात्र दीपिकाकारोक्तं सर्वमपि चंद्रिकांध्यमूलमयुक्तमेवेत्यलं निर्दलपक्षप्रतिक्षेपेणेति ॥

यत्तु । नहि वयं मतद्वयेपि विचारकर्तव्यतापरतयोक्तसूत्रं व्याचक्ष्महे । "ब्रह्मजिज्ञासाकर्तव्ये"इति भाष्यपपि फलितार्थकथनपरं । जिज्ञासाक्षिप्तविचारस्याध्याहृतकर्तव्यपदार्थान्वय इति भामत्युक्तमिति चंद्रिकानुवादो ह्यप्रामाणिक एव । उक्तरीत्या अध्याहृतकर्तव्यपदस्य श्रौतजिज्ञासान्वयस्य तैरप्यप्रतिपादनेन पार्ष्टिकबोधविषयविचारेणाधिकारार्थाथशब्दान्वयस्यास्मदनिष्टत्वाभावेन श्रौतजिज्ञासाया एवानरभ्यत्वेन च सर्वेषामुक्तदोषाणामनुक्तोपालंभनत्वात् । सौर्यं चरुमित्यादौ लक्षणयैव निर्वाहात्तदुदाहरणमयुक्तं । कर्तव्यपदार्थेनान्वीयमानं जिज्ञासापदमपि न श्रौतं । किंतु पार्ष्टिकबोधोपयोगितयाकल्पितमनुषक्तं वा पदांतरमेवेत्यादि। तदेतन्महामोहमूलं । तथाहि ॥ विवरणे "अथातो ब्रह्मजिज्ञासे"ति सूत्रे अनुवादत्वपरिहाराय पुरुषप्रवृत्तिसिद्धये च कर्तव्यपदमाध्याहर्तव्यं । तत्र जिज्ञासाशब्देनांतर्णीतं विचारमुपलक्ष्यानुष्टानयोग्यतया साधनचतुष्टयसंपन्नस्य ब्रह्मज्ञानाय विचारः कर्तव्य इति सूत्रवाक्यस्य श्रौतोऽर्थः संपद्यते । अर्थादधिकारिविशेषणमोक्षसाधनं ब्रह्मज्ञानमिति सिध्यति । सन्निधानाच्च वेदांतवाक्यविचार इति श्रुत्यर्थाभ्यां साधनचतुष्टयसंपन्नस्य मोक्षसाधनब्रह्मज्ञानाय वेदांतवाक्यविचारः कर्तव्य इति सूत्रवाक्यस्य तात्पर्येण प्रतिपाद्योऽर्थोऽवगतः । तत्र भाष्यखंडस्य सूत्रेणार्थादुपात्तविषयप्रयोजने तात्पर्य"मिति । परिमलेपि "आर्थिकेचास्मिन्निति टीकायामेषितव्यमित्युक्त्या सूत्रे जिज्ञासा कर्तव्येति कर्तव्यपदाध्याहारः सूचितः । स तु जिज्ञासापदस्य कृतियोग्यविचारार्थकत्वाभिप्रयो न भवति । ब्रह्मजिज्ञासाया अनधिकार्यत्वादिति भाष्ये जिज्ञासाशब्दस्यानधिकार्यज्ञानेच्छापरत्वस्वीकारात् । किंत्वार्थिकविचारकर्तव्यत्वाभिप्रायक,' इति - कल्पतरौच "निर्ण-

यश्च विचारसाध्य इति तत्कर्तव्यताऽर्थाद्गम्यत" इति । भामत्यामपि "तस्माद्ब्रह्मजिज्ञासितव्य"मिति भाष्यव्याख्यायां "तदुपायोज्ञानमेषितव्यं । इच्छानिमित्तेन मीमांसायां प्रवर्त्यते" इति च भाष्य - भामती - कल्पतरु- परिमलादिषु जिज्ञासाक्षिप्तविचारकर्तव्यत्वस्य - पंचपादिकाविवरणयोरपि- "द्विविधोहि सूत्रार्थः श्रौतआर्थिकश्चेति । तत्र श्रौतार्थः प्रथमप्रतिपत्ति- गोचरत्वात्प्रथमः । आर्थिकस्तु अनंतरप्रतीतिविषयत्वाच्चरमः द्वावपि सूत्रतात्पर्यगोचरा"वित्यादिनाद्यसूत्रस्य जिज्ञासापदोपलक्षितविचारकर्तव्यता- परत्वस्य च व्यक्तमुक्तत्वात् । परिमले आर्थिकविचारस्य सौत्रजिज्ञासा- पदलब्धस्याध्याहृतकर्तव्यपदार्थे अन्वयमंगीकृत्य सूत्रार्थवर्णनात् । श्रौता- र्थस्य भामत्युक्तरीत्या पुरुषप्रवर्तकत्वाभावेनार्थिकार्थोपयोगितयैव तस्योक्त- त्वेनार्थिकार्थ एव मुख्यतात्पर्यात् । तत्रैवार्थिकार्थे आरंभार्थायशब्दान्व- स्य ग्रंथकृद्भिरापादितत्वात् । तदापादनस्य विचारः कर्तव्य इतिवत् - विचार आरभ्यते इत्यन्वयस्य तैरस्वीकारेणेष्टताया भवद्भिर्वक्तुमशक्यतया तस्येष्टत्वोक्तेरनुचितत्वात् । अन्यथा आनंतर्यार्थो आरंभार्थश्चेति भाष- णापत्तेः । सौत्रजिजिज्ञासापदेनाक्षिप्तो विचार इत्यस्य सर्वाद्वैतिसंमतत्वेन सूत्रे जिज्ञासापदांतरमध्याहृत्य तेन विचाराक्षेप इत्यत्र त्वद्वचनातिरिक्तप्रमा- णाभावेनातिहेयत्वात् । सूत्रपदाधीनश्रौतार्थोत्तरभाव्यार्थिकार्थबोधस्य सूत्रा- नधीनमानसादिरूपपार्ष्टिकबोधत्वादिकल्पनाया निर्मूलत्वेनोपेक्षणीयत्वाच्च । व्यर्थो भामतीकाराणां जिज्ञासालाक्षणिकतासमर्थनायास इति चंद्रिकाकृतां कल्पनाप्यनवसरैवेति दीपिकाकारवचनंत्वनुक्तोपालंभनमेव । चंद्रिकायां कुत्रापि तादृशकल्पनासूचनादर्शनात् ॥

यदपि ॥ सौर्यं चरुं निर्वपेदित्यत्र लक्षणया निर्वाह इत्यादि । तद्वार्तिककारमतानुरोधि शंकानिवर्तक भामतीग्रंथांध्यनिमित्तं । भामत्यां "आक्षिप्तस्य श्रुतेनान्वये न सौर्यवाक्यमुदाहरणं । तत्राक्षिप्तस्य यागस्य

भावनाविशेषणत्वेनाक्षिप्तविधिविधेयत्वावश्यंभावात् । श्रुतविध्यन्वयानभ्युपगमादिति वार्तिककारमतानुवर्तिनां पंथा "इत्यादिना कृतस्य चोद्यस्य" उच्यते । श्रुतस्यैवविधेर्विशेषणेष्ववश्यं व्यापारो वाच्यः । तेषामाक्षिप्तविधिविधेयत्वे आक्षेपेण विशेषणविधौ सिद्धे विशिष्टविधिसिद्धिः । तत्सिद्धौ च विशेषणविध्याक्षेपसिद्धिरित्यन्योन्याश्रयापत्ति"रित्युक्तत्वेन तद्रीत्यास्योदाहरणस्य युक्तत्वात् । "यदाग्नेयोऽष्टाकपालो भवतीत्यादौ भवनाक्षिप्तभावनया च विधिप्रत्ययान्वयदर्शनाच्चेत्यादिनोदाहरणांतराणामप्युपदर्शितत्वाच्च । एवं नहि कुत्राप्याक्षिप्तस्य श्रुतपदार्थेनान्वयः संभवतीति तदीयोक्तिरपि रिक्तैव । साहित्यदर्पणटीकायां" शाब्दीह्याकांक्षाशब्देनैव पूर्यत इति शब्दाध्याहारवादिनां मतमाश्रित्योक्तं । अर्थाध्याहारवादिनां गुरूणांमतेत्वविनाभावलब्धस्याप्यार्थिकार्थस्य शाब्दबोधविषयत्वांगीकारात् । अन्यथा उपाधिशक्तिवादिनां मते व्यक्तेः शाब्दबोधविषयत्वं न स्यात् । न च लक्षणयैव तदुपस्थितिरिति वाच्यं । रूढिप्रयोजनाभावात् तत्र लक्षणासंभवादि"त्युक्तत्वात् । काव्यप्रकाशव्याख्यायामपि "गौरनुबंध्य" इत्यत्र गुरुमते द्वारमित्यादावर्थाध्याहारेण तस्य श्रुतशब्दाक्षिप्तस्य श्रुतपदार्थेनान्वयस्योपपादितत्वात् । व्यक्तौ लक्षणापक्षं-सर्वत्रापि शाब्दीह्याकांक्षाशब्देनैव पूर्यत इति पक्षं चाभ्युपगम्याक्षिप्तार्थस्यापि वृत्तिनिरपेक्षशब्दाधीनप्रतीतिविषयत्वमूरीकृत्याक्षिप्तस्य श्रुतपदार्थेनान्वयस्य महता प्रबंधेन समर्थितत्वाच्च । प्रकृतेपि परिमलएवोक्तार्थस्यव्यक्तमुक्तत्वाच्चेति । जिज्ञासापदमपि कर्तव्यपदर्थेनान्वीयमानं न श्रौतं किंतु कल्पितमिति वचनं तु ज्ञानेच्छापि संदिग्धेऽर्थे निर्णयाय भवतीति श्रौतजिज्ञासाशब्देन विचाराक्षेपप्रदर्शनपरकल्पतरु विवरणादिग्रंथविरुद्धत्वादेवानादेयमतोनास्माभिस्तन्निराकरणाय पुनः प्रयतितव्यमित्युपरम्यते ॥

यत्तु ॥ मामत्यागमित्यारभ्य अयमाशयः प्रसक्तन्यूनतापरिहारार्थं ससाधनफलसंग्रहो ब्रह्मजिज्ञासापदेन कृतः न श्रवणादिमात्रं विवक्षितं । अत्रचात्मदर्शनस्य फलत्वं काम्यत्वं च तस्य सकलदुःखध्वंसरूपत्वेन - सुखव्याप्यत्वेन - सुखाभिव्यंजकत्वेनवेति विवक्षाहीत्यादि । अत्रोच्यते ॥ तत्र तावदात्मज्ञानस्य ध्वंसरूपत्वोक्तिरयुक्ता । तथाहि ॥ चरमसाक्षात्कारस्य स्वेतरसकलदृश्यनाशरूपत्वं - द्वितीयक्षणावच्छेदेन स्वनाशकत्वं चांगीकृत्य स्वस्य स्वप्रतियोगिकध्वंसत्वं स्वीक्रियते न वा । आद्ये प्रतियोगिध्वंसौ मिलिताविदानीं स्व इति कस्यापि प्रत्ययाभावात् - ध्वंसप्रतियोगिनोरेककालवृत्तित्वायोगेन स्वात्मकप्रतियोग्यधिकरणकालस्य स्वात्मकध्वंसवत्वांगीकारे स्वव्याहतिः । द्वितीये तस्य ध्वंसांतरानंगीकारे आत्मन्यनुवृत्तिप्रसंगेन नित्यत्वापातः । ध्वंसांतरांगीकारेतस्योच्छेदाभावे-पुनर्दृश्यसामान्योच्छेदरूपमोक्षासिद्धिः । उच्छेदे तस्याप्येवमित्यनवस्था। ज्ञात्वेत्यादिश्रुतिभिर्ज्ञानोत्तरमेव दृश्यनाशावगमेनात्मदर्शनस्यनाशरूपताया अप्रत्यायनात्तथाकल्पनमप्रामाणिकमेव । क्वचित् त्वाप्रत्ययस्य समानकालीनार्थत्वदर्शनेन प्रकृतेपि तत्समकालिकत्वस्य मोचनशब्दितनाशे बोधनेन तत्वज्ञानतादृशनाशयोरैक्यं प्रतीयते । समानकालीनयोरेकस्य वा रूपभेदेन प्रयोज्यप्रयोजकभावः स्वीक्रियत इत्येतच्छ्रुतिमातुः स्वमनोरथात्पये कचाकर्षणमात्रं । "कर्मणा ज्ञानमातनोति - ज्ञानेनामृतीभवती"त्येवंजातीयकश्रुतिपुराणादेर्बहुलमुपलंभेन कार्यकारणभावस्यैव प्रतीत्या तदभेदाप्रत्ययात् । "विद्वान्नामरूपाद्विमुक्त"इत्यादौ उद्देश्यतावच्छेदकविधेयभावमहिम्ना ज्ञानप्रयोज्यत्वमेव नाशे भासत इत्यन्यत्रोक्तत्वात् । "नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्य"मित्यनेन नामरूपविमोचनोत्तरं पुरुषप्राप्तिरूपफलश्रवणात्तस्यैव सकलदृश्यनाशरूपत्वे तदुत्तरक्रियाश्रवणानुपपत्तेश्चेति । एवं सुखव्याप्यत्वेन पुरुषार्थत्ववर्णनमप्ययुक्तं । दुःखस्यापि सुखव्याप्य-

त्वेन पुरुषार्थत्वप्रसंगरत् । सुखव्यंजकत्वमपि सुखरूपताव्यंजकत्वंचेदपुरुषार्थ-त्वमेव । धनित्वस्येव धनरूपत्वस्याकाम्यमानत्वात् । सुखवत्व-व्यंजकत्वं तु त्वन्मते न संभवति । आत्मनः सुखरूपत्वेपि सुखित्वा-नंगीकारात् । अधिकमाकरे व्यक्तं ॥

यद्यपि ॥ भवतीत्याध्याहारे सूत्रस्यानुवादत्वप्रसंग इति । तत्रे दंवक्तव्यं श्रुतिसिद्धार्थबोधकत्वेनानुवादकत्वं सूत्राणां सर्वसंमतमित्यादि । तच्चंद्रिका विवरणाद्यज्ञाननिबंधनं । तथाहि । विवणे "तस्मात्कर्तृव्या-पारस्य करणव्यापारव्यवधानेनेव विचारव्यपारस्य प्रमाणप्रमेयसंभावनावगम-द्वारेण ब्रह्मावगम एवोद्देश्य इति ब्रह्मकर्मता न विरुध्यते । शब्दात्तत्व-ज्ञाने जननीये शक्तितात्पर्याज्ञानेन तत्वज्ञानानुत्पत्तौ विचारशास्त्रेण तादृश-प्रतिबंधनिवृत्तिः शक्तितात्पर्यावगमद्वारा विचाराद्भवतीति प्रतिबंधनिरासिनो-ष्युपचारेण ब्रह्मनिर्णयहेतुत्वात् विचास्य ब्रह्मविषयतेति विधिवाक्यार्थनिर्णा-यकन्यायग्रथनात्मकानिसूत्राणी"त्यादिप्रबंधेन सूत्राणां श्रौतस्य प्रयोजनादे-र्न्यायेनोपपादनार्थत्वामिति स्पष्टमवगमेन श्रुत्यर्थनिर्णायकन्यायग्रथना-त्मकविचारशास्त्रस्य श्रुतिज्ञापितमात्रज्ञापकत्वोक्तेर्विवरणादिग्रंथांध्यनिबंधन-त्वात् । ईक्षति सूत्रार्थतया त्वदभ्युपगतस्य प्रधानकारणतानिषेधादेः श्रुतावप्रतीयमानत्वेन श्रुत्यर्थताया वक्तुमशक्यत्वाच्च विधायकानां सूत्राणा-मनुवादकत्वेन प्रवृत्याद्यनुपयुक्ततयानुपादेयत्वपर्यवसाय्यनुवादकत्वांगीकारो न युक्त इति । या तु सूत्राणामनवधाननिवृत्त्यर्थत्वोक्तिः सापि रिक्तैव । अनवधाननिवृत्यभावे श्रवणादिरूपविचारेपि प्रवृत्यनुपपत्याप्रमाणादिसंभावना-विषयत्व - शक्तितात्पर्याज्ञाननिवृत्तिप्रयोजकशक्तितात्पर्यावधारणादीनां सूत्र-प्रयोजनत्वोपपादकविवरणादिविरोधात् । समन्वयसूत्रे अनवधाननिवृत्तेः साक्षात्सूत्रप्रयोजनतायास्त्वदीयभाष्ये अनुक्तत्वाच्च ॥

यत्तु । नहि भामतीकारा भवंत इवास्वतंत्रप्रज्ञाश्चंचलस्वभावा

इत्यादि । तन्न ॥ विवरणे तद्विजिज्ञासस्वेत्यादेर्नियमविधित्वमंगीकृतमेव । भामतीमतेपि तस्य विधिरूपताया निरवकाशदृढतरप्रमाणैः समर्थने वाचस्पतिना ततो महतापि विधित्वस्यश्रोतव्यादिवाक्यस्याकामेनाप्यंगीकार्यतया दुराग्रहमात्रेणानंगीकारे मूर्खत्वापत्त्या प्राणिकं पक्षमनंगीकृत्य निर्लज्जतया बाधितपक्षे अचंचलस्य भावत्वस्य मूर्खताव्यंजकतयोत्कर्षानापादकत्वेन वाचस्पतेः प्रेक्षावत्वमभिलषता प्रमितार्थानपलापस्यैव वक्तव्यतया भामतीमतेप्युक्तार्थव्यवस्थापनमप्रत्यूहमेवेति ॥

यदपि ॥ मंडने मंडपादिशब्दानां मंडपानकर्त्रादावपि प्रयोगापत्त्या जिज्ञासापदेन नावयवार्थविवक्षेत्युक्तमकिंचित्करं । प्रोक्षण्यधिकरणे योगाद्रूढिर्बलीयसीति न्यायस्य कोशाद्यनुशासितरथकारादिशब्दविषयत्वव्यवस्थापनेन तन्न्यायेनैव मंडपादिशब्दानामन्यत्र प्रयोगादिवारणसंभवादित्यादि । तदिदमुक्तार्थविस्मरणनिमित्तं नोपादेयं । मंडपादिशब्दानामिव जिज्ञासाशब्दस्यापि रूढेः साधितत्वात् । जिज्ञासापदेनावयवार्थविवक्षायास्त्वयाप्यस्वीकारात् । विचारस्य ज्ञानेच्छानिमित्तकत्वेपि ज्ञानेच्छाया विचारनिमित्तकत्वायोगाद्विचारं विनेच्छाऽसंभवोक्तिरप्ययुक्तैवेति । युक्तमेव मंडनोक्तमतिप्रसंगापादानमिति ।

यत्तु ॥ एतेन कथं च विचारं विनेच्छाया अनुपपत्तिः । नहि कारणस्य कार्यं विनानुपपत्तिः नचेच्छाविचारसामग्रीति मंडनोक्तमपास्तं । नहि वयमिच्छां विचारसमग्रीं ब्रूमः किंतु सूत्रिता साक्षात्कारेच्छा तस्य फलत्वं गमयति फलं च साधनं विचारमाक्षिपतीत्यादि । तदिदं बालभाषणं । कारणैकदेशस्य कार्याक्षेपकत्वायोगेन न ज्ञानेच्छाया विचाराक्षेपकत्वमिति मंडनोक्तदूषणापरिहारात् । फलीभूतज्ञानस्याक्षेपकत्वं तु पूर्वपक्षिणा इच्छैव नोदेतीत्याक्षिप्तत्वेनेच्छाया एवासंभवे तया ज्ञानस्य फलत्वावगतेः कथमप्यसंभव इत्यनुपदमेव निरनिरशिष्यते । निराकृतं च

ग्रंथकृद्भिरेवेति नात्र पराक्रांतं मंडनकारैरिति ॥

यदपि ॥ नहि कारणस्य कार्यं विनाऽनुपपत्तिरित्यत्र यदि विचारः कारणं इच्छाफलमिति विवक्षितं तदा असंभव इत्यादि दूषणाभासव्युत्पादनं । तदज्ञानमूलं ॥ नहीच्छाविचारसामग्रीति मंडनोक्त्या विचारः फलमिति स्पष्टमवगतेः । ततश्चानुक्तोपालंभनमेवेति ॥

यत्तु ॥ सूत्रेणेच्छाया एव बोधनेपि विषयादिसंभवः तथा भामत्यादौ व्यक्तं । ब्रह्मज्ञानेच्छासूत्रणेन विषयप्रयोजने सूच्येते इत्यादि । तदसारं ॥ परमते ज्ञानेच्छाया एवानुपपत्या विषयादिसूचनप्रकारस्यानुपदमेव निरसिष्यमाणत्वादिति ॥

यदपि । एतेनेत्यारभ्य तथा च पार्ष्टिकबोधविषयस्यापि विचारस्य श्रौताथशब्दार्थेनानन्वयात् जिज्ञासाशब्देन शक्त्या लक्षणया वा विचाराग्रहणं न दुष्टमित्यादि । तदप्युक्तार्थविस्मरणविजृंभितं । त्वयैव पूर्वं आर्थिकविचारे अथशब्दार्थारभ्यत्वान्वयस्येष्टत्वादित्युक्तत्वेन तत्र तदन्वयासंभववचनस्य स्वव्याहतत्वात् । रूढ्याविचारग्रहणस्य साधितत्वात् । विवरणे लक्षणया तद्ग्रहणस्योपदर्शितत्वात् ॥ आक्षिप्तार्थे श्रुतार्थान्वयस्य समर्थितत्वाच्चेति ॥

यत्तु ॥ आर्थिकार्थापेक्षया लाक्षणिकार्थस्य मुख्यत्वात् विचारलाक्षणिकत्वोक्त्यसंभवादित्युक्तिरसंगतेति यत्प्रकाशप्रसरे उक्तं । तदिदं प्राथमिकबोधेविचारविषयताया अनंगीकारादनवसरमेवेति विस्तरभयादुपरम्यते इति । तदप्यज्ञानमूलं ॥ विवरणमते प्राथमिकबोधएव लक्षणया विचारविषयताया अंगीकृतत्वात् । आर्थिकार्थापेक्षया लाक्षणिकार्थस्य शाब्दत्वेन मुख्यत्वात् - रूढ्या विचारस्य प्राथमिकबोधविषयताया असकृदावेदितत्वाच्चेति । तस्मान्मंडनोपरि दीपिकाकारोक्तदूषणानामाभासत्वात्त्वदीयप्रयासोव्यर्थ एवेति ग्रंथकृदुक्तं दूषणमत्र सुस्थमिति सिद्धं ॥

यत्तु ॥ मंगलस्येत्यारभ्य एतेन चंद्रिकायां "अपदार्थत्वहेतौ समन्वयाभावे भामत्युक्तापदार्थत्वस्य हेतुत्वे अन्योन्याश्रय इत्युक्तिर्भामत्याद्यज्ञानविजृंभिता । कार्यत्वस्यैव हेतुत्वोक्ते"रित्यादि । तदेतन्मूर्खप्रलपनमनादेयमेव । तथाहि ॥ भाष्ये ॥ "मंगलस्य च वाक्यार्थे समन्वयाभावा"दित्युक्तं । भामत्यां तु ॥ "पदार्थ एव हि वाक्यार्थे समन्वीयते । स च वाच्यो लक्ष्यो वा ॥ न चेहमंगलमथशब्दवाच्यं लक्ष्यं वा । किंतु मृदंगशंखध्वनिवदथशब्दश्रवणमात्रकार्यः । न च कार्यज्ञाप्ययोर्वाक्यार्थे समन्वयः शाब्दव्यवहारे दृष्टः । नचेहाथशब्दस्यानंतर्यार्थस्य सतो न श्रवणमात्रेण मंगलार्थते"त्युक्तं । ततश्च वन्हिमानेव धूमवान् - दृष्ट्वैव मुच्यते - ब्रह्मज्ञानवानेव मोक्षवानित्यादौ एवकारस्यस्वसमभिव्याहृतपदार्थतावच्छेदके व्यापकत्वप्रयोजकत्वान्यतरबोधकताया व्युत्पत्तिसिद्धत्वेनोद्देश्यतावच्छेदकविधेययोः प्रयोज्यप्रयोजकभावस्यौत्सर्गिकतया "व्यभिचार्यपवादेनमानमेव भविष्यतीति" न्यायेनासत्यपवादे उत्सर्गस्य साधकत्वात् भामत्यासुक्तवाक्यार्थपर्यालोचनया पदार्थत्वं वाक्यार्थसमन्वयं प्रति व्यापकं प्रयोजकं वेति प्रतीयत इत्यकामेनाप्यंगीकर्तव्यं । द्वेधापि प्रयोजकाभावविषयाव्यापकाभावविषया वा पदार्थत्वाभावस्य समन्वयाभावहेतुता दुर्निवारैवापन्नेति दुष्परिहर एवान्योन्याश्रयः । कार्यत्वमात्रस्यवाक्यार्थसमन्वयाभावहेतुत्वतात्पर्येचाथशब्दकार्यत्वाभावव्युत्पादनमसंगतमेवभवेत् । किंत्वित्यादि भामतीग्रंथस्य न मंगलार्थताथशब्दस्येति वाक्यस्य चान्यथा अस्वारस्य शंकायाः को निवारयिता ॥

यदपि ॥ एवं च भाष्याभिप्रायोप्ययमेव भामतीसंमतः मंगलं अथशब्दकार्यं वाक्यार्थान्वयायोग्यत्वादिति विवक्ष्यते इति । अत्रचान्योन्याश्रयगंधोपि ने ति । तत्स्वव्याहतं ॥ स्वेनैवाथशब्दकार्यत्वेन वाक्यार्थसमन्वयाभावं प्रसाध्य पुनः समन्वयाभावेन मगलस्याथशब्दकार्यत्वे

साध्यमाने अन्योन्याश्रयस्यातिस्फुटत्वात् । ततश्च संपूर्णान्योन्याश्रयस्यैव सत्वात्तद्वंधाभाववचनं देवानां प्रियस्य युक्तमेवेति दिक् ॥

यदत्रोक्तं ॥ पदार्थत्वस्य वाक्यार्थसमन्वयनिमित्तत्वकल्पनं न प्रामाणिकं । घट इत्येकपदमात्रप्रयोज्यस्मृतिविषयस्य घटरूपपदार्थस्य वाक्यार्थे समन्वयो न दृष्ट इति । तद्बालभाषणं ॥ तेनैव तत्पदघटितवाक्यार्थेतत्पदार्थ एवान्वेतीत्युक्तत्वेन पदार्थत्वमित्यनेन निराकांक्षप्रतिपत्तिजनकवाक्यघटकपदस्यैव विवक्षितत्वेन तत्रोक्तदोषाप्रसरात् । निराकांक्षकेवलपदस्याविवक्षणादिति ॥

यत्तु ॥ एतेन पदार्थत्वाभावः समन्वयाभावनिमित्तमिति द्वितीयकल्पनमपि परस्तं । अपदार्थानामपि "पश्यतश्श्वेतिमारूप"मित्यादौ वाक्यार्थे समन्वयदर्शनादित्यादि ॥ तादपिबालभाषणं ॥ पदैरभिहिताः पदार्था एवाकांक्षादिशालिनोन्वयबोधंजनयंतीति खल्वभिहितान्वयादिनां पंथाः । तथैव लघुचंद्रिकादावखंडार्थनिष्टत्वप्रकरणे निरूपितत्वात् । ततश्चाभिहितान्वयवादिनां मते अपदार्थानां वाक्यार्थसमन्वयोक्तिर्दीपिकाकारस्य तन्मतस्वरूपाज्ञानविजृंभितैव । वस्तुतस्तु ॥ पश्यतः श्वेतिमारूपमित्यादौ धावन्श्वेतो हि अश्वो भवितुमर्हति । हेषाशब्दादिमत्वादित्यानुमानिकबोधस्यैव जायमानत्वेन शाब्दव्यवहारे तदुदाहरणमेवायुक्तमिति ॥

यदपि ॥ पदार्थत्वस्येत्यारभ्य पूर्वोक्तरीत्या भामत्यां समन्वयाभावे अपदार्थत्वहेतुविषयनिरूपणार्थं कल्प्यस्य प्रथमार्थस्य ग्रहणे दोषवर्णनेनैव द्वितीयार्थानुन्मेषणेनान्योन्याश्रयनिरासाच्चंद्रिकोक्तमनुक्तोपालंभनमेवेत्यलं दुर्बलविशासनेनेति शिवमिति । दुरुक्तं तत् ॥ पदार्थ एव हीत्यत्र पदार्थशब्देन तत्पदघटितवाक्ये इत्यादि परोक्तिमनुरुध्याप्यन्यत्र निराकांक्षपदसमुदायरूपवाक्यघटकपदार्थस्य विवक्षयोक्तदूषणाभासनिरसनादेव द्वितीयार्थोन्मेषणसंभवस्योपपादितत्वात् । अन्योन्याश्रयस्य परप्रदर्शितपरिहाराभासनिरा-

सपूर्वकं समर्थितत्वाच्च । ततश्च सति चैवं ग्रंथसंदर्भे वाक्यार्थविमर्शे च चंद्रिकाकृतां भामतीपूर्वापरसंदर्भानालोचनेनेदं स्वांतेवासिव्यामोहनं स्वयं नष्टः परान्नाशयतीति न्यायमेवानुकरोतीति दीपिकाकारवचनमुन्मादमूलं न सचेतसो युक्तमिति । तस्माद्दीपिकाकारोक्तस्यात्यंताभासत्वाद्ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

यदपि ॥ यत्तु मंगलस्य च वाक्यार्थे इत्यारभ्य - "नापि सामानाधिकरण्येन जिज्ञासा मंगलमित्यर्थवादत्वप्रसंगा"दिति विवरणवाक्यमसंगतं । भवत्पक्षे ईक्षतेर्नाशब्दमितिवन्मंगलत्वाज्जिज्ञासाकर्तव्येति हेतुत्वेनान्वयसंभवादिति चंद्रिकाकारा विवेचयंति । अत्र च ईक्षतेरित्यादौ साध्यसमर्पकपदसत्ववदत्र साध्यसमर्पकपदाभावात् हेतुत्वेनान्वयोऽसंगत एव । मंगलपदस्य श्रेयः परत्वेन जिज्ञासाया मंगलहेतुत्वेपि मंगलरूपत्वाभावात् । अत एव भामत्यां मंगलहेतुत्वादिति विवृतं - तदीयविवरणस्यानादरणीयत्वे भवदीय विवरणस्याप्यनादेयत्वं स्यात् । विवरणे जिज्ञासामंगलमित्यत्र मंगलपदं मंगलकरे लाक्षणिकमेव । "मंगलानांच मंगलमित्यादौ" एतस्यैवानंदस्यान्यानिभूतानिमात्रासुपजीवंतीति "श्रुतिसिद्धं भगवतो निरतिशयसुखरूपत्वंगमयतीति न किंचिदनुपपन्नमद्वैतमते इत्यादि । तदप्यज्ञानविजृंभितं ॥ विवरणे "विचारमुपलक्ष्य शास्त्रे पुरुषप्रवृत्तिसिद्धये कर्तव्येति पदमध्याहार्य"मित्यादिना ग्रंथेन ब्रह्मज्ञानाय वेदांतविचारः कर्तव्य इति सूत्रार्थस्य व्यक्तमुक्तत्वेन तन्मते जिज्ञासाकर्तव्येति साध्यसमर्पकशब्दस्य जागरूकत्वेन मंगलमित्यस्य सधूम इति बद्धेतुगर्भत्वस्य सूपपन्नत्वात् । आर्थिकार्थस्य श्रौतपदार्थान्वयस्य समर्थितत्वेन भामतीमतेपि सूत्रस्यार्थिकार्थविवक्षायां विचारः कर्तव्य इति साध्यसमर्पकशब्दसमभिव्याहारस्यावर्जनीयत्वाच्च । श्रुतस्येवाध्याहृतस्यापि सूत्रावयवताया अन्यत्र व्युत्पादितत्वात् । पार्ष्टिकबोधादित्वदीयकुकल्पनाया निरस्तत्वाच्चेति । शब्दकल्पद्रुमे "मंगिन्य

लच् - मंगलं - भूमिसुते - प्रशस्ते - अभीष्टार्थसिद्धौ - तद्धेतुगोरोचनादा-वपि । "लोकेस्मिन्मंगलान्यष्टौ ब्राह्मणो गौर्हुताशनः । हिरण्यं सर्पि-रादित्यः आपो राजा तथाष्टमः । प्रशस्ताचरणं नित्यमप्रशस्तविसर्ज-न"मिति । वेदेपि "यद्‌ु किंचेमाः शुभमाचरंति तेशुभमनुभूय पुनराव-र्तंते" इत्यादौ च निरुपाधिकेष्टेष्टसाधनयोर्मंगलशब्दशुभशब्दयोः प्रयोगात् । मासिकादिभेदभिन्नत्रिविधमंगलस्यापि सर्वतांत्रिकैरिष्टसाधनपरत्वाभ्युपगमाच्च कोशे शुभशब्दस्यापि निरुपाधिकेष्टेष्टसाधनादिरूपश्रेयःपरत्वात् भामत्यादौ निरुपाधिकेष्टविवक्षया मंगलहेतुत्वादित्युक्तावपि विवरणे इष्टसाधनविवक्षया जिज्ञासामंगलमितिव्यवहारसंभवेन तत्र लक्षणाकल्पनाया अन्याय्यत्वात् । अन्यथा मंगलमाचरति ॥ मंगलमनुष्टेयं - मंगलं सफलं - समाप्त्यादिफल-कमित्यादिस्वारसिकव्यवहारविलोपप्रसंगात् । एतेन भामतीविवरणमनादर-णीयंचेदित्यादिदूषणमनुक्तोपालंभनमेव । विवक्षाविशेषेणतस्यादर्तव्यताया एवावेदितत्वात् । अत एव मंडनोक्तमपास्तमित्युक्तमपि दुरुक्तमेव । विरगप्रयोगस्य मुख्यताया उपपादितत्वात् । अन्यानि भूतानिमात्रा-मितिश्रुतेरन्यानंदस्य भगवदानंदापेक्षया अल्पत्वतत्प्रतिबिंबत्वाद्यभिप्राय कत्वेनेष्टसाधनत्वानाक्षेपकत्वात् । मंगलानां च मंगलमित्यस्य महापुरुषा-र्थप्रदत्वरूपपरमश्रेयःसाधनपरतया व्याख्यातत्वाच्चेति । तस्मादत्र दीपि-काकारोक्तदूषणाभासस्यात्यंतानुपपन्नत्वेनाकिंचित्करत्वात् ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

---

# भामत्याद्युक्ताथशब्दार्थभंगः

यदपि ॥ पूर्वप्रकृतापेक्षायाश्चेत्यारभ्य कल्पांतरोपन्यासे - अनुपन्यासे वा किमात्मानित्यः अथानित्यइत्यादौ अथैषज्योतिरित्यादौचाथशब्दःपूर्वप्रकृतापेक्षार्थ एव । तत्रकल्पांतरानुपन्यासे पूर्वप्रकृतापेक्षत्वमानंतर्यरूपमेव । कल्पांतरोपन्यासे तु नानंतर्यरूपं तदिति निष्कर्षः । कल्पांतरोपन्यास एवाथशब्दआनंतर्यार्थ इति भामत्याशयभ्रमेणेदं खंडनं तदाशयाज्ञाननिबंधनं । अतएवानंतर्यार्थ इति भाष्यकारस्य न प्रतिज्ञाहानिः । कल्पांतरानुपन्यासे च तत्संबंधिन्याः पूर्वप्रकृतापेक्षाया एवाभावादेतच्छंकानिरासार्थप्रवृतो भाष्यकारः तद्व्याख्यानार्थ प्रवृतो भवांश्चाकुशल इति प्रकाशप्रसरोक्तं ध्वांतविजृंभितं । कल्पांतरोपन्यासेन पूर्वप्रकृतापेक्षार्थत्वमथशब्दस्यैवोतादेरपि नासंमतमिति नानुपपन्नार्थकं भाष्यमिति सिद्धमित्यादि । तदप्यापातरमणीयं । तथाहि ॥ कल्पांतरोपन्यासे - तदभावे वा सर्वत्राथशब्दस्य पूर्वप्रकृतापेक्षार्थत्ववर्णनं तावदयुक्तं । शब्दकल्पद्रुमादौ - संशये - आनंतर्ये - प्रश्ने - विकल्पे - समुच्चये - पक्षांतरेचाथशब्द इत्यादिना तस्य यथासंभवं प्रयोगानुसारेणानेकार्थताया व्युत्पादितत्वात् । विवरणे प्रकृतादर्थादर्थांतरपरत्वस्य वर्णितत्वाच्च । भामत्यामेव प्रकृताथशब्दस्य पूर्वप्रकृतापेक्षार्थताया दूषितत्वाच्च । इत्थंच पूर्वप्रकृतापेक्षत्वं भामत्यादिसर्वतांत्रिकरीत्या विकल्पांतरमुखस्थस्याथशब्दस्य पूर्वविकल्पप्रकृततद्धर्म्यपेक्षार्थकत्वं । तच्चाथशब्दस्य स्वसमभिव्याहृतपदोपस्थाप्यविकल्पसमानाधिकरणपूर्वविकल्पधर्म्यकत्वमेव । इदं च कल्पांतरोपन्यासस्थल एव न

सर्वत्रैस्यनुपदमेव दर्शयिष्यामः । चंद्रिकायांत्विममेवार्थमभिप्रेत्य सूत्रे कल्पांतरानुन्यासेन पूर्वप्रकृतापेक्षार्थत्वं दूषितं । यदत्र अथैषज्योतिरित्यादौ कल्पांतरानुपन्यासेपि पूर्वप्रकृतापेक्षार्थोऽथशब्द इति । तत्परिमल एव समाहितं । परिमले हि ॥ "ननु अथैषज्योतिरेतेन सहस्रदक्षिणेन यजेतेत्यत्र प्रकृतज्योतिष्टोमानुवादेन सहस्रदक्षिणा लक्षणगुणविधानं । नतु तद्विशिष्टकर्मांतरविधानमिति पूर्वपक्षोपपादकत्वेन पूर्वप्रकृतापेक्षार्थत्वमथशब्दस्य वार्तिककृतोक्तं । तंत्रवार्तिके ॥ "अतो विकल्पाभावेपि तादर्थ्यप्रसिद्धिरस्तीति चेन्न । तत्रानंतर्यार्थत्वमेव पूर्वपक्षे अभिमतं । अत एव संज्ञाधिकरणानुक्रमणे अथशब्दस्यानंतर्यार्थस्यासंबंधे अनुपपत्तेरित्यानंतर्यार्थमादायैव पूर्वपक्षसमर्थनं कृत"मित्युक्तं । कल्पतरावपि । "ननूभयथापि फलाभेदे किमित्यानंतर्यार्थत्वाग्रहस्तत्राह । परमार्थत"स्त्वित्युक्तं । परिमलव्याख्यायामपि वार्तिककृदुक्तं पूर्वप्रकृतापेक्षार्थत्वमाशंक्य न्यायसुधाकारादिभिरानंतर्यार्थत्वमादायैव पूर्वपक्षसमर्थनेन कल्पांतरोपन्यासस्थल एव पूर्वप्रकृतार्थबोधनेनात्रकल्पांतरानुपन्यासादानंतर्यार्थ एवेत्युक्तं ॥ किंच दीपिकाकारैरेव विषयानुक्रमणिकायां विकल्पाप्रतिभानेनाथशब्दस्य पूर्वप्रकृतापेक्षापरत्वनिरासश्च भामत्यामिति व्यक्तमुक्तं । तथाचैतत्सर्वपर्यालोचनया भामतीमते कल्पांतरानुपन्यासे पूर्वप्रकृतापेक्षार्थत्वमथशब्दस्य न संमतमिति स्पष्टमेवावगमात् भामत्याशयाज्ञानमूलमिदं खंडनमिति दीपिकाकारोक्तिरेवोक्तरीत्या भामत्याद्याशयानवबोधविजृंभिता स्वव्याहतोचोपेक्ष्यैव । एतेन खंडनकारोक्तेर्दुराशयवर्णनमप्यपास्तं । अतिस्पष्टार्थवचनस्यातिक्लिष्टार्थकल्पनाया जुगुप्सितत्वेन लज्जाकरत्वात् । ततश्च प्रकृते पूर्वप्रकृतापेक्षाया एवाभावात्तच्छंकानिरासर्थं प्रवृत्तो भाष्यकारः तद्व्याख्यानार्थं प्रवृत्तः भवांश्चाकुशल एवेति प्रकाशवचनसुपपन्नमेवेति तस्य साहसिकध्वांतविजृंभितत्ववचनमुन्मादमूलमेव । तस्य ध्वांतनिवर्तकचंद्रिकाविजृंभितत्वात् ।

एवं कल्पांतरोपन्यासस्थले विकल्पयोः सामानाधिकरण्यार्थं पूर्वप्रकृतविकल्प-धर्म्याकांक्षासत्वेपि तस्याः पूर्वविकल्पधर्मिसमर्पकपदस्यानुषंगेण निवृत्या स्वारसिकतदपेक्षार्थत्वं - अथशब्दस्यवा - उतादेर्वानास्त्येव । किंतु कल्पांतरार्थत्वमेव सर्वपरीक्षकसंमतमिति तत्रेष्टापादनमप्यज्ञाननिबंधनमेव ॥ एतेन मंडनोपरि तदीयं दुर्भाषणं दूरीकृतं वेदितव्यं । "पूर्वप्रकृतादर्थांतरत्वाभिधानेप्यानंतर्यस्यांतर्णीततया सिद्धि"श्चेति चंद्रिकायां मंडनोक्तस्य व्यक्तमुक्तत्वादिति । तस्मादत्र दीपिकाकारोक्तस्यासंबद्धप्रलापत्वेनाकिंचित्करत्वात् ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

यदपि ॥ यत्तु विवरणाचार्यैरित्यारभ्य एतेन "आनंतर्याभिधानेपि वैयर्थ्यपरिहारार्थमेव प्रकृतस्य हेतुत्वसिद्धिः । पूर्वप्रकृतादर्थांतरत्वाभिधानेप्यानंतर्यस्यांतर्णीततयासिद्धिश्चेति" चंद्रिकोक्तिः परास्ता । यथानंतर्यमर्थांतरत्वाव्यभिचरितं । न तथा अर्थांतरत्वमानंतर्याव्यभिचरितमिति विवरण एव व्यक्तमिति तदाशयाज्ञाननिमित्तैवेयं चंद्रिकोक्तिः । यत्तु मंडने यत्र यत्र पूर्वप्रकृतत्वं तत्र तत्र हेतुत्वमिति नियमो नात्राभिप्रेतः । किंतु प्रकृतादर्थादर्थांतरस्याथशब्दादिना बोधने पूर्वप्रकृतस्य वैयर्थ्यपरिहारार्थमेव हेतुत्वं बोध्यते । परमानंदो मोक्ष इत्यादौ तादृशपदाभावात्तत्र व्यभिचारचोदनं चंद्रिकाशयाज्ञानविजृंभितमित्युक्तं । तदेव तदज्ञाननिबंधनं ॥ चंद्रिकायां पूर्वप्रकृतार्थबोधकपदसत्वेपीति वाक्यस्यासत्वात् । परमानंदो मोक्षः ज्ञानं तु संपादनीयमित्यत्र मोक्षो न संपादनीयः नित्यानंदत्वात् । ज्ञानं तु संपादनीयं साधनत्वादित्यभिप्रायः । एतेन मोक्षहेतुभूतज्ञानसंपादनीयत्वं प्रति मोक्षस्य परमानंदत्वं हेतुरेवेति प्रकाशप्रसरोक्तमपास्तं । नहि ज्ञानसंपादनीयत्वे मोक्षसंपादनीयत्वं हेतुः लक्षणापत्तेरित्यादि । तदप्यज्ञानमूलमेव ॥ कारणादानंतर्यं मुख्यं यतः कुतश्चिदानंतर्यममुख्यमितिवत् - प्रकृतार्थहेतुभूतात्पूर्वप्रकृतादर्थांतरत्वं मुख्यं यतःकुतश्चिदर्थांतरत्वममु-

ख्यमिति तुल्यन्यायतया मुख्यानंतर्ये यथार्थांतरत्वमंतर्णीतं - तथा मुख्यार्थांतरत्वेप्यानंतर्यमंतर्णीतमितिप्राप्तत्वेन तन्निराकरणायोगात् । आनंतर्यार्थत्वेपि चैत्रो गतः अनंतरमेव मैत्रो गतः इत्यादाविवानंतर्यप्रतियोगित्वमात्रेण पूर्ववृत्तस्य हेतुत्वालाभेनाकारणादानंतर्यस्य वैयार्थ्यपरिहारार्थमेव पूर्वप्रकृतस्य हेतुत्वसिद्धेरवश्यवक्तव्यतया तस्य स्वतःसिद्धत्वोक्तेरयुक्तत्वात् । यच्च मंडनकाराणां चंद्रिकाशयाज्ञानवचनं तदुन्मादमूलमेव । "पूर्वप्रकृतादर्थांतरत्वाभिधानेप्यानंतर्यस्यांतर्णीततयासिद्धिश्चे"ति चंद्रिकायां मंडनोक्तस्य व्यक्तमुक्तत्वात् । चंद्रिकायां "आनंतर्याभिधानेपीत्यपिशब्देन नकेवलं पूर्वप्रकृतादर्थांतरत्वाभिधाने किंत्वानंतर्याभिधानेपीत्यस्यार्थस्य स्वरसतया प्रतीयमानत्वेन प्रकृतादर्थांतरस्याथशब्दादिनाबोधने प्रकृतार्थस्य वैयर्थ्यान्यथानुपपत्त्या हेतुत्वं बोध्यत इति । चंद्रिकाशयमूलकमंडनवचनस्य तदाशयाज्ञाननिबंधनत्ववचनमेव दीपिकाकारस्यैव तदज्ञानं कल्पयतीति यत्किंचिदेतत् । परमानंदो मोक्षइत्यत्र मोक्षो न संपादनीयः नित्यानंदत्वात् । ज्ञानं तु संपादनीयं साधनत्वादित्याशयवर्णनं खलु विदुषामतीव तोषावहं । मोक्षस्य नित्यत्वेनानुत्पाद्यत्वमभिधाय ज्ञानस्य पुनस्तत्साधनत्वोक्तेः स्वव्याहतत्वात् । "अविद्यास्तमयो मोक्ष" इत्यादौ ज्ञानसाध्याज्ञाननिवृत्तेरेव मोक्षत्वाभिधानात् । नित्यानंदरूपत्वमात्रस्यापुरुषार्थत्वाच्च । मोक्षो न संपादनीयः नित्यानंदत्वात् । ज्ञानं तु संपादनीयं साधनत्वादिति त्वदीयव्याख्यान इव यतः परमानंदो मोक्षः ततस्तत्साधनं ज्ञानं संपादनीयमित्यसद्व्याख्याने बहुतरपदाध्याहाराभावेप्युपयुक्ताल्पपदाध्याहारेण वाक्यार्थोपपत्त्या लक्षणाकल्पनाया अनावश्यकत्वात् । मोक्षस्य परमानंदरूपत्वाभावे पुरुषार्थत्वायोगेन तत्साधनज्ञानसंपादनासंभवात् ज्ञानस्यसंपादनीयत्वे तत्साध्यस्यमोक्षस्य परमानंदरूपत्वं हेतुरित्यकामेनाप्युपेक्ष्यमित्यलं दुर्बलविशसनेनेति । तस्मादत्र दीपिकाकारोक्तस्याभासत्वात् ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

# भामत्युक्तनित्यानित्यविवेकभंगः

---

यदपि । भगवत्पादभाष्यमित्यारभ्य - नित्यानित्यविवेको हि - किं ब्रह्मैव नित्यमन्यदनित्यमितिविवेकः - किं वा नित्यत्वतदाश्रययोरनित्यत्वतदाश्रययोश्च धर्मधर्मिणोः परस्परं विवेकः । उतानित्यस्य किंचिदधिष्ठानमस्तीति विवेकः । नाद्यः ॥ शास्त्रवैयर्थ्यात् । द्वितीये तन्मात्रेणानात्मप्रहाणेनात्मविचारेप्रवृत्यनुपपत्तिः । तृतीये ब्रह्मत्वाकारेणाज्ञानेपि ब्रह्मणोधिष्टानस्य शास्त्रवेद्यस्यज्ञातत्वेन शास्त्रवैयर्थ्यमिति चंद्रिकावचनं भामत्याशयाज्ञाननिबंधनं । सामान्यतः सत्यमस्तीति विशिष्यबंधमात्रमनृतमिति ज्ञानस्यैव भामत्यां नित्यानित्यविवेकशब्दार्थत्वोपगमात । सत्यादिवाक्यादेव शुद्धचैतन्यज्ञानेपि तत्त्वमसीत्यादिमहावाक्यसाफल्यमद्वैतसिद्धयादावुपपादितमित्यादि । तदप्यसारं ॥ त्वयैव द्वितीयतृतीयविकल्पयोरस्मदुपपादितविवेकरूपत्वेन यद्यपि न विकल्पानुपपत्तिरित्युक्तत्या तृतीयविकल्पपरसंमत इति व्यक्तमवगम्यते । तत्र हि चंद्रिकायां "नांत्यः ब्रह्मत्वादेः प्रकारस्याज्ञानेपि वस्तुतो ब्रह्मणोऽनात्माधिष्टानस्य शास्त्रवेद्यस्य ज्ञातत्वेनशास्त्र वैयर्थ्या"दित्युक्तं । तस्यायमाशयः ॥ विचारशास्त्रमपि असत्यसंसाराधिष्टानस्य सत्यस्य वस्तुतो ब्रह्मणो न ब्रह्मत्वप्रकारकज्ञानजनकं । अखंडार्थत्वहानेः । किंत्वधिष्टानस्वरूपमात्रविषयनिर्विकल्पकज्ञानजनकं । तच्च निर्विकल्पकं वस्तुतोब्रह्मचैतन्यरूपसत्यविषयकं ज्ञानं शास्त्रात्प्रागेवास्तीति व्यर्थं शास्त्रमिति । अत्रोक्तं खंडने ॥ जीवत्वोपलक्षिताखंडचैतन्यस्यैव शास्त्रतात्पर्यविषयत्वेन तादृशज्ञानस्य संसाराधिष्टानं किंचिदस्तीति ज्ञानाद्विल-

क्षणतया दोषाभावादिति । अद्वैतदीपिकायामपि ॥ ब्रह्मत्वाकारेण ज्ञानं नामोपाध्यसंवलितासंकीर्णस्वरूपचैतन्यज्ञानमेवेति । द्वावपि स्थूलदृष्टान्तौ ॥ एतावतापि शास्त्रसाध्यब्रह्मज्ञाने अखंडार्थगोचरे अत एव निर्विकल्पके । शास्त्रात्प्रागेव सिद्धेऽनित्यस्य संसारस्य किंचिदधिष्ठानं सत्यमस्तीति ज्ञानेऽभासमानचैतन्यस्वरूपातिरिक्तविषयविशेषः प्रकाशत इति त्वयाखंडार्थनिष्ठत्ववादिना वक्तुमशक्यतया तयोर्ज्ञानयोर्विषयकृतवैलक्षण्यस्याशक्योपपादनत्वेनालाभात् । नहि तदनतिरिक्तविषयं तत्कारणविलक्षणकारणजन्यमपि ज्ञानं ततो विषयकृतवैलक्षण्योपेतं दृष्टमिष्टं वा । किंचाद्वैतचंद्रिकादौ जीवत्वेशत्वोपलक्षिताभेदबोधस्याखंडाकारबोधे द्वारत्वोक्त्या युगपदुक्तोभयोपलक्षिताखंडबोधोत्पत्तिवचनमपसिद्धांतदुष्टंच । वस्तुतस्तु ॥ अधीतादाम्नायादापाततो ब्रह्मान्यदनृतं तस्मात्तस्य किंचिदधिष्ठानमस्तीति सत्यांशे सामान्यतः अनृतांशे विशिष्य च ज्ञानरूपं विवेकमंगीकुर्वता "ततोन्यदार्त"मिति वाक्यादिव"तत्सत्य"मिति वाक्यादप्यापाततो ब्रह्मैव सत्यमिति ज्ञानस्य तुल्यन्यायतऽवश्याभ्युपेयत्वेन सत्यांशे सामान्यज्ञानांगीकारो निर्युक्तिक एव । अन्यथा तद्वाक्यादपि किंचिदनृतमिति ज्ञानापत्तेः ॥ अधिकं प्रकाशप्रसरे व्यक्तं । एवं सत्यज्ञानादिवाक्यस्यानृतत्वादिभ्रमनिवर्तकत्वं तत्त्वमसीत्यादिमहावाक्यस्य भेदभ्रमनिवर्तकत्वमित्यद्वैतसिध्यादावुक्तत्वेप्युक्तरीत्याऽखंडाकारज्ञानजन्मनि शास्त्रवैयर्थ्यमित्यस्य तेनाप्यपरिहृतत्वाद्दुष्परिहरत्वाच्च दीपिकाकारस्य तथोक्तिरज्ञानमूलैव । तथा च शास्त्रात्प्रागिवपरतोपि ज्ञेयस्वरूपेविशेषाभावे सत्युक्तापादनं वज्रकल्पमेवेति ।

यत्तु ॥ द्वितीयतृतीयविकल्पयोरित्यारभ्य यावन्मात्रेणानात्मप्रहाणेनात्मविचारेप्रवृत्त्ययोगादित्यत्र यदि तन्मात्रेणानात्मप्रहाणंनभवतीति विवक्षितं तर्ह्यसंभवः । न ह्यनृतत्वातिनिर्णयमात्रेण विना सत्यलिप्सां ततोऽभिरज्यत एवेति ह्यनुभवसिद्धं व्यक्तंचैतत्परिमल इति । तदनन्वितमसंबद्धप्रलपनं

मुक्ताशयाज्ञानमूलं । अत्र चंद्रिकायां ॥ "तावन्मात्रेणानात्मप्रहाणे-नात्मविचारे प्रवृत्त्ययोगात् । ऐहिकामष्मिकभोगविरागायोगाच्चे"त्युक्तं । तदाशयस्तु ॥ यद्यन्यदनित्यं ब्रह्मैकमेव सत्यमिति निश्चिनुयात् तदान्यप-रित्यागेनब्रह्मविचारे प्रवृत्तिर्युज्यते । यदि तु नित्यत्वानित्यत्वरूपंधर्मद्वय-मस्ति । तदाश्रयौ च द्वाविति निश्चयमात्रं तदा कथमात्मविचारे प्रवृत्तिः । किंतु किंवा नित्यत्वादेरधिष्टानमिति संदिहानो न क्वापि प्रवर्तेत । किंच भामतीमते विवेकस्य विरागहेतुत्वोक्तेरुक्तविवेकवतः पुंसः पशुपुत्राद्यैहिक-भोगे स्वर्गाद्यामुष्मिकभोगे च कथं विरागः स्यात् । तत्र विरागस्य तदनि-त्यताज्ञानसाध्यत्वादिति । सति चैवं ग्रंथसंदर्भे दीपिकाकाराणामुक्तासंब-द्धप्रलापः प्रेक्षावद्भिरूपेक्षणीय एवेति न किंचिदेतदिति । एतेन प्रकाश-प्रसरोक्तं समाहितं ॥

यदपि ॥ यत्तु चंद्रिकामंडने विकारित्वादि दोषदर्शनसहकृतत्वस्य तादृशनिश्चये विशेषणस्य दानेपि तादृशदोषदर्शनविषयानात्मसु वैराग्येपि न सर्वत्रानात्मस्वित्यादि । तदिदं ॥ "दृष्टे अनुभवेनादृष्टे उपपत्त्येति" कल्पतरुवाक्यस्य "अनुभवोपपत्तिभ्या"मितिवाक्यस्य चानवलोकननिबंधनं । ततस्तत्खंडनार्थप्रवृत्तिरनुचितेति । तदपि दुरुक्तमेव ॥ खंडने दोष-दर्शनेति दर्शनशब्दस्वारस्येन साक्षात्कारवित्र क्षया मंडनोक्तदूषणस्यातिश्लि-ष्टत्वात् । लैंगिकादिसाधारणज्ञानमात्रविवक्षायामप्यतींद्रिये युक्त्यगोचरे शास्त्रमात्रवेद्ये च धर्मादावनात्मनिऐंद्रियिकानात्मनिदर्शनेन विकारित्वाद्यनु-मानस्यानेकातिप्रसंगपराहतत्वेन तदुक्तदूषणस्य दुरुद्धरत्वादिति ॥

यदपि यत्तु । चंद्रिकामंडने उक्तविधचैतन्यस्याप्रामाणिकत्वेन न शास्त्रतात्पर्यविषयतेति । तदकिंचित्करं ॥ "आत्मावारेद्रष्टव्य"इत्या द्युपनिषद्वाक्यानांसहस्रशोभाष्यकारैरन्यैश्च निदर्शितत्वात् । सर्वासामुपनिषदा-मद्वितीयचैतन्यस्वरूपप्रतिपादने पर्यवसानस्याद्वैतसिध्यादावुक्तत्वान्नेह पुनस्तत्प-

ष्टपेषणेन वितन्यत इति । तदप्यज्ञानविलसितं ॥ "आत्मावारेद्र-ष्टव्यः तत्त्वमसीत्यादेस्त्वदभिमताखंडचैतन्यस्वरूपमात्रप्रमापकतायाः अद्वैत-चंद्रिकादिनिरासेन महावाक्यार्थखंडनावसरे बहुधा निरस्तत्वात् । तत्प्र-कारस्य लेशतः प्रकाशप्रसरे प्रदर्शितत्वाच्च । प्रत्युत तत्ववाद्यभिमतविशि-ष्टब्रह्मस्वरूपपरताया एव व्यवस्थापितत्वाच्चेति ॥

यदपि ॥ यद्यपि शास्त्रं स्वरूपचैतन्यमेव गमयति । तस्य च स्वप्रकाशत्वेपि जीवदृष्ट्या आवृतस्यावरणभंगार्थं शास्त्रमिति वदामः । विशिष्टज्ञाने न शुद्धं भासत इति प्रागेव विवेचितमित्यादि । तदपि न शोभां बिभर्ति । तत्ववादिमते ब्रह्मणः स्वात्मानं प्रति स्वप्रकाशत्वेपि शास्त्रे अधिकृतं जिज्ञासुं तत्वतो भिन्नं जीवंप्रत्यप्रकाशमानत्वेन तं प्रति शास्त्रस्य सफलत्वेपि नाद्वैतमते तत्संभवः । तन्मते तयोर्जीवब्रह्मणोर्भेदस्य कल्पितत्वेनाभेदस्य तात्विकतया कल्पितस्यातात्विकस्य तात्विककार्याविघातक-ताया गुंजापुंजतयारोपितस्याग्नेरदाहकत्वप्रसंगेनावश्यमभ्युपगंतव्यत्वात् ब्रह्म-स्वरूपस्य स्वात्मानं प्रति प्रकाशमानत्वे बोध्यस्य जीवात्मनस्तत्वतो ब्रह्मस्वरूप-त्वेन तादृशजीवं प्रत्यपि प्रकाशमानत्वमकामेनाप्यभ्युपेयमेव । कल्तिभेदस्य तात्विकाभेदकार्यभूतप्रकाशाविघातकत्वात् । विशिष्टज्ञाने विशेष्यभानस्य समर्थितत्वाच्च । ततश्चाखंडस्वप्रकाशचैतन्यबोधकत्वे शास्त्रवैयर्थ्यंवज्रकल्प-मेव । तस्माद्भामतीमते नित्यानित्यवस्तुविवेकस्य दुर्निरूपत्वात् । अत्र दीपिकाकारोक्तासत्प्रलापस्य चोक्तदूषणलंघनजंघालत्वाभावेन भामत्युज्जीव-नासमर्थत्वात् ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

यत्तु । एतेनेत्यारभ्य यत्तु चंद्रिकायां प्रतिपन्नोपाधावत्यंताभावप्र-तियोगित्वरूपबाध्यत्ववतोध्वंसाप्रतियोगित्वादसतिरूप्यादावनित्यत्वाव्यवहारा-च्च विवरणोक्तमयुक्तमिति । तत्रेदं प्रष्टव्यं ॥ किमत्यंताभावप्रतियोगि-मात्रस्य ध्वंसाप्रतियोगित्वमुत मिथ्यापदार्थस्येति - आद्ये घटादेरपि तदभाव-

प्रसंगः । द्वितीये मिथ्यापदार्थपदेन किमसद्विवक्षितमुत पराभिमतमिथ्यापदार्थः । इष्टापत्तिराद्ये ॥ द्वितीये तु मिथ्यापदार्थानामद्वैतमते ज्ञाननिवर्त्यत्वंसंमतमेवेति भवन्मनोरथकल्पितोऽयंनियमो नास्माकमादरणीय इत्यादि । तदज्ञानविजृंभितमेव ॥ तथाहि ॥ तावत्तत्रोक्तविकल्पतद्दूषणादिकमसंबद्धं । चंद्रिकायां प्रतिपन्नोपाधावत्यंताभावप्रतियोगित्वरूपबाध्यत्ववत इति व्यक्तमुक्ततया तत्र किमत्यंताभावप्रतियोगिमात्रस्येत्यादि विकल्पानवकाशात् । घटादेः सत्वपक्षे उक्तबाध्यत्वासंभवेन तत्र ध्वंसप्रतियोगित्ववर्णनस्यानुपयुक्तत्वात् । एवं द्वितीयविकल्पोप्ययुक्तः । त्वन्मते असतः प्रतिपन्नोपाधेरनंगीकारेण प्रतिपन्नोपाधावत्यंताभावप्रतियोगिन इत्यनेनैवासद्व्यावृत्ति सिध्योक्तविकल्पानुपपत्तेः । वस्तुतस्त्वदभिमतमिथ्यापदार्थासतोर्वैलक्षण्यायोगाच्च ॥ परोपाधावसत्वेन संमतस्य स्वोपाधावसत्वं सार्वदैशिकसार्वकालिकनिषेधप्रतियोगित्वपर्यवसन्नमिति त्वत्प्राचां प्रवादानुसारेण भवदभिमतमिथ्यात्वस्यासत्व एव पर्यवसानात् । रूप्यं सदित्यादिप्रतीतावधिष्टानसत्वप्रतीत्या सर्वनिर्वाहे तत्र सत्तादात्म्यभाने मानाभावात् । तथात्वे अबाध्यादत्यंतभिन्नस्यैवबाध्यत्वेनाबाध्यरूपसत्तादात्म्यांगीकारे आत्यंतिकाबाध्यभेदाभावेन रूप्यं बाध्यमिति प्रतीत्यनुपपत्तेः । भ्रमकाले रूप्यादौ प्रतीतस्यासत एव सत्वस्य प्रतीतेराकरे समर्थितत्वाच्च । शशशृंगाभावमजानतः शृंगविशेषे प्रतारकोपदेशादिना शशशृंगमिदं सदित्यादिप्रतीत्यातुच्छेपिसत्तादात्म्यस्यावर्जनीयत्वात् । तादात्म्यस्वरूपस्यैव त्वन्मते निराकृतत्वाच्च । त्रैकालिकनिषेधप्रतियोगिनः स्वचरमक्षणोत्तरकालमात्रवृत्यभावरूपध्वंसप्रतियोगित्वासंभवस्योक्तत्वेन ध्वंसप्रतियोगिनि घटादावनित्यत्वमात्रं न मृषात्मतेत्यन्यत्रोपपादिततया तत्रोक्तदूषणासंभवाच्चेति ॥

यदपि ॥ एतेन अतात्विके शुक्तिरूप्यादावनित्यत्वाव्यवहाराच्चेति चंद्रिकोक्तिः परास्ता । इदं वाक्यं पररीत्या - स्वमतरीत्या वा । नाद्यः

तस्य ध्वंसप्रतियोगित्वांगीकारात् । नांत्यः तत्रातात्विकपदाप्रयोगात् । अस्तु वा - तथापि शशश्रुंगादिकं परित्यज्य रूप्यनिदर्शनोपादाने फलाभावः । अद्वैतमते तस्य ध्वंसप्रतियोगित्वांगीकारान्नोभयसंमतमिदं निदर्शनं । एवंच मिथ्यापदर्थस्यासत्वं सिद्धवत्कृत्य तत्र ध्वंसाप्रतियोगित्वः समर्थनं - स्वरूपेण ध्वंसः पारमार्थिकत्वाकारेणात्यंताभाव इत्यादि शंकासमाधानादिकंचानुक्तोपालंभनमेव । पंचमप्रकाराविद्या निवृत्तिरिति मते बाध्यस्य निवृत्तिः सिद्धैव । सोपादानकार्यनिवृत्तिः खलु बाधः । ततश्च बाध्यस्य ध्वंसाप्रतियोगित्ववर्णनमत्यंतासंगतमेवेत्यादि । तदप्यशुद्धं ॥ तथाहि ॥ अद्वैतचंद्रिकायां - अधिष्टानयाथात्म्यज्ञानेनाविद्यायां विलीनायामिति विवरणवाक्यव्याख्यावसरे - अज्ञानस्य निवृत्तिः तत्प्रयुक्तस्य तु बाध एवेत्युक्तं । तत्रैव यद्वा विलीनायामित्यस्य त्रैकालिकनिषेधप्रतियोत्वेन गृह्यमाणायामित्यर्थः । स्वयमित्यादेर्नाशंविनेत्यादिः पूर्वोक्त एवार्थः । अत्र निवृत्तिपदं वार्तिकानुसारादत्यंताभावपरमिति कल्पांतरमप्यभिहितं । तथाचोक्तपक्षद्वयेप्यज्ञानप्रयुक्तस्य नाशाभावप्राप्तेर्न नाशघटितं लक्षणं रूप्यादौ संमतमिति वक्तुं शक्यं । यद्यपि विवरणे मिथ्यात्वस्य लक्षणद्वयमेवाभिहितं । तथापि प्रथमलक्षणार्थभूतं ज्ञाननिवर्त्यत्वं न नाशघटितं । किंत्वन्यदेवविवक्षितं । त्रैकालिकनिषेधप्रतियोगिनः स्वाधिकरणकालोत्तरकालमात्रसंबंध्यभावरूपनाशस्यविप्रतिषिद्धत्वेन लक्षणयोः परस्परव्याहतिप्रसंगात् । तथाच बाध्यस्य नाशप्रतियोगित्वमशक्यांगीकारमेव । स्वोपादानेनसहकार्यनिवृत्तिर्बाधइतितु अनादिभावस्य बाधाभावप्रसंगादिना बहुशो दूषितमेव । एवं स्वरीत्या परीत्यावेत्यादिकमप्यनुपपन्नं । लघुचंद्रिकायां स्वाप्नव्याघ्रशुक्तिरजतादीनामुक्तोच्छेदशालिनामपि घटादीनां मुद्गरपातादिनेव ध्वंसानुपलंबात् रूप्यादौ नष्टमित्याकारो मुख्यार्थालंबनः सार्वजनीनप्रत्ययो नास्त्येव । क्वाचित्कव्यवहारस्तु तज्ज्ञानध्वंसविषयकः । तथाचाधि-

ष्ठानसाक्षात्कारानंतरं प्रतीयमानोऽभावो न ध्वंसः । तत्काले अविद्यमानस्य तदुत्तरक्षणे प्रतीयमानस्यैव ध्वंसत्वात् । अयं तु पूर्वं विद्यमान एव रजतप्रतीत्यपगमे प्रतीयते । अतोऽत्यंताभाव एवेत्यादिना रूप्यादावुक्तानित्यत्वस्यदूषितत्वेन तस्याद्वैतिसंमतत्वोक्तेर्लघुचंद्रिकाद्यांध्यनिमित्तत्वात् । एतेन तत्काले अविद्यमनस्तदुत्तरक्षणे प्रतीयमानोयोऽभावस्तादृशध्वंसप्रतियोगित्वं यदि घटादेरंगीक्रियते - तर्हि तादृशाभावस्य पूर्वं घटकाले अविद्यमानत्वात् घटादेस्त्रैकालिकनिषेधप्रतियोगित्वरूपं बाध्यत्वं गतमेवेत्यस्मदभिमतसिद्धिरेव । यदि तु पूर्वं विद्यमान एव तत्प्रतीत्यपगमे प्रतीयत इति कल्प्यते - तर्ह्यत्यंताभाव एव स इति न नाशप्रतियोगिता । यदि च पूर्वक्षणे सत्तादात्म्यापन्नतया विद्यमानो यस्तद्द्वितीयक्षणे प्रतीयमानस्तत्प्रतियोगिकाभावस्य ध्वंसत्वमंगीक्रियते - तर्हि रूप्यादेस्तूलाविद्याकार्यत्वेपि ध्वंसप्रतियोतित्वसंभवात्तदनंगीकारोऽनुचित एव । एवंच प्रपंचस्य त्रैकालिकनिषेधप्रतियोगित्वरूपबाध्यत्वे स्वाधिकरणकालोत्तरकालमात्रवृत्यभावरूपध्वंसोऽनुपपन्न एव । एवं मतांतररीत्या तत्संस्कारस्य ध्वंसरूपत्वे अविद्याध्वंसस्यापि तत्संस्कारत्वापत्या तस्य जीवन्मुक्तिदशायां देहादिप्रतिभासहेतुभूतस्यापूरुषार्थत्वापातः । सर्वस्यापि मूलाविद्योपादानकत्वेन तन्नाशे संस्कारस्थितेरयोगाच्च । अन्यथा कार्पासस्य भस्मावस्थायामपि तंतुसत्वापत्तेश्च । चरमक्षणसंबंधस्य ध्वंसरूपत्वे तस्यस्वाधिकरणक्षणनिष्टपूर्वत्वाभाववत्क्षणसंबंधरूपत्वेन पूर्वत्वस्य च तत्क्षणवृत्तिध्वंसप्रतियोगित्वरूपतयात्माश्रयान्योन्याश्रयाद्यापातात् । तस्मिन् क्षणे नंक्ष्यतीति व्यवहाराभावापातात् । प्रत्युत नश्यतीति व्यवहारापाताच्च । एवमंत्यशब्द - ज्ञानयोः क्षणिकत्वपक्षे उत्पत्तिनाशयोरैक्यप्रसंगाच्च । तस्मात्तादृशचरमक्षणद्वितीयक्षणे प्रतियोगिना जायमानोऽभाव एव तन्नाश इति वाच्यं । स च त्रैकालिकालिकाभावप्रतियोगिन्ययुक्तमित्युक्तमेव । एवं स्वोपादा-

नगतोत्तरावस्थाया ध्वंसरूपत्वे अनादिभावासंग्रहः । स्वाश्रयगतोत्तराव-स्थामात्रस्य तथात्वे भूतलादपसारितेघटे नष्ट इति व्यवहारापातः ॥ तस्मात् "तत्त्वमस्यादिवाक्यार्थसम्यग्धीजन्ममात्रत" इति वार्तिकानुसारेण सदाविद्यमानं तत्प्रतीत्युपरमे प्रतीयमानमभावंप्रतिप्रतियोगिनोनकथमपि ध्वंसप्रतियोगित्वंशक्यनिर्वाहमिति । ततश्च चंद्रिकायां दृष्टांततया रूप्यादिग्रहणं तस्य तूलाविद्याकार्यत्वे मतद्वयसंमतनिदर्शनार्थं । मतांतरे तु तस्याप्यसत्वप्रदर्शनार्थं । आदिपदग्राह्यतुच्छसमकक्षतयोपादानात् । तत्प्रकारस्त्वन्यत्रोक्तः । सिद्धांतेरूप्यादावतात्विकत्वाव्यवहारोक्तिरप्यज्ञानमूलैव । घटादेर्दंडादिनाश्यत्वं तु त्रैकालिकाभावाप्रतियोगित्वपक्ष एवेत्यसकृदावेदितं । अविद्याया ध्वंसरूपनिवृत्यंगीकारे दोषा उक्ता वक्ष्यंते च । विवरणवाक्यस्थनिवृत्तिपदस्य निषेधपरत्वेन लघुचंद्रिकादिव्याख्यानस्थोपदर्शितत्वात् । बाध्यस्य निवृत्तिरूपध्वंसप्रतियोगित्ववर्णनमप्यनुपपन्नमेवेति ॥

यदपि ॥ यदि तु ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं मिथ्यात्वमत्यंताभावघटितं । एवमपि तूलाज्ञानकार्ये रूप्यादौ ध्वंसाभावेपि मूलाज्ञानकार्ये घटादौ ध्वंसप्रतियोगित्वमनिवारणीयमेव । दंडपातादिना नाशदर्शनात् । तथाच शुक्तिरूप्यदृष्टांतेन घटादौ ध्वंसाप्रतियोगित्व-साधने तूलाज्ञानकार्यत्वमुपाधिरिति न घटादेर्ध्वंसाप्रतियोगित्वमुपपन्नमिति । तदप्यसारं । उत्तरावस्थाया ध्वंसरूपत्वस्य दूषितत्वात् । घटादावुक्तबाध्यत्वाभावपक्ष एव नाश्यत्वस्योपपादितत्वाच्च । प्रकाशे शशश्रृंगादेरेव निदर्शनतयोपात्तत्वेन तत्र तूलाज्ञानकार्यत्वस्योपाधिताया अशक्यशंकत्वात् । रूप्यादेर्निदर्शनतायाः तस्य सत्तादात्म्यवत्वेन प्रतीतिसमये सतस्तदुत्तरं प्रतीयमानाभावरूपनाशप्रतियोगित्वस्य घटादितुल्यतया पूर्वमेवोपपादितत्वेन तत्र साध्यासंमतेरयोगाच्च । तत्र हेतूच्छितिव्याघातादिरूपानुकूलतर्काणां जागरूकत्वेन पक्ष एव साध्यव्यापकताभंगेनोपाधिताया असंभवाच्च । आपाद-

नविवक्षायां तूक्तकल्पना निर्मूलैवेति ॥

यत्तु ॥ यत्तु चंद्रिकाखंडनकारैरन्यथानुवादः कृत इत्यनुक्तोपालंभनमिति प्रकाशप्रसरोक्तमयुक्तं । एवमनुवादे निमित्तं तु कथंचिदपि तस्याः किंचिदिव गांभीर्यं रक्षणीयमित्यनुक्तपैवेति न दोषः । सर्वथा च बाध्यस्य न ध्वंस इति रिक्तं वच इति सिद्धमिति । दुरुक्तं तत् । चंद्रिकायां रूप्यग्रहणेप्रयोजनांतरस्योक्तत्वात् । अतएव प्रकाशे शशशृंगादेरेव निदर्शितत्वात् । उत्तरावस्थामात्रस्य ध्वंसरूपतायादूषितत्वात् । नहि परोक्तमयुक्तमित्येतावताऽन्यथानुवादो युक्त इत्यद्वैतचंद्रिकादावुक्तत्वाच्चेति । तथात्र कृत्वा चिंतया - अनुक्तंपया वा अन्यथानुवाद इत्युक्तिःकथंसचेतसो युक्तेति भवानेव पृष्टो व्याचष्टां ॥

यत्तु ॥ एतेनासदेवेदमित्यारभ्य रूप्यादेरपि खंडने मूलाज्ञानकार्यत्वोक्तेस्तत्र घटादाविव नाशप्रतियोगितयाऽनित्यत्वव्यवहारापत्तेर्दुर्वारत्वादिति मंडनोक्तमपास्तं । खंडने प्रामादिकपाठस्य शोधनीयत्वात् । तस्य मूलाज्ञानकार्यत्वे घटादिवैलक्षण्यंनांगीकुर्म इत्यादि । तदप्यसारं ॥ नहि तद्दूषणार्थं प्रवृत्तैस्तत्र तत्रापतितमशुद्धं संशोध्यैव दूषणमभिधातव्यमिति नियमः । त्वयापि तस्य मूलाज्ञानकार्यत्वोक्त्या शोधनायोगाच्च मूलाज्ञानकार्यत्वपक्षेप्युक्तरूपबाध्यत्ववतो ध्वंसप्रतियोगित्वस्यासंभवदुक्तिकतया असकृदावेदितत्वेन तत्र संमतिवचनस्योन्मत्तप्रलापत्वाच्चेति ॥

यत्तु ॥ अस्तुवेत्यारभ्य पारमार्थिकत्वेन मिथ्यात्वस्य स्वरूपेण ध्वंसाविरोधित्वान्नोक्तदोषः नचान्योन्याश्रयः । लघुचंद्रिकोक्तरीत्या ज्ञानानिवर्त्यमात्रविशेष्यकधीरेवपारमार्थिकत्वं - न बाधध्यत्वाभाव इत्यंगीकारात् । तथाच विशेष्यतासंबंधेन तादृशधीत्वोपलक्षितज्ञाननिष्ठानवच्छिन्नावच्छेदकताया एव निवेशान्नान्योन्याश्रयः इति । तदप्यशुद्धं ॥ पारमार्थिकत्वावच्छिन्नतादृशाभावीयप्रतियोगितावत्वं मिथ्यात्वमिति पक्षे सा

ध्यत्वटकप्रतियोगित्वांशेलघुचंद्रिकायां विशेष्यतासंबंधावच्छिन्नतादृशधीत्वोप-लक्षितज्ञाननिष्ठानवच्छिन्नावच्छेदकताकत्वनिवेशसंभवेपि प्रकृते पारमार्थिक-त्वलक्षणशरीरे अनवच्छिन्नावच्छेदकतायाः कुत्रापि निवेशायोगेन लघुचंद्रि-कापरिष्कारानुवादो दीपिकाकारस्य तदर्थाज्ञानमूलकः कर्णौ छित्वा गुदं दहेदिति न्यायमनुकरोतीत्यंताज्ञतापादकोनुपादेय एव । किंचानूदितं लक्ष-णमयुक्तं । लघुचंद्रिकायामेव विकल्पाख्यवृत्तेरपि धीत्वस्योपपादितत्वेन तुच्छेपि विशेष्यतासंबंधेनोक्तधियः सत्वेनातिव्याप्त्यापत्तेः । चरमवृत्तेः स्वविषयकत्वांगीकारेण ब्रह्मण्यपि पारमार्थिकत्वस्योक्तरूपस्यासिध्यापातात् । स्वविषयकत्वस्वभिन्नत्वोभयसंबंधेन ज्ञाननिवर्त्याभावविशिष्ठधीविवक्षायामपि निर्धर्मके ब्रह्मणि मुख्यविशेष्यत्वरूपधर्मस्यापि तत्वतोऽभावेन तेन रूपेणा-भावप्रतियोगितया बाध्यत्वापाताच्च । प्रपंचस्यापि बाध्यत्वपक्षे ज्ञानजन्य ध्वंसप्रतियोगित्वरूपनिवर्त्यत्वासंभवस्योदितत्वेन तत्राप्युक्तलक्षणातिव्याप्त्याप-त्तेश्च । ज्ञानगृहीताभावप्रतियोगित्वस्य निवर्त्यत्वरूपत्वे तत्र पारमार्थिकत्वे न निषेधप्रतियोगित्वविवक्षावश्यं भावेनोक्तदोषानिस्तारात् । ततश्च प्रका-रांतरासंभवेन पारमार्थिकत्वस्य बाध्यत्वाभाव एव पर्यवसानादुक्तान्योन्याश्रयो दुर्निवार एवेति । अधिकमाकरे व्यक्तं ॥

यत्तु । यदत्र प्रकाशप्रसरे ज्ञाननिवर्त्यत्वस्य पारमार्थिकत्वरूपत्वे ज्ञानानिवर्त्याविद्यानिवृत्यादेर्ज्ञानानिवर्त्यत्वोनात्यंताभावप्रतियोगित्वे स्वरूपेण निषेधप्राप्त्याऽत्यंतासत्वापात इति विवेचितं । तदिदमद्वैतस्वरूपाज्ञानमूल-मनुक्तोपालंभनं च । नहि वयं पंचमप्रकाराविद्यानिवृत्तेर्बाध्यत्वमूरीकुर्मः । पंचमप्रकारस्यैवासिद्धेः ॥ अत एव दृश्यत्वस्य तत्र व्यभिचारमाशंक्य समाहितं सिध्यादावित्यादि । तदेवाज्ञानविजृंभितं दीपिकाकारस्य । तथा हि ॥ यत्तावदुक्तमविद्यानिवृत्तेर्बाध्यत्वंनांगीकुर्त इति । तत्रोच्यते ॥ मोक्षरूपाज्ञानध्वंसस्य किमधिकरणं । दृश्यांतरं ब्रह्म वा - आद्ये तस्यापि

नाश इत्यनवस्था । द्वितीये तस्यात्मान्यत्वे सत्यत्वे च सत्यद्वैतहानिः । अभावद्वैतंत्वन्यत्रनिरस्तं ॥ मिथ्यात्वे मोक्षाभावप्रसंगः । तस्य ब्रह्ममात्रत्वं तु सापेक्षनिरपेक्षयोरभेदासंभवान्नांगीकर्तुं शक्यमित्याशंक्याज्ञाननिवृत्तिर्मुक्तिः - सा च वृत्त्युपलक्षितात्मस्वरूपैव । तदुक्तं ॥ "निवृत्तिरात्मामोहस्य ज्ञातत्वेनोपलक्षितः । उपलक्षणनाशेपि स्यान्मुक्तिः पाचकादिवदि"ति समाहितं सिद्धिकारप्रभृतिभिरित्यविवादं । तत्रात्मनोऽज्ञानध्वंसरूपत्वे तत्र विद्यमानध्वंसत्वरूपानुयोगिताया ध्वंसांगीकारे अनवस्था । ध्वंसानंगीकारे दृश्यसामान्योच्छेदरूपमोक्षासिद्धिः । आत्मस्वरूपमात्रस्य मोक्षस्य कृत्यसाध्यतया पुरुषार्थत्वानुपपत्तिश्च । कृत्युद्देश्यत्वायोगश्च ॥ न च वृत्तिरूपोपलक्षणार्थं कृतिरस्त्विवति वाच्यं । वृत्तेः स्वतः सुखदुखावाप्तिहान्योरन्यतरत्वाभावात् । ननु नवीनमते यत्कार्योत्पत्तिकाले यन्न तिष्टति - स तस्य ध्वंसः । यथा विभाग एव संयोगनाश इत्यादिरीत्या चरमवृत्तेः स्वेतरसकलदृश्यनाशरूपत्वं - द्वितीयक्षणे स्वध्वंसरूपत्वंचांगीकृतमिति वृत्तेरज्ञानादिनिखिलदृश्यनाशरूपतया दुःखनाशत्वेनोद्देश्यता युक्तेति चेत्तर्ह्यविद्यानिवृत्तिरूपचरमवृत्तेः स्वस्यैव स्व स्व नाशकत्वांगीकारेण वृत्तेर्बाध्यतायाः सर्वाद्वैतिसंमतत्वं नापलपितुं शक्यं । तथाच चरमवृत्तेरज्ञानादि सकलदृश्यनाशत्वेन दुःखनाशरूपतया पुरुषार्थतां वदता तादृशवृत्तेः स्वनाश्यत्वेन बाध्यत्वमंगीकुर्वता दीपिकाकृताऽविद्यानिवृत्तेः पंचमप्रकारायाबाध्यत्वं नांगीकुर्म इत्यादिवचनं कथमज्ञानाविजृंभितमिति । नहि पंचमः प्रकारः पारमार्थिकत्वं । येनाबाध्यत्वं । अन्यथा प्रथमप्रकारनिराकरणानुपपत्तेः । एवं तत्र व्यभिचारचोदनमप्ययुक्तमेव । दृश्यत्वे तस्या अप्युच्छेदस्यावश्यकत्वेन साध्याभावस्य दुरुपपादत्वात् । अन्याथा दृश्यसामान्योच्छेदेनात्ममात्रावस्थानरूपमोक्षायोगात् । यदपि घटादीनामविद्यासंस्कारादेश्च पटुतमसंस्कारसंहितचरमसाक्षात्कारनिवर्त्यत्वं न्यायदीपावली-

व्यवस्थापितमित्यादि । अत्रोच्यते ॥ तथाहि ॥ तावदात्मापरोक्षेणाविद्यानिवृत्त्यनंतरं तदुपादानकसकलकार्यनिवृत्तेरावश्यकत्वेन जीवन्मुक्तीयाविद्यासंस्कारादेरयोगाद्देहादिप्रतिभासानुपपत्तिः । नच सर्पभ्रमहेत्वविद्यानिवृत्तावपितत्संस्कारवशेन भयकंपाद्यनुवृत्तिवदविद्यानाशेपि तत्संस्कारवशाद्देहादिप्रतिभासोपपत्तिरिति वाच्यं । वैषम्यात् ॥ सर्पादेराविद्यकत्वेपि भयकंपादेस्तदभावेनाविद्योपादानकत्वाप्राप्त्या तत्र सर्पज्ञानस्य निमित्ततया तस्य स्मरणादिरूपस्योत्तरकालेपि संभवेन तदुपपत्तावपि प्रकृते संस्कारादेः सर्वस्यापि मूलविद्योपादानकत्वेन तन्नाशे स्थितेरयोगात् । अविद्याध्वंसस्यापि तत्संस्काररूपस्य देहादिप्रतिभासहेतुत्वे तस्यानर्थहेतोः फलत्वायोगाच्च । प्रतीतिमात्रशरीरस्याविद्यावृत्तिसापेक्षस्याविद्यानाशरूपसंस्काराधीनप्रतीतिकत्वांगीकारे तस्य संस्कारकार्यत्वस्यैव प्राप्त्याऽविद्याकार्यत्वाभ्युपगमेनाविद्यानाशेपि प्रारब्धकर्मरूपप्रतिबंधकवशात्तदुत्तरक्षणे नाशाभावोपपादनासंगतेः । उक्तसंस्काररूपाविद्यानाशस्य जगत्प्रतिभासकारणत्वस्यैव प्रागुपपादितत्वेन तन्नाशकत्वाप्रसक्त्या तत्र प्रारब्धकर्मणां प्रतिबंधकत्वोक्तेरसंगतेश्च । अन्यथा कार्पासस्य भस्मावस्थायामपि तंतुसत्वापत्तेः । स्वनाशेपि स्वस्य प्रतिबंधकत्वे कदाप्यनिवृत्त्यापातात् । एतेन प्रथमज्ञानानधिकविषयेण द्वितीयज्ञानेन कथं निवृत्तिरित्याशंक्य प्रतिबंधकतदभावसहकारिभ्यां विशेषव्युत्पादनमपास्तं । तस्य प्रतिबंधकत्वासंभवस्यैवोपपादितत्वात् । संस्कारस्याविद्यान्यस्य साक्षाज्ज्ञाननिवर्त्यत्वे मानाभावाद्गौरवाच्च । मास्तु संस्कारपक्षः अविद्यालेशेन तु जीवन्मुक्तस्य शरीरादिप्रतिभास इतितु निरस्तं । अविद्याया निरवयवत्वेनावयवविशेषादिरूपलेशोक्त्यसंभवात् । भवन्मते ज्ञानस्वभावादेवाविद्यानाशस्यावश्यकत्वेन तत्प्रयुक्तनिखिलकार्यनाशस्यावर्जनीयतया प्राप्तत्वेनाविद्यालेशावस्थानप्रारब्धकर्मसद्भावादेर्निर्बीजत्वात् । नच "तस्य तावदेवचिर"मितिश्रुतिरेवकर्म विलंबेनमोक्षविलंबंवदतीतिवाच्यं । तदनुप-

पत्यैवापरोक्षज्ञानमोक्षयोरंतरा भगवत्प्रसादस्यावश्यकत्वोक्त्यासिद्धांतेतत्समाधानात् । "इंद्रो मायाभि"रिति श्रुत्या अविद्याया नानाशक्तयः संति । तत्र प्रथमज्ञानेनावरणशक्तिमात्रनाशः – नतु विक्षेपशक्तेरित्यादिकं तु तादृशश्रुतेरर्थांतरपरत्वस्यसोपपत्तिकमाकरेव्यवस्थापितत्वादप्रामाणिकमित्यन्यत्रोपपादितं विस्तरभयान्नेह प्रपंच्यते । तथाचाविद्यासंस्कारादृष्टादेरप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्च तदभावे सिद्धे त्वत्प्रदर्शितपटुतमसंस्कारसहितेत्यादिपरिष्कारोऽनुचित एव । किंचानादिदृश्येष्वेवमपि न ज्ञाननिवर्त्यत्वलाभः ससंस्कारेणापि ज्ञानेन तन्नाशाभावात् । अतीतघट - शुक्तिरूप्याविद्यासंबंध्यावरणशक्ति - प्रथमज्ञाननिवर्त्यप्रपंचस्थूलरूपादीनामसंग्रह एव । तत्र केषांचिज्ज्ञाननिवर्त्यत्वाभावात् । केषांचित्संस्कारसहितज्ञाननिवर्त्यत्वाभावात । बाध्यस्य च नाशरूपनिवृत्तेरयोगस्योक्तत्वाच्च । संस्कारसहिताप्रतिबद्धापरोक्षप्रमानिवर्त्यस्वस्वीयसंस्कारोभयकत्वादिरूपविवक्षाविशेषस्त्वाकरग्रंथेषु सोपपत्तिकंनिरस्तोद्रष्टव्यः ॥

यदपि ॥ यथाचात्र ब्रह्मण इव घटादेःश्रुत्यबोधितत्वान्नसद्रूपत्वप्रसंग इत्याद्यपास्तमित्यंतं । तदपि मोहमूलं ॥ "तत्सत्य"मित्यादिब्रह्मसत्वबोधकश्रुतिवदेव"सत्यःसोऽस्यमहिमा - विश्वं सत्यं मघवाना - यच्चिकेतसत्यमित्तंनमोघं - याथातथ्यतोर्था"नित्यादिश्रुतिभिः सर्वज्ञत्वादि - ब्रह्मधर्माणां - वियदादिप्रपंचस्य च सत्यत्वबोधनात् । तेषामपरमार्थसत्वे ब्रह्मणोपि तत्प्रसंगः श्रुतत्वाविशेषात् । तथाच पारमार्थिकत्वशून्यस्यापिब्रह्मणः परमार्थसद्रूपत्वे घटादेरपि तदापादनमुपपन्नमेव । अन्यथा गोत्वशून्यस्यागोत्ववत्सत्वहीनस्यासत्वप्रसंगात्सद्रूपत्वंव्याहतमेवभवेदिति ॥

यदपि ॥ ज्ञानानिवर्त्यत्वंचात्र ज्ञानानिवर्त्यमात्रविशेष्यकत्वोपलक्षितधीविषयत्वमिति बाध्यत्वेनांगीकृतस्योक्तधीविषयत्वाभावात्तेनरूपेण निषेधो

नस्वरूपेण निषेध एव पर्यवस्यति । एतेन ज्ञानानिवर्त्यत्वेननिषेधोक्तौ स्वरूपेणैवनिषेधप्राप्तिरित्यादिप्रकाशप्रसरोक्तमपास्तमित्यादि ।

तदपि दत्तोत्तरं ॥ त्रैकालिकनिषेधप्रतियोगित्वरूपबाध्यत्वेनांगीकृतस्योत्तरकालमात्रवृत्यभावरूपध्वंसप्रतियोगित्वं न संभवतीति वदंतं प्रति ज्ञानाविवर्त्यत्वेन रूपेण निषेधस्योक्तौ घटादेर्घटत्वादिनेवनिषेधः प्राप्त इत्यावेदितत्वादिति ॥

यत्तु । ज्ञानानिवर्त्यत्वंचात्र ज्ञानप्रयुक्तावस्थितिसामान्यविरहाप्रतियोगित्वमेव न ध्वंसघटितमित्यादि । तदुक्तार्थविस्मरणविजृंभितं । ध्वंसप्रतियोगित्वं अनित्यत्वमिति विवरणपक्षदूषणस्य प्रक्रांतत्वेन ध्वंसघटितोक्त परिष्कारविवक्षावचनस्यानवसरग्रस्तत्वेनासंबद्धप्रलापत्वात् । अद्वैतसिध्याद्युक्तस्यास्य परिष्कारस्यान्यत्र समूलघातं निराकृतत्वाच्चेति । निरासप्रकारश्चावस्थितिपदेन कार्यात्मनावस्थितिविवक्षायामुभयविवक्षायां वा अतीतघटाद्यसंग्रहः कारणात्मनावस्थितिविवक्षायां तु अनादिदृश्यासंग्रह इत्यादि दूषणेनान्यत्र व्यक्तः ॥

यदपि । एतेन ध्वंसप्रतियोगित्वंप्रति - ध्वंसप्रतियोगित्वस्य प्रयोजकत्वादितिमंडनं निरस्तं । प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं-ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वंच भिन्नरूपत्वाच्चान्योन्याश्रयमित्यादि । तदप्युक्तवाक्यार्थाबोधविलसितमेव । सामान्यविरहशब्देनापि त्रैकालिकनिषेधस्यैवविवक्षणीयतया तत्रापि पारमार्थिकत्वेनैवनिषेधस्य वक्तव्यतया तस्यचोक्तबाध्यत्वाभावरूपत्वेन भक्षितेपीति न्यायेनोक्तदोषानिवारणात् । वस्तुतस्तु ॥ तादृशसिद्धिकारीयोक्तपरिष्कारएवाशुद्धः । तथाहि ॥ घटादेरेकावस्थितिशेषस्य ज्ञानाप्रयुक्तत्वेन घटादाववस्थितिसमान्यविरहस्य ज्ञानप्रयुक्तत्वाभावात्तत्राव्याप्त्याद्यापत्तेः । ज्ञानप्रयुक्तविरहप्रतियोग्युपादानकत्वविवक्षायामनादिदृश्यासंग्रहात् । नच मण्याद्यसमवधान-

कालीनस्य कारणाभावप्रयुक्तदाहाभावस्यतत्तत्कालीनतत्तद्दाहाभावत्वेनमण्याद्यप्रयुक्तत्वेपितत्समवधानकालीनतत्तदभावस्यदाहसामान्याभावत्वेनतत्प्रयोज्यत्वं - एवं घटादीनां स्वरूपेणावस्थितिविरहस्य ब्रह्मज्ञानप्राक्कालीनस्य तत्वेन तदप्रयोज्यत्वेपि स्वसमानविषयकाज्ञानतत्प्रयुक्तान्यतरत्वावच्छिन्नप्रतियोगिताकाभावत्वेन तत्प्रयोज्यत्वस्यनिष्प्रत्यूहत्वात् । "विद्वान्नामरूपाद्विमुक्तः" इति श्रुत्याधनवान्सुखीत्यत्रेव नामरूपसामान्यविरहरूपमुक्तौ विद्वत्तायाः प्रयोजकत्वावगमात् । शुक्त्यादिनत्वज्ञानादिदर्नीतदज्ञानतत्प्रयुक्तान्यतरन्नास्तीतिसार्वजनीनानुभवादिति वाच्यं । येन रूपेण भासमाने प्रयोज्यता भासते तद्रूपावच्छेद्यत्वं तत्र भासत इति नियमस्यावश्याभ्युपेयत्वात् । अन्यथा मण्यसमवधानकालीनदाहाभावोमणिप्रयुक्तः मणिमान् कारणाभावप्रयुक्तदाहाभाववान् तत्तत्कालीनदाहाभाववानित्यादिस्वारसिकप्रयोगापातात् । तस्मिन्नेवदाहाभावदौरूप्यांतरेणप्रयोज्यतायास्त्वयैवोपपादितत्वात् । एवंच "नामरूपाद्विमुक्तः - मुच्यतेसर्वपापै"रित्यादौ नामत्वावच्छिन्नाभाव रूपत्वावच्छिन्नाभावोपस्थिततत्तत्पापत्वावच्छिन्नाभावानामेव बोधनेनत्वदुक्ताज्ञानतत्प्रयुक्तान्यतरत्वावच्छिन्नाभावत्वेनानुपस्थितत्वेनोपस्थितरूपस्य च ज्ञानप्रयोज्यतानवच्छेदकत्वेन तत्र प्रयोज्यप्रयोजकभावबोधस्योक्तश्रुतिभिरनुत्पादनेनाप्रामाणिकत्वात् । नच नामत्वं रूपत्वं तदन्यतरत्वं वा अज्ञानतत्प्रयुक्तसर्वसाधारणं - येन तदवच्छिन्नाभावत्वमपिप्रयोज्यतावच्छेदकं स्यात् । तयोः परस्परमेव व्यावृत्तत्वात् । अन्यतरत्वस्यापि अव्याकृते आनादिदृश्येषुचावृत्तेः । तस्य पंचीकृतभूतमात्रविकारवृत्तित्वस्य श्रुत्याऽवगमात् । सर्वपापैरित्यत्रापि तत्तत्पापत्वावच्छिन्नाभाव एव प्रतीयते । सर्वपदसमभिव्याहारात् । सर्वपदस्यतु उपस्थिततत्तद्रूपावच्छिन्नवाचितायां अद्वैतचंद्रिकायां वार्तिककारादिसंमत्याव्यवस्थापितत्वात् । अन्यथा पापत्वव्यापकव्यासज्यवृत्तिधर्मावच्छिन्नाभावस्य सर्वदा संसारिषु विद्यमानस्यापुरुषार्थत्वेन

ज्ञानफलत्वोक्त्ययोगात् । लक्षणाया अतिप्रसंगपराहतत्वात् । मणिसमवधानस्थलेपि तन्निष्टमणिसमवधानोत्तरदाहाभावाधिकरणता तन्निष्ठाधेयत्वयोर्मणिप्रयोज्यत्वस्योभयासिद्धस्योपगमेनैवेदानीमत्र दाहाभावो मणिप्रयुक्त इत्यादिव्यवहारस्य सविशेषणेहीति न्यायेनोपपत्तावन्नाद्यभावे मणिपूर्वकालीनेरूपांतरेणतत्प्रयुक्तताया अप्रमाणिकतया तद्दृष्टांतेनात्रापि तथोक्तेरसंगतत्वात् । प्रकृते ज्ञानप्रयुक्तताद्दशाधिकरणताघटितपरिष्कारस्त्वसंभवदुक्तिकः । तस्य सर्वभावोच्छेदकत्वेन तत्प्रयोजकत्वोक्तेरयोगात् । ताद्दशाधिकरणतारूपभावस्यैव सत्वेन मोक्षायोगात् । एवं सर्वाद्वैतमते लक्षणासंभवः । घटादौ ज्ञाननिवर्त्यावस्थाविशेषसद्भावाविरोधिन एव तद्धर्मस्य मिथ्यात्वरूपत्वायोगश्च । किंच शुक्तिरजतादावव्याप्तिः । तदीयकारणावस्थारूपाज्ञानस्य ज्ञाननिवर्त्यत्वेमानाभावात् । नच शुक्तितत्वज्ञानोत्तदज्ञानतत्प्रयुक्तान्यतरन्नास्तीत्यनुभव एव मानमितिवाच्यं । शुक्त्यवच्छिन्नचिद्विषयकाज्ञानस्य रजतोत्पत्यर्थमेव कल्पनीयस्यातींद्रियत्वेन तदभावस्य प्रत्येतुमशक्यतयोक्तप्रतीतेः पुरुषाश्रिताज्ञानाभावादिविषयकत्वात् । तस्यच रजताद्यनुपादानत्वेन तदभावस्य प्रत्येतुमशक्यतयोक्तप्रतीतेस्तत्रमानत्वायोगात् । नच चिदैक्यात्तदवच्छिन्नाज्ञानंसाक्षिभास्यं । तथात्वे पुरुषांतरीयाज्ञानस्यापि भानापत्तेः । तथाचोपदर्शितसिद्धिकारीयपरिष्कारस्यातिहेयत्वेनोपादातुमशक्यत्वात्तमवष्टभ्यपरस्यप्रयासोविफल एवेति सुस्थमेवोक्तं दूषणमिति सिद्धं ॥

यत्तु ॥ चंद्रिकायां - "तथात्यंताभावप्रतियोत्वस्यनिराकारे ब्रह्मण्यपि संभवाचेत्युक्तमयुक्तं पारमार्थिकब्रह्मणोधिकरणाप्रतिसिद्धेरित्यादि । तदशुद्धं ॥ भूमप्रकरणे"स एवोपरिष्टादित्यादिना स्वेमहिम्नीत्यंतेनोपदर्शितस्याधिकरणस्य प्रमितत्वात् । प्रतिपन्नोपाधिघटितलक्षणाभिधानस्य सार्वत्रिकत्रैकालिकनिषेधप्रतियोगित्वतात्पर्यकत्वस्य त्वप्राचीनैरंगीकृतत्वेन ताद्दशनि-

ष्कृष्टपरिष्कारस्य बहुदोषदुष्टतयोपादातुमशक्यत्वाच्च ॥

एतेन ॥ वस्तुतस्त्वित्यादिना अनिर्वाच्यलक्षणे सत्वानधिकरणत्व-विशेषणं न ब्रह्मव्यावर्त्यर्थं - किंतु सिद्धसाधनवारणायैवेत्युक्तमपास्तं ॥ लक्षणशरीरघटकविशेषणप्रयोजनविचारावसरे सिद्धसाधनवारणार्थत्वोक्तेरुन्मत्तभाषणत्वात् । अधिकं प्रकाशप्रसरे व्यक्तं ॥

यच्च ॥ अस्तुवा मिथ्यात्वलक्षणेपि धर्म्यन्यूनसत्ताकप्रतियोगित्व-मेवविवक्षितमित्यादि । तच्चायुक्तं ॥ शुक्तिरूप्याद्यसंग्रहप्रसंगात् तत्र प्रतियोगिताया व्यवहारिकत्वात् । तेनैव तुच्छव्यावृत्तिसंभवेनप्रतिपन्नोपाधिपदनिवेशानर्थक्याच्चेति । अनिर्वाच्यलक्षणे धर्मन्यूनसत्ताकत्वमेव विवक्षितमित्यत्र असत्वानधिकरणत्वे - सत्वानधिकरणत्वेवातद्विवक्षा । नाद्यः भावाद्वैतपक्षे तस्य ब्रह्मसाधारणतया व्यर्थत्वात् । सर्वाद्वैतपक्षेच सत्वानधिकरणत्वनिवेशवैयर्थ्यात् । नद्वितीयः ॥ व्यर्थत्वात् ॥ शुक्तिरजताद्यसंग्रहाच्च । ब्रह्मण्यसत्वानधिकरणत्वरूपधर्मांगीकारप्राप्त्यास्वव्याहतिप्रसंगाच्चेति ।

यत्तु ॥ एतेन पक्षतावच्छेदककोटौ चिद्भिन्नत्वविशेषणसार्थक्यमपिसूचितमित्यादि । तदसारं ॥ तन्निवेशसार्थक्यसंपादनप्रकारस्यानिरूपणात् । ब्रह्मणिधर्म्यन्यूनसत्ताकमिथ्यात्वाभावमंगीकृत्यबाधवारकतया सार्थक्यविवक्षायां निर्धर्मकत्वप्रतिज्ञाव्याघातात् । ब्रह्मणि पारमार्थिकधर्मांगीकारेण पिण्याकयाचनार्थंगतस्यपिशाचस्य खारीतैलदानप्रतिज्ञावदधिकापाताच्चेति - अधिकं प्रकाशप्रसर एव व्यक्तं । तस्माद्दीपिकाकारोक्तस्यात्याभासत्वाद्विवरणमते नित्यानित्यविवेकोनुपपन्न एवेति ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

यत्तु । चंद्रिकायामित्यारभ्य भ्रमशब्देन बाध्यार्थविषयकत्वविवक्षायां तेन नित्यानित्यविवेकविषयभेदादेः पारमार्थिकत्वाभावमात्रसिध्या इष्टा-

पत्तिः । द्वितीयेतु ब्रह्मप्रमेतरबाध्यार्थविषयकत्व स्य भ्रमपदमुख्यार्थत्वात् । उक्तविवेकस्योक्तभ्रमत्वासंमतेःप्रमात्वपक्ष एवाद्रीयते । इदंच प्रमात्वं व्यवहारकालाबाध्यार्थविषयकत्वमेवेति नाद्वैतहानिः । एतेन प्रमात्वपक्षो नाद्वैतिभिरंगीकर्तुं शक्य इति गुरुराजीयवाक्यं परास्तमित्यंतं । तदापातरमणीयं । तथाहि ॥ ब्रह्मज्ञानफलंनित्यमितिज्ञानस्यबाध्यार्थविषयकत्वमंगीकृत्य ब्रह्मज्ञानफलस्यापारमार्थिकत्वाभ्युपगतौ ब्रह्मज्ञानस्य मोक्षफलकताया विवरणादौनिर्णीतत्वेन मोक्षस्यापि ब्रह्मज्ञानबाध्यत्वेनापारमार्थिकत्वांगीकारप्राप्त्याबंधाद्वैषम्याभावेन मोक्षस्य परमपुरुषार्थत्वाभावप्रसंगात् । मोक्षाभावप्रसंगेनापसिद्धांताच्च । त्वत्प्राचीनैः"निवृत्तिरात्मामोहस्य ज्ञातत्वेनोपलक्षितः । उपलक्षणनाशेपि स्यान्मुक्तिः पाचकादिवदि"त्यादिवदद्भिर्मोक्षस्यपुरुषार्थतया आत्मस्वरूपत्वेनाबाध्यतयाश्चांगीकृतत्वात् । अद्वैतसिद्धौ दृश्यत्वानुमानस्य पराभिमतमोक्षेव्यभिचारमाशंक्य हेतुकोटौ विशेषणदानेनतत्सत्यतायाः स्पष्टमवगमाच्च । तथाचाद्वैतसमर्थनार्थं प्रवृत्तेन दीपिकाकारेण ब्रह्मज्ञानफलस्य मोक्षस्य बाध्यत्वसमर्थनेन तस्य प्रयोजनत्वासिध्यानिष्फलत्वेनाद्वैतशास्त्रस्यानारंभणीयत्वमेव संपादितमितिसाधुसमर्थितोह्यद्वैतवाद इति । एतेन प्रमात्वपक्षोपि व्याख्यात इत्युक्तमप्यपास्तं । ब्रह्मज्ञानफलं नित्यमिति ज्ञानस्य बाध्यार्थविषयकत्वे दोषस्योक्तत्वात् । तादृशज्ञानस्य ब्रह्मज्ञानमात्रबाध्यार्थविषयकत्वस्योक्तानेकदोषदुष्टतयांगीकर्तुमशक्यत्वेन सर्वथा अबाध्यार्थविषयकत्वमेव प्रमात्वमित्यवश्यवक्तव्यतया तादृशप्रमात्वस्यनित्यानित्यविवेकशब्दितभेदस्य सत्यत्वापत्या अद्वैतिभिरंगीकर्तुमशक्यत्वात्तथा गुरुराजीयोक्तेः सूपपन्नत्वात् । कर्मफलवद्ब्रह्मज्ञानफलस्यापि ब्रह्मज्ञाननिवर्त्यत्वप्राप्त्याद्वयोरपिबध्यत्वाविशेषात्कर्मफले वैराग्यायोगाच्चेति ॥

यदपि । अयंभावः द्विविधा प्रमा - मायोपाधिकसत्वार्थविषयिणी - निरुपाधिकसत्वार्थविषयिणीचेति । तत्राद्यं व्यावहारिकंप्रमाण्यं -

द्वितीयंतु पारमार्थिकं । अप्रमायांत्वविद्योपाधिकसत्वमेव । व्यवहारकालाबाध्यार्थविषकत्वमपि मायोपाधिकसत्वार्थविषकत्वमेव । असंजातबाधभ्रमविषयोप्यविद्योपाधिकसत्व एव । मायाविद्ययोरभेद पक्षेतु मूलाज्ञानोपाधिकसत्वार्थविषयकत्वमपरप्रामाण्यं । तूलाज्ञानोपाधिकसत्वार्थविषयकत्वमपराप्रामाण्यमिति विवक्षणान्नकाप्यनुपपत्तिरिति । तदप्यसारं ॥ मायोपाधिकस्य ब्रह्मज्ञानबाध्यतया कर्मफलादविशेषादिदोषस्योक्तत्वात् । मायाविद्ययोर्भेदपक्षस्य स्वयमेवदूषितत्वाच्च । अभेदपक्षेपि मूलाज्ञानोपाधिकसत्वार्थस्यापि ब्रह्मज्ञानबाध्यतया बंधमोक्षयोरवैषम्यापातादि दोषापरिहारात् । ब्रह्मज्ञानफलस्य मोक्षस्य ब्रह्मज्ञानसंपादितस्य तदुत्तरकालीनस्य तद्बाध्यताया असंभवदुक्तित्वाच्चेति ॥

यदपि । अस्तुवा ब्रह्मज्ञानेतराबाध्यार्थविषयकत्वमपरप्रामाण्णं - अर्थपदेन सत्वेन प्रतीत्यर्हस्यविवक्षितत्वात्तुच्छव्यावृत्तिरिति । तन्न ॥ असतोपि सत्वेन प्रतीतेरुपपादितत्वात् । ब्रह्मणोप्यर्थपदेन ग्रहणसंभवेन तस्यापि व्यावहारिकत्वापाताच्च । तच्च सत्तादात्म्यरूपमेवेत्यादितु प्रागेव निराकृतं । ततश्च तुच्छादिव्यावृत्यर्थबाध्यार्थविषयकत्वनिवेशःशिरसाधार्य एव । एतेनाबाध्यपदेन तदवच्छिन्नचैतन्यस्यैव विवक्षेत्याद्यपि परास्तं । अर्थपदास्वारस्यप्रसंगात । तस्यासंमतत्वेन दृष्टांतासिद्धेश्च । असंजातबाधभ्रमविषयस्य तूलाज्ञानकार्यस्य व्यावहारिकत्वानुपपत्योक्तविवक्षायामपितदव्यावृत्तेः । देहात्मैक्यस्यतु ममदेह इत्यादीदानींतनबाधबाध्यस्य व्यावहारिकताया अशक्यशंकत्वाच्चेति ॥

यत्तु ॥ व्यवहारदशाबाध्यप्रकारकज्ञानस्यापरप्रामाण्यादिदं रजतमिति ज्ञाने अबाध्यप्रकारकत्वाभावात्तदसंग्रह इति । तदपि दुरुक्तं ॥ अत्ररजतमित्यादिज्ञानाव्यावृत्तेः । रूप्यस्यापि व्यवहारदशायां प्रतीतिसमये सत्तादात्म्येनप्रतीयमानतया सतोबाध्यत्वेनोक्तज्ञानानिवारणाच्च । एतेन

यथाचात्रेत्यारभ्यापास्तमित्यंतमपास्तं । प्रागेवदूषितत्वात् ॥

यदपि ॥ भ्रमत्वं न बाध्यार्थविषयकत्वं - बाध्यार्थप्रकारकत्वंवा विवक्षितमिति नोक्तदोष इत्यादि । तन्न ॥ रूप्यं बाध्यमिति ज्ञानस्य भ्रमत्वापत्तेरनिवारणात् । प्रकारांतरस्य दूषितत्वाच्च । इयं शुक्तिः - इदं रजतमिति ज्ञानयोः प्रमात्वादिनिर्वाहायबाध्याबाध्ययोस्तादात्म्यविषयकत्वं भ्रमत्वमिति विवेचनस्यावश्यकत्वात् ॥

यत्तु ॥ एतेन ब्रह्मज्ञानबाध्यार्थविषयकत्वरूपभ्रमत्वस्य व्यवहार-कालाबाध्यविषयकत्वरूपप्रमात्वाविरुद्धत्वात् एकसत्तावादे भ्रमत्वस्य - सत्तात्रै-विध्यावदे प्रमात्वस्यचोक्तविवेकेस्वीकारेपि न ब्रह्मज्ञानफलानित्यताप्रसंगोनवा भेदसत्यतादिप्रसंग इति खंडनाभिप्राय इति । तदसारं ॥ यथाकथंचि-द्बाध्यार्थविषयकत्वस्य प्रमात्वरूपतायादूषितत्वात् । बाधविलंबादिलंबयोर-प्रयोजकत्वेन ब्रह्मज्ञानबाध्यार्थविषयकस्य ज्ञानस्य सर्पभ्रमाद्यपेक्षयाधिकभ्रमत्व-स्यैव न्याय्यत्वात् - रूप्यज्ञानस्याप्यपरप्रामाण्यापाताच्चेति ॥

यदपि ॥ एकसत्तावादेपि भ्रमसाधारणं मिथ्यत्वेनानिश्चीयमाना-र्थविषयकत्वरूपं प्रमात्वमितिजल्पनं । तदप्युन्मत्तप्रलापत्वादनादेयमेव । भ्रमस्य नियमेन मिथ्यार्थविषयकत्वेनोक्तप्रमात्वस्यतत्साधारण्यासंभवात् भ्रमप्रमाविभागाद्यपलापप्रसंगात् । एकसत्ताप्रक्रियायाः सत्ता त्रैविध्यादे-श्चाकरेदूषितत्वाच्चेति ।

यत्तु ॥ एतेन भ्रमप्रमात्वोभयांगीकारे प्रकाशप्रसरोक्तं दूषणं परा स्तं । एकसत्तावादेपारमार्थिकत्वबाधस्यैव प्राप्त्येष्टापत्तेः । सत्तात्रैविध्य-वादेतु ब्रह्मज्ञानबाध्यत्वेनोक्तविवेकस्य न व्यावहारिकत्वहानिः । नह्येता-दृशंभ्रमत्वं ब्रह्मज्ञानफलनित्यतादेरूप्यादिसमानयोगक्षेमत्वं गमयितुमर्हति । नवोक्तविधोभ्रमोऽविद्यावृत्तिरिति कस्यापि संमतमिति । तदप्येतेन परास्तं ॥ उक्तविवेकरूपज्ञानस्य बाध्यार्थविषयकत्वे ब्रह्मज्ञानफलनित्यतादेः

कर्मफलनित्यतादिसमानयोगक्षेमत्वस्यासकृदावेदितत्वात् । एकसत्तावादेपि घटरूप्यादावर्थक्रियातदभावादिवैलक्षण्यस्य लघुचंद्रिकादौव्यक्तत्वाच्च । मिथ्यात्वसिद्धेः प्रागविद्यावृत्तेरसिध्या अविद्यावृत्तित्वस्य भ्रमलक्षणत्वायोगाच्चेति ॥

यदपि ॥ ब्रह्मज्ञानबाध्यार्थ विषयकत्वस्येत्यारभ्यैकसत्तावादेरूप्यस्य जगदवैलक्षण्यात् - रूप्यस्यापि व्यावहारिकत्वेन ब्रह्मज्ञानोत्तरमेवसर्वभ्रमत्वस्योररीकारेणाविरोधादित्यंतं । तदप्येतेनपरास्तं ॥ शुक्तिरुप्यादेर्ब्रह्मज्ञानबाध्यत्वे ब्रह्मज्ञानोत्तरमेवतत्रभ्रमत्वोररीकारस्याद्वैतिभिरेवबहुधादूषितत्वात् । रूप्यव्यवहारिकताया एकसत्ताप्रक्रियायाश्चनिराकृतत्वाच्चेति ॥

यच्च ॥ यत्तु मंडने अतात्विकत्वेबाध्यत्वमात्रस्य प्रयोजकत्वेन न विवेकसिद्धिरित्युक्तमयुक्तं । उक्तपारिभाषिकप्रमात्वस्य वस्त्वसाधकत्वेननकोपि विरोध इति सिद्धमिति । दुरुक्तंतत् ॥ व्यवहारदशायां प्रतीतिसमये अबाध्यस्य रूप्यादेरप्यपरप्रमाविषयत्वापादनस्य युक्तत्वात् । नित्यानित्यविवेकस्यपारिभाषिकप्रमात्वेअनिर्मोक्षप्रसंगात् । ब्रह्मज्ञानफलनित्यत्वासाधकत्वेनोक्तपरिभाषाया अनुचितत्वाच्चेति । तस्मादद्वैतदीपिकाकारोक्तस्यात्याभासत्वाद्ग्रंथकृदुक्तंदूषणं सुस्थमिति सिद्धं ॥

यदपि ॥ यत्तु विवरणे विषयैर्नित्यसुखं ब्रह्मैवाभिव्यज्यते । नजन्यं सुखंनामतदस्तीत्यस्यायमाशयः । ब्रह्मरूपोयमानंदोऽनवच्छिन्नात्मरूपोमोक्ष इत्युच्यते । अवच्छिन्नानंदांशरूपेणतु वृत्तिसुखमिति । विषयसंबंधजन्यवृत्यवच्छिन्नात्मन एव विषयसुखत्वादविद्योपहितात्मान्यत्वमेवतस्येति लघुचंद्रिकोक्तेः । तस्यविशिष्टरूपेण विनाशात्तत्र वैराग्योपपत्तिः । एतेन प्रकाशप्रसरोक्तं - मंडनोक्तंच निरस्तमित्यादिसिद्धमित्यंतं । तदपि चंद्रिकायामेव दूषितत्वात्तन्निराकरणंमृतमारणमेव । तथाहि ॥ मोक्षेरागवतःपुरुषस्य तत्वतस्ततोभेदहीनेऔपाधिकभेदभिन्नेपि

विषयसुखेनिरागायोग एव । वस्तुतो वन्हावयं न वन्हिः किंतु गुंजापुंज इति भ्रमसिद्धमिथ्याभेदसत्वेपि तात्विकवन्हिभेदाभावेन दाहस्यैव दृष्टत्वा तद्वदतात्विकस्यतात्विककार्याविघातकत्वेन विषयसुखेमोक्षसुखादौपाधिकभेदभिन्नेपि तात्विकभेदसत्वेन तत्कार्यरागरूपकार्याविघातेनोक्तवैराग्यायोगात् । नचाग्नौ तात्विकाग्नचभेदवन्मोक्षे अतात्विकेन वैषयिकसुखेन तात्विकाभेदाभावान्मोक्ष एव रागःनविषयसुख इतिवाच्यं । तात्विकभेदाभेदोभयाभावस्य व्याहतत्वात् । ननु विरुद्धयोरन्यतरेणतात्विकेन भाव्यमिति नियमस्तात्विकधर्मिविषयकः । सुखंत्वतात्विकमतोनदोषः । अन्यथा वंध्यासुतस्य श्यामत्वाभावे गौरत्वंसत्यंस्यादितिचेन्न । अपारमार्थिकेपि शुक्तिरूप्ये नेदं रूप्यमितिप्रतीयमानशुक्तिधर्मिकतात्विकभेदप्रतियोगित्वस्येव मोक्षसत्तासमानसत्ताकमोक्षधर्मिकतात्विक भेदप्रतियोगित्वस्य वैषयिकसुखे अवश्यमंगीकर्तव्यत्वात् । तस्यच त्वया सदद्वैतभंगभियांगीकर्तुमशक्यतया तात्विकतदभेदस्यैवप्राप्त्यातत्रविरागायोगस्य युक्तत्वात् । किंचाखंडब्रह्मण अनंदांशचिदंशादिभिर्भेदस्य तत्प्रतिनिधेर्वात्वन्मते अनंगीकारेणांश विशेषेणावृतत्वादिकल्पनमप्ययुक्तमेव । अंगीकारेवा तादृशांशभेदस्य त्वन्मते औपाधिकत्वयोपाधेः कृत्स्नैकदेशसंबंधविकल्पदूषणादिनाकरेदूषितत्वात् । "एतस्यैवानंदस्यमात्रामुपजीवंतीति" श्रुतिस्त्वन्यानीतिपदस्वारस्यान्मात्राशब्दगृहीतब्रह्मानंदप्रतिबिंबभूततत्सदृशतदधीनाल्पानंदत्वंजीवानां श्रावयतीति स्वाभिलषितसिद्धयेतदुदाहरणं भ्रांतिमूलमेव । एवं विवरणे "नास्त्येवजन्यंसुखं सिद्धस्यैव सुखस्याभिव्यक्तिहेतुत्वादितिवचनेन व्यक्तमेवनित्यसुखस्याभिव्यक्तिप्रतिभासेन विशिष्टसुखस्याभिव्यक्त्यनंगीकारादिति मंडनोक्तेः सूपपन्नत्वात्तत्रदूषणाभासोक्तिरप्याग्रहमूला विवरणाशयाज्ञानमूलाच । किंचाद्वैतमते विशिष्टयोरवच्छिन्नात्मसुखानवच्छिन्नात्मसुखयोर्व्यावहारिकभेदवत्वेन वृत्तिज्ञानवद्वृत्तिसुखस्य विनाशित्वेनांगीकृतस्यवैषयिकसुखस्य जन्यत्वाविरो-

धेन नास्त्येवजन्यं सुखमिति वक्तुमशक्यतया तथोक्तेरनुचितत्वप्रसंगेन विवरणग्रंथस्य त्वत्कल्पिताशयस्यासंभवात् । विषयाभिव्यक्तं जन्यं सुखं नित्यसुखब्रह्माभिन्नमितित्वदुक्तदुराशयांगीकारे विशिष्टसुखस्य जन्यत्वेनाभिव्यक्तिकथनं कथमुपपन्नंभवेत् । घटादेरिव नित्यसुखाद्व्यावहारिकभेदमात्रेण जन्यत्वसंभवात् । अन्यथा घटादेरपि कारकव्यापारैरभिव्यक्तिरेवंत्यापातात् । तस्मान्नित्यमेवसुखं विषयैः किंचिद्व्यज्यते - तदेवविषयसुखं । चरमवृत्त्या-अज्ञाननाशेनसम्यग्व्यज्यते - तदेवमोक्षसुखमित्येवविवरणाशयोवक्तव्यः । ततश्च स्वरूपतोनित्यत्वान्नतत्रविरागसंभव इति । तस्मादत्रदीपिकाकारकल्पनस्यात्याभासत्वाद्ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

यदपि ॥ चंद्रिकायामित्यारभ्य सर्वं सुस्थमित्यंतेन ग्रंथेन शमदमादीतिभाष्यस्थादिपदेनैकवाक्योपात्ततितिक्षादेरेवग्रहणं - नतु वाक्यांतरावगतविवेकादेरपीति । तदप्यसारं ॥ सर्वशाखाप्रत्ययन्यायेनविधीनामेकत्वंस्वीकृत्येतित्वदुक्तरीत्यैवापाततोभिन्नवाक्योपात्तत्वेपि त्वद्विवक्षतवास्तवैकविध्युपात्तत्वस्य विवेकादावप्यक्षुण्णत्वात् । उपरतपदस्य सन्यासिपरत्वकल्पनेपि उपरतपदस्वारस्यानुरोधेन विषयोपरमरूपविषयालंबुद्धिमत्वोपरागेणैवसन्यासिप्रत्यायकतया अवश्यांगीकार्यतयाविरागस्य तत्पदोपात्ततया अवर्जनीयत्वात् । पश्येदित्यत्र श्रवणादिरूपविचारात्मक साधनीभूतज्ञानस्यैव विवक्षणीयत्वेनसाध्यज्ञानविवक्षाया अयुक्तत्वात् । अन्यथा "शांतादिर्भूत्वापश्ये" दितिश्रुतौशमादीनांब्रह्मविचारांगत्वेनतत्रतेषामधिकारताबोधकत्वंत्वदभिमतंव्याहन्येत । नहिशमादिः फलीभूतज्ञानांशेप्यंगतयाधिकारतामर्हतीति तत्रापिसंमतं । एतेन मंडनोपरिदूषणजल्पनमप्यपास्तं । तस्मादत्रपरोक्तस्याभासत्वाद्ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

यदपि ॥ यत्तु चंद्रिकायामित्यारभ्य प्रकाशप्रसरे अतीतोपलक्षणतास्थले कारणात्मनावस्थानमादायैतत्कार्यस्यनिर्वाह्यतया प्रकृते चरमवृत्तेः

कारणात्मनोपूर्वमपिसत्वान्नवृत्त्युपलक्षितात्मरूपस्य मोक्षस्यासिद्धत्वमित्युक्तं । तदयुक्तं ॥ नहिक्लिष्टः काक एक व्यावर्तकः । किंतु काकसमानाधिकरणव्यावृत्तिधीदशाप्रकाशमानोत्तृणत्वादिकमेव । भाविपाकेनपाचकानुमानस्थलेपिपाकसमानाधिकरणपाचकासाधारणधर्मस्यैव व्यावर्तकत्वात् । प्रकृते वृत्तिसमानाधिकरणासंकीर्णस्वरूपमेव व्यावर्तकमितिसंसारदशायांतदप्रकाशान्मुमुक्षासंभवः । अन्यत्रभाविनउपलक्षणत्वेपि नप्रकृतेतत्संभवः किंतु भूतोपलक्षणत्वमेव । एतेनवृत्त्युपलक्षितात्मनः साध्यत्ववचनस्योपलक्षणमात्रविषकत्वमयुक्तं । विशिष्टविधेर्विशेषणोपसंक्रमणेप्युपलक्षणोपसंक्रमणाभावादिति प्रकाशप्रसरोक्तमयुक्तं । विशेषणोपलक्षणयोर्द्वयोरपि व्यावर्तकत्वाविशेषेवैषम्यायोगात् । वस्तुतस्तु ॥ मोक्षस्य साध्यताव्यवहारो गौण एव । एतेन कन्यादानादिनिश्चयोत्तरंजामातृत्वादिव्यवहारदर्शनाद्भाविन उपलक्षणत्वमिति प्रसरोक्तमपास्तं । तत्र शास्त्ररीत्याकन्यापतित्वप्राप्तिनिमित्तकत्वात्तद्व्यवहारस्य । अयमाशयः निवृत्तिरात्मामोहस्येत्यस्य बंधसामान्याभावोमुक्तिः नतुवृत्तिर्मुक्तावंतर्गतेतिविट्ठलेशीयेप्युक्तं । अविद्यानिवृत्त्युपलक्षितात्मन एव मोक्षत्वं । तदुपलक्षितत्वं तत्स्वरूपमेव । एतेन तस्यविशिष्टवेषेण विनाशित्वमिति मंडनोक्तमपास्तं । अत एव सर्वमनवद्यमिति । तदविमर्शसुंदरं ॥ तथाहि ॥ नच वृत्त्युत्पत्तेः प्रागात्मनस्तदुपलक्षितस्यसत्वान्मुक्तिः स्यादिति वाच्यं । पाकोत्पत्तेः प्रागयं पाचक इति व्यवहाराभावेन तदुपलक्षितत्वाभावात् । ननु इदानीमयं पाचक इत्यादावेतत्कालीनस्वनिष्टपाचकत्वसंबंधेनव्यावर्तितोयमितिज्ञानं जायते । कालश्चस्थूलएवबोध्यते । तेन पाककृत्यभावकालेपिताहशव्यवहारोपपत्तिः । ताहशस्थूलकाले किंचित्क्षणावच्छेदेन कृतेरुत्पादात् । कालविशेषाघटितस्तुव्यवहारःकृत्युत्पत्तेः प्रागपीष्ट एव । एवं वृत्त्युत्पत्तेः प्राक्कालघटितोयं मुक्त इति व्यवहारस्त्विष्टः । शतवर्षात्मकंवृत्ति तत्प्रागभावोभयाधिकरणं-

कालमादाय वृत्तिप्रागभावदशायामप्ययमस्मिन्काले मुक्त इति व्यवहारोपीष्ट एव । परंतु यत्कालस्यवृत्तिप्रागभावमात्राधिकरणत्वं तत्कालमादाय व्यवहारस्तु न जायते । मुक्तपदार्थतावच्छेदकाज्ञाननाशपदार्थकोटिप्रविष्टवृत्तावेव समभिव्याहृतकालान्वयस्य व्युत्पत्तिसिद्धत्वादितिचेन्न । उक्तरीत्यंगीकारे चैत्रीयपाकाधिकरणीभूतदिवसोत्तरदिवसमात्रतात्पर्यकस्येदानीमयंपाचकइतिव्यवहारस्य - इदानीमपि" शुक्तो मुक्तो वामदेवश्च मुक्त इत्यादिपौराणिकव्यवहारस्यचाप्रामाण्यापत्तेः । समभिव्याहृतकालान्वयस्य पाके वृत्तौ च बाधितत्वात् । तत्रेष्टापत्तौचस्थूलकालमादायापितथाव्यवहारस्यांगीकर्तुमशक्यत्वेन सोप्यनंगीकरणीय एव स्यात् । तत्रापीष्टापत्तौपाककृतिकाल एव पाचकइतिव्यवहारस्य बलात्प्राप्त्याविशेषणविधयैव व्यवहारइत्यापत्तेः । तथाच पाककृतेरुपलक्षणतया व्यवहारमभिलषतोक्तदोषपरिहारायपाकप्रागभावमात्रकालेपि भाविपाककर्तृत्वमादायतद्धेत्तृणामयं पाचक इति व्यवहारस्त्विष्टएवेति वक्तुं युक्तं । यदिनास्तीत्याग्रहः ॥ तदातदुत्पत्तिक्षणमारभ्यविद्यामानधर्मविशेषं तत्प्रागभावध्वंसाधिकरणत्वंवोपादायताद्दशव्यवहारोवारणीयः । प्रकृते शुद्धात्मनि वृत्तिध्वंसादेः कस्यापि धर्मस्याभावात् - वृत्त्युपलक्षितत्वं तत्रान्यद्वक्तुंनशक्यमित्यात्मैवाज्ञाननाशइत्यागतं । पाकसमानाधिकरणतत्प्रागभावध्वंसादिवद्वृत्तिसमानाधिकरणताद्दशधर्मांतराभावात् । प्रकाशमानासंकीर्णात्मस्वरूपस्याव्यावर्त्तकत्वाच्च । तदेवहिसर्वतोव्यावृत्तमात्मनो रूपं । नहि ततोन्यत्तद्व्यावर्त्यतदुपलक्षितं रूपमस्ति । उपलक्षितस्यैवोपलक्षणत्ववचनमनुचितमेव । वृत्त्युपहितस्याज्ञाननाशत्वमित्यस्य वृत्तेरेवाज्ञाननाशत्वमितिपक्षानतिरेकेण तद्दूषणेनैव दुष्टत्वात् । तस्माच्छुद्धात्मन एवाज्ञाननाशत्वेपर्यवसानात् । वृत्तेःप्रागप्ययंमुक्त इति व्यवहारप्रसंगोदुर्निवार एव । उत्तरकाल इव पूर्वकालेप्यज्ञानावस्थानायोगादज्ञानस्वरूपस्यैव विलोपप्रसंगः । नाशकालेप्रतियोगिसत्वासंभवात् । आत्मरूपमोक्षस्य कृत्यसाध्यतयापुरुषार्थ

त्वानुपपत्तिश्च । नच वृत्तेः स्वेतरसर्वकार्यनाशरूपाया उपलक्षणत्वात् - वृत्तेःप्राक्तदभावान्नमुक्तव्यवहारः । नाप्यविद्यानिवृत्तिरूपपुरुषार्थस्य साध्यत्वमनुपपत्तिश्चेति वाच्यं । वृत्तेर्नाशाभावं तदुपादानमनआदीनामपिसत्वापत्यासंसारस्यैव प्राप्तत्वेनमुक्तवाचोयुक्तेरयोगात् । वृत्तेर्नाशमंगीकृत्यात्मातिरिक्तत्वेशुद्धात्ममात्रावस्थानायोगः । आत्ममात्रत्वेकृत्युद्देश्यत्वानुपपत्तिः । नच वृत्तिरूपाज्ञाननाशार्थमेवकृतिरस्त्वितिशंक्यं । वृत्तेः स्वेतरसर्वकार्यनाशरूपत्वेन दुःखनाशाज्ञानादिनाशरूपतया कृत्युद्देश्यत्वेसर्वसुखनाशत्वबुध्येच्छाविषयत्वाभावस्यापि प्राप्तेः । नच नित्यानंदव्यक्तिहेतुत्वादिच्छाविषयत्वं । विषयसुखेष्वस्थिरत्वबुध्यामुमुक्षोरिच्छाभाववच्चरमवृत्तिरूपदुःखादिनाशेप्यस्थिरत्वबुध्या मुमुक्षोस्तत्रेच्छायोगात् । वृत्तेरेवाज्ञानादिनाशत्वे तत्करणीभूतवाक्यस्यैवाज्ञाननिवर्तकत्वापत्याज्ञानेनैवाज्ञाननिवृत्तिरितिमतहानिः । तस्माद्वृत्तेरविद्यादिनाशरूपत्वादिकल्पनमयुक्तमेव । ननुनात्ममात्रंमोक्षः - किंत्वविद्यानिवृत्तिलक्षणः पंचमप्रकारआत्मान्यः । अतो न सदद्वैतभंगः ॥ यद्वा अविद्यानिवृत्तिरूपोमोक्षआत्मान्यःसत्य एव । नचाद्वैतभंगः ॥ अभावद्वैतांगीकारात् । तस्मान्मुमुक्षायुक्तेतिचेदुच्यते । आद्यकल्पे - सत्वं - असत्वं - देशकालव्यवस्थयासदसत्वंचेतिप्रकारत्रयस्यैवानुभूयमानत्वेन चतुर्थप्रकारस्यैवाभावात्पंचमप्रकारतामोक्षस्याप्रामाणिकत्वात्सुतरामनुपपन्नैव । अस्तुवा तथापि मोक्षात्मभेदःमिथ्या सत्योवा - नद्वितीयः - अद्वैतहानेः । आद्ये मिथ्याभूतोसभेदोनिवर्त्यतेनवा - नेतिपक्षेसंसारानुवृत्तिप्रसंगः । सर्वदृश्योच्छेदरूपमोक्षाभावप्रसंगश्च । अविशेषात् ॥ आद्येभेदनिवृत्तेर्भेदिनिवृत्यधीनत्वेन तत्रात्मनो नित्यतया मोक्षनिवृत्त्यैव भेदनिवृत्तिर्वाच्येत्यनिर्मोक्षप्रसंगः । यद्वेत्याद्वितीयकल्पेप्यभावद्वैतांगीकारेभेदस्याप्यन्योन्याभावरूपत्वेन सत्यतापातः । श्रौताद्वितीयशब्देन भावस्येवाभावस्यापि निषेधबोधने अविशिष्टेप्यभावस्यसत्वंनभा-

वस्येत्यत्र नियामकाभावेनभावस्यापिबलात्सत्यताप्राप्त्यासदद्वैतभंगापत्तेः । अभावस्य सत्यत्वे तन्निष्टसप्रतियोगिकत्वादिभावधर्माणामभावसमसत्ताकत्वनियमेन नांतरीकतयानेकभावानामपिसत्यतांगीकारापत्तेः । किंच तादृशाभावः - किं दृश्यांतरे वर्तते - ब्रह्मणि वा - आद्ये दृश्यसामान्योच्छेदरूपमोक्षायोगः । द्वितीये ब्रह्मणि तादृशाविद्याध्वंसाधिकरणत्वस्य - ध्वंसेच ब्रह्माधिकरणकत्वरूपभावस्यापि सत्यता दुर्निवारैव । अधिकमाकरे व्यक्तं । अत्रापि भेदपक्षोक्तं दूषणमपि जागर्त्येव । अविद्यानाशस्यतदुपलक्षितात्मरूपत्वेत्वात्माश्रयादिप्रसंगात्प्रकाशमानाप्रकाशमानयोरैक्यायोगात् - स्वस्यैव स्वोपलक्षणतायास्त्वदनुभवैकवेद्यत्वेनाप्रामाणिकत्वात् - व्यर्थत्वात् - अपसिद्धांतादिप्रसंगाच्चाशक्यशंकं । नच वेदांतजन्याखंडाकारात्मसाक्षात्कारस्योपलक्षणत्वविवक्षायां जीवन्मुक्ते शुकवामदेवादौ मुक्तव्यवहारस्येष्टत्वेपि तादृशचरमवृत्तेरुपलक्षणत्वविवक्षायां तादृशव्यवहारो नेष्ट इति वाच्यं । तस्य पौराणिकत्वेनानपलपनीयत्वात् । जीवन्मुक्तिदशायां विवक्षितोपलक्षणाभावेपि तदुपलक्षितस्य सत्वात् । नहि विशेषणाभावे विशिष्टाभाववदुपलक्षणाभावे उपलक्षिताभावः प्रामाणिकः । भूतस्येव भाविनोप्युपलक्षणत्वे प्रामाणिकत्वादंगीकार्ये । वस्तुतस्तु ॥ मुक्तिरेवापाद्यते । नतु व्यवहार इति नोक्तदोषगंधोपि ॥ एतेन भाविपाकेन पाकानुमानस्थले इत्यादि दुरुक्तिरपास्ता । अनागतादिलिंगेनानुमितिदर्शनेन ससामार्थ्यलिंगज्ञानस्यैवानुमानतया भाविपाकज्ञानातिरिक्तानुमापकासंभवाच्च । प्रकृते तादृशधर्मांतरस्याशक्यकल्पनत्वात् । स्वस्यैव स्वोपलक्षणतायानिराकृतत्वाच्चेति । यत्तु - तदुक्तमद्वैतरक्षणइत्यादि । तद्बालभाषणं ॥ स्वरूपमात्रस्य स्वस्वरूपव्यावर्तकत्वरूपोपलक्षणत्वविषये अविद्यानिवृत्तेः स्वरूपसुखाभिव्यंजकत्वबोधकतद्ग्रंथसंमतिकथनस्याकांडतांडवायितत्वात् । अविद्यानिवृत्तिरेव मोक्ष इति पक्षस्तु दूषित एव । एतेन यत्तु चंद्रिकाप्रकाशे इत्यादिकमपास्तं ।

पंचमप्रकाराप्रामाणिकतायाः समर्थितत्वात् । भाविनोप्युपलक्षणत्वसंभवेन संसारदशायां मुक्त इति व्यवहारः स्यादिति वदंतं प्रतिमुक्तव्यवहाराभावेनो पलक्षणत्वनिराकरणे अन्योन्याश्रयाद्यापाताच्चेति । एतेनैवायमत्र निष्क र्षइत्यादितदीयदुरुक्तमप्यपास्तं । मोक्षे औपचारिकपुरुषार्थताया अत्यंता-युक्तत्वात् । संसारे मुक्तव्यवहारापत्तेरनिवारणाच्चेति । अतएव पर-मार्थतस्त्वित्यादिकं निरस्तं । विस्मृतकंठमणिरित्यदिना प्राप्तब्रह्मप्राप्तेः पुरुषार्थत्वस्याकरे दूषितत्वात् । मोक्षस्य ज्ञानसाध्यताव्यवहारस्य श्रौतस्य गौणत्वोक्तेरनुचितत्वाच्चेति ।

यदपि ॥ एतेनेत्यादिना भाविनएवोपलक्षणत्वमिति प्रकाशप्रसर-भाववर्णनं - तदप्यनुक्तोपालंबनत्वादनादेयमेव । एवं कन्यादाननिश्चयोत्त-रमेव कन्यापतित्वादिजल्पनमप्यशुद्धमेव । पतित्वस्यसप्तपद्यंतसंस्कारसा-ध्यत्वेन पूर्वं तस्यालाभात् । भाविराज्यज्ञानेन राजपदव्यवहारस्तु राजपद-स्याभिषिक्तक्षत्रियपरत्वेन तस्य तदानीमविद्यमानतयोपलक्षणविधयैव तद्व्यवहा-रप्रामाण्यस्य समर्थनीयत्वात् भाव्युपलक्षणमादायैव निर्वाह्यः । अन्य था राजपदलक्षणाद्यापत्तेः । खंडनकारेण न्यायभास्करखंडने विठ्ठलेशी-यकल्पनस्य दूषितत्वेन प्रकृते तत्संमतिकथनमनादेयमेव । एतेन नहि कारणात्मनावस्थितावृत्तिरज्ञानविरोधिनीत्याद्यपहस्तितं । वृत्तेः पश्चादिव पूर्वमपि वृत्युपलक्षितआत्मास्तीत्यत्रोक्तप्रलापस्यासंबद्धत्वात् । अज्ञाननि-वृत्तेरप्यात्ममात्रत्वे तत्सत्वस्यावश्यकत्वाच्चेति ॥

यदपि ॥ मंडने इत्यादि । तदप्ययुक्तं ॥ खंडनकारेण भाविनउपलक्षणत्वव्यवहारस्य कादाचित्कताया उक्ततयोपलक्षणत्वमात्रस्य तत्संमतत्वावगत्यापुनरपि भाविन उपलक्षणत्वखंडनमसंगतमिति स्वारसिकदूष-णष्य मंडनाकारैरुक्तस्य सूपपन्नत्वात् । मोक्षस्य विशिष्टरूपत्वेत्वन्मते विशिष्टस्य विनाशित्वनियमेन मोक्षस्य विनाशप्रसंग इति मंडनोक्तदूषणोपरि

अविद्यानिवृत्युपलक्षितत्वस्य तत्स्वरूपत्वकथनस्य - स्वरूपस्याप्युपलक्षणत्व-विषये अद्वैतसिध्यादिसंमतिकथनस्यच कर्णे स्पृष्टे कटिंचालयसीतिन्यायग्रस्त-त्वात् । अन्यथा विशिष्टत्वस्यापि स्वरूपत्वापातादिति । तस्मादत्र दीपिकाकारोक्तस्याभासत्वाद्ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

यदपि ॥ अहं मुक्तः स्यामित्यत्राहं पदेनाहंकारविविक्तमात्म-स्वरूपं विवक्ष्यते । यथा ब्राह्मणोहं स्वर्गीस्यामित्यत्र शरीरविविक्तमात्म-स्वरूपमित्यादि । तदेतद्बालजनमनोरंजनं ॥ अद्वैतचंद्रिकादावहमा-स्पदस्याहंकारस्यांतःकरणतादात्म्यापन्नचित्संवलितचिद्रूपत्वविवक्षया क्वचि-दहंपदस्यात्मनि मुख्यावृत्तिः । क्वचिच्चित्संवलिताचिद्रूपत्वविवक्षया लक्ष-णाद्यमुख्या वृत्तिरित्युक्तत्वेन तदीयकर्तृत्वाध्यासार्थमंतःकरणतादात्म्यापन्न-तदवच्छिन्नविशिष्टात्मन एवाहंप्रत्ययविषयत्वस्योपपादितत्वात् - खंडनकारे-णापितथैवोक्तत्वाच्चाहंकारविविक्तात्मनोऽहंपदेन विवक्षितुमशक्यत्वात् । ब्राह्मणत्वादेर्देहधर्मत्वेन ब्राह्मणोहमित्यादौ गौरोहमित्यादाविव देहधर्मेण देहता-दात्म्यापन्नात्मन एवाद्वैतमतेऽहंपदेन विवक्षिततया तदुदाहरणस्यानादरणीय-त्वात् । इच्छामात्रस्य स्वर्गासाधकत्वेन तदिच्छापूर्वकसांगयागाद्यनुष्टान-द्वारैवेच्छायास्तत्संपादकतया यागकर्तुर्यजमानस्याधीतस्वाध्यायस्य स्वर्गादेः पारत्रिकपुरुषार्थत्वं जानतो यागादेर्जन्मांतर एव फलदत्वमनुभवतएतज्ज-न्मन्येतद्देहावच्छेदेन स्वर्गेच्छाया एवायोगेनेच्छावच्छेदकशरीरस्य स्वर्गानन्व-यस्य युक्तत्वात् । परंतु एतज्जन्मनि ब्राह्मणदेहावच्छेदेन यागानुष्टा-तुर्मम जन्मांतरे शरीरांतरावच्छेदेन स्वर्गो भूयादिति तात्पर्येण जन्मांतरे-शरीरांतरावच्छेदेनाहं स्वर्गी स्यामित्येवेच्छोदयेनाहंगेहीतिवदहंब्राह्मणइत्यादि-व्यवहाराद्यब्राह्मणादिशरीरमप्यहंपदार्थघटकं । किंतु स्थूलांतःकरणविशि-ष्टात्मैव । तस्य तच्छरीरांच्छेदेप्यनुत्सन्नस्येच्छाविषयस्वर्गान्वियोप्यक्षुण्ण एव । जन्मांतरे स्वर्गमनुभवत इहयागाद्यनुष्टातुः स्वर्गेच्छो ब्राह्मणादिशरी-

रविशिष्टस्य चेतनस्य शरीरभेदेप्यात्मभेदानंगीकारेणात्माभेदान्नास्माकं क्षतिः प्रत्युत परमते अंतःकरणस्यैवारोपितकर्तृताकत्वेन तदुपाधिककर्तुरंतःकरणविशिष्टस्य तन्नाशेन नाशांगीकारात्कर्तुभोक्त्रोर्भिन्नतयोक्तेच्छाफलयोः सामानाधिकरण्यासंभवः । शरीरादिकंतूपकारकमात्रं । नह्युपकारकस्यापिफलान्वयोदृष्टइष्टोवा । अन्यथैतत्क्षणावच्छेदनबुभुक्षोरुत्तरक्षणभोजनस्थलेप्येतत्क्षणविशिष्टस्य भोजनानन्वयापत्याकुत्रापि फलेच्छयोः सामानाधिकरण्यायोगप्रसंगः स्यादिति ॥

यदपि एतेनेत्यादि प्रकाशप्रसर दूषणाभासवचनं । तदप्ययुक्तं ॥ त्वन्मते भिन्नभिन्नांतःकरणवतोः कर्तृभोक्त्रात्मनोर्भिन्नत्वात्स्वर्गकामनास्वर्गान्वययोर्नसामानाधिकरण्यसंभव इत्यत्र स्वर्गेप्यात्मनः काल्पनिकं कर्तृत्वं न पारमार्थिकमित्यादिपरिहारोक्तेरसंबद्धप्रलापत्वात् । एतेन यस्य शरीरविशेषविशिष्टस्य स्वर्गेच्छानतस्य स्वर्गान्वय इत्याद्युक्तमपास्तं । उक्तेच्छाश्रयांशे शरीरस्योक्तविधया विशेषणत्वायोगाच्चेति । कदाचिदेव ब्राह्मणत्वादिकमहमर्थ विशेषणमित्यादिकंत्वनुक्तोपालंबनमेव ॥

यदपि ॥ काल्पनिकमिच्छाश्रयत्वं शुद्धस्यापि वर्तत एवेत्यादि । तदप्यशुद्धं ॥ शुद्धात्मन इच्छाश्रयतयाहंप्रत्ययविषयत्वस्य त्वदन्यैरनभ्युपगमेनापसिद्धांतात् । तत्पक्षस्य दूषितत्वाच्च । कल्पितेनापि संसारेणास्पृष्टचेतनाभावे नित्यमुक्तश्रुतेर्निर्विषयत्वापातादेरुक्तत्वाच्च । अतएव भट्टपादसंमतिकथनमप्यपास्तं । तदुक्तेर्महात्मन एतद्देहावच्छेदेन स्वर्गादिगमनसमर्थस्य रैवतादेः स्वर्गादिगमने तच्छरीरस्यापि गमनेनात्मनिष्ठंगंतृत्वंशरीरेप्युपचर्यत इत्याद्यन्यार्थकतया त्वदभिमतासाधकत्वात् ॥

यत्तु । नफलेच्छावत एव फलान्वयः । पितृगतायामपि पुत्र पूततेच्छायां पुत्रस्यैव पूतत्वदर्शनादित्यादि । तत्प्रकाशप्रसर एव सम्यक्समाहितमिति पुनरप्यत्र तन्निराकरणं मृतमारणमित्युपेक्षितं । यदत्रोक्तं ॥

सद्युपकारकोपकार्यभावमात्रेणान्यगतफलेच्छया अन्यस्य फलसंभवः । मातृगतपूततेच्छयापि पुत्रपूतत्वापत्तेरित्यादि । तदिदं नामंदधीगम्यं । दयालुप्रवृत्तावप्यन्यपलेच्छाया उपकारकत्वनिबंधनत्वात् । उपकार्योपकारकभावंविना न्यस्यान्यफलेच्छाया एवायोगाच्च । नहीच्छामात्रं फलनिष्पादकं-किंतु तत्संपादककर्मानुष्टानसहितं । ततश्च कर्मानुष्टानद्वारोक्तेच्छायाः फलसंपादकत्वात्कर्मानुष्टातृतायाश्चस्त्रीत्वान्मातुर्नयुज्यत इति । तदिच्छाया अपि साक्षाद्धेतुत्वाभावेपि पतिप्रेरणादिद्वारा पुत्रपूतताप्रयोजकत्वस्य प्रामाणिकतयेष्टत्वाच्चेति ॥

एतेन ॥ मंडनोपरिदूषणाभासजल्पनमपि दूरीकृतं । अंतःकरणावच्छिन्नचेतनस्याहमित्यनेन विवक्षेत्यादितदुक्तेः खंडनकारवाक्यानुसारेण प्रवृत्ततया तत्रोक्तदूषणासंगतेः ॥

यदपि ॥ एतेन चिन्मात्रं मुक्तं स्यादितीच्छापत्तिरिति शंकापि परास्ता । इच्छाभासकसाक्षिणोहमर्थभासकत्वनियमादिति । तत्स्वव्याहतं ॥ पुत्रः पूतः स्यादित्यहमर्थानुपरक्तेच्छायास्त्वयैवांगीकृतत्वात् । दयालूनामस्य दुःखं माभूदितीच्छया तत्परिहारे प्रवृत्तिदर्शनाच्च । तत्रापि पूतपुत्रः स्यामितीच्छाकल्पने पूतपुत्रकत्वस्यैव फलत्वकल्पनेनेच्छाफलयोः सामानाधिकरण्यस्यैव प्राप्तेः । सर्वत्रैवं कल्पनाया असंभवाच्चेति । तस्मादत्र परोक्त दूषणाभासानामकिंचित्करत्वाद्ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

यदपि ॥ विवेकाद्यानंतर्यं मुमुक्षाद्वारैवाथशब्दार्थ इति भामतीमते "यथोक्तसाधनचतुष्टयानंतर्यमुपदिश्यत" इति भाष्यविरोधः । मुमुक्षामात्रानंतर्यस्याथशब्दार्थत्वसंभवात् । मुमुक्षाहेतुतया तत्कथने विवेकहेत्वानंतर्यमप्यथशब्दार्थः स्यादिति प्रकाशप्रसरोक्तमपास्तमिति । तदपि दत्तोत्तरं ॥ मुमुक्षादावुत्कटताविवक्षया पूर्वस्य तद्धेतोः शमादेरुल्लेख

इति कल्पने विवेकोत्कटत्वायैवतद्धेतुपरीक्षादेरुल्लेखप्रसंगस्यापरिहारात् । नत्र परीक्षाधीनतागर्भितविवेकस्य विवक्षितस्य नानुत्कटत्वमिति वाच्यं । सत्यानृतविवेकमात्रस्य भामत्यादौ विवेकरूपताया उक्तत्वात् । अन्यथोक्तोत्कटविवेकहेतुकविरागादेर्विवक्षया तस्योत्कटत्वनियमेन व्यावर्त्याभावात्तत्कथनस्यैवायोगात् । तत्रोक्तविशिष्ट विवेकाधीनो विरागो नाभिप्रेत इति तु न प्रेक्षावद्भिरादरणीयं । तत्रोक्तविरागहेतुविरागोत्कटत्वार्थमेव तद्धेतोरुल्लेखस्यापाद्यमानत्वात् । ततश्च विशिष्टमुमुक्षादिविवक्षायां पूर्वपूर्ववैयर्थ्यं मुमुक्षादिमात्रविवक्षायां विवेकहेत्वानंतर्यस्यापि कथनमावश्यकमिति यत्किंचिदेतत् ॥

यत्तु ॥ मंडने यज्ञादेरपि मुमुक्षाद्वागानंतर्यप्रतियोगित्वापत्तिरित्युक्तमयुक्तं । भामतीकारैरेव कर्मणां ज्ञानानुपयोगस्योक्तत्वादित्यादि । तत्तदज्ञानविजृंभितं ॥ तथाहि ॥ अत्र भामतीवाक्यानि । "तथाहि नित्यादिकर्मानुष्टानाद्धर्मोत्पादः - ततः पाप्मा निवर्तते - सह्यनित्याशुचिदुःखरूपे संसारे नित्यशुचिसुखख्यातिलक्षणेन विपर्यासेन चित्तसत्वं मलिनयति । ततः पापनिवृत्तौ प्रत्यक्षोपपत्तिभ्यां संसारस्यानित्याशुचिदुःखरूपतामप्रत्यूहमवबुध्यते । ततोस्यास्मिन्ननभिरति संज्ञं वैराग्यमुपजायते । ततस्तज्जिहासोपावर्तते । ततोहानोपायंपर्येषते । पर्येषमाणश्चात्मतत्वज्ञानमस्योपायइत्युपश्रुत्यतज्जिज्ञासते । ततः श्रवणादिक्रमेण तज्जानातीत्यारादुपकारकत्वं तत्वज्ञानोत्पादंप्रति चित्तसत्वशुध्या कर्मणां युक्तमिति । एवं - वैराग्योत्पादोपयोगिनः प्राग्भावीय कर्मानुष्टानादेव तत्सिद्धेरिति । अन्यत्रापि - अनधीत्यद्विजोवेदाननुत्पाद्यतथात्मजान् । अनिष्ट्वाचैव यज्ञैश्च मोक्षमिच्छन्व्रजत्यध इति वचनंत्वशुद्धसत्वपुरुषाभिप्रायकमिति" ततश्चोदाहृतभामतीग्रंथसंदर्भस्य मंडनोक्ताविरोधितयात्र दीपिकाकारोक्तं दूषणमेव भामतीग्रंथांध्यमूलमनादेयमेवेति संक्षेपः ॥

यत्तु ॥ मुमुक्षामात्रेण प्रवृत्तस्य विचारस्य शिथिलत्वापत्त्या विवेकोक्तिरित्यादि । तदप्यज्ञानमूलं ॥ विवरणैकदेशिमते विवेकस्य विरागहेतुताया अनंगीकारात् । वैराग्यशमदमादि मुमुक्षासु सतीषु अन्यत्रोपक्षीणविवेकाभावमात्रेण फलपर्यंतविचाराभावादर्शनोक्तेः सूपपन्नत्वात् । विवेकस्य विरागहेतुत्वेतु तद्ग्रहणमपीष्टमेव । नहि विवरणैकदेशिमते विवेकस्य विरागहेतुतांगीकृता । विवेकस्योक्तरीत्यान्यथासिद्धत्वाच्चेति । तस्मादत्र परोक्तस्याभासत्वाद्ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

यत्तु ॥ नह्यतःपदार्थस्य जिज्ञासाकर्तव्यतायामेवान्वय इति कोपि नियम इत्यादि । तन्न ॥ अथातो धर्मजिज्ञासा - अथातो दैवीमीमांसा - अथातो दर्शपूर्णिमासौ व्याख्यास्याम इत्यादावुक्तान्वयस्यैव दर्शनात् । लोकेपि - अतो मंतव्यं -अतो भवत्ययमर्थकलापः सूत्रसूचित इत्यादावतःशब्दार्थस्य समभिव्याहृतोत्तरपदार्थान्वयस्य सर्वसंमतत्वेनोक्तप्रयोगप्राचुर्यस्यैव नियमग्राहकत्वात् ॥

यदपि । अतो धर्मजिज्ञासेत्यत्र धर्मविचारस्य सप्रयोजनत्वपरस्यान्यस्याभावादतःपदस्य तदर्थपरस्य कर्तव्यतायामन्वयोयुक्तः । प्रकृतेतु ब्रह्मजिज्ञासापदेन प्रयोजनलाभान्नातःशब्दस्य तदर्थस्य तत्रान्वय इति । तदपि न ॥ ब्रह्मजिज्ञासापदेनेव धर्मजिज्ञासापदेनापि निश्चिते विचारायोगेन संदिग्धतया धर्म एव विषयः तज्ज्ञानमेवावांतरं प्रयोजनमिति सूचनसंभवेन तेनैव सफलत्वलाभसंभवात् । प्रकृतेपि वक्ष्यमाणरीत्या ब्रह्मजिज्ञासापदेन प्रयोजनादिसूचनाऽसंभवेनातःशब्दस्य सफलत्वार्थताया आवश्यकत्वाच्च । तदुक्तं चंद्रिकायां ॥ "अथशब्देनाधिकारमत इत्यमुनाफलं । ब्रह्मशब्देन विषयं सूचयामास सूत्रकृदिति" । जिज्ञासापदस्य प्रयोजनसूचकत्वप्रत्याशामप्यनुपदमेवापाकरिष्यामः । एतेनातःशब्दार्थस्याथशब्दार्थानंतर्यप्रतियोगिन्यन्वये भामतीसंमति कथनमपास्तं ।

अनन्यलभ्यस्य सफलत्वरूपातःशब्दर्थस्य प्रधानसाध्यान्वयस्यैवोच्यमानत्वात् ॥

यदपि ॥ भामतीकारा नविरागादिकं वचनविशेषेणात्रसाध्यकोटौ प्रवेशयंति । तथाचाथशब्दार्थविचारावसरेन किमपि वाक्यमुपस्थितमितिनाथशब्दोपस्थापितत्वं तद्यथेहेतिवाक्यस्येत्यादि । तदतीव तोषावहंविदुषां । भाष्यव्याख्यानार्थं प्रवृत्तस्य भामतीकारस्याथशब्दव्याख्यानसमये अथशब्दार्थानंतर्यप्रतियोगिसाधनचतुष्टयरूपहेतुग्राहकप्रमाणाज्ञानकल्पनस्यात्यद्भुतत्वात् । अप्रमितहेतुकथनस्यासंभावितत्वाच्च । हेतुसमर्पकाथशब्देन तत्प्रमाणभूतवेदानुपस्थापने विषयसमर्पकब्रह्मशब्देनापि तत्प्रमाणवेदोपस्थितेरयोगात् । "ब्रह्मचवक्ष्यमाणलक्षणक" मितिभाष्यानुसारेण ब्रह्मशब्दस्य शब्दराश्यर्थकतायाः पंचपादिकादौ व्यक्तं दूषितत्वेन लक्षणादिनैव तत्र वेदोपस्थितेर्वाच्यतयाथशब्देनापि तुल्यन्यायतया लक्षणादिना तदर्थप्रमापकवेदोपस्थितेरवश्यवक्तव्यत्वाच्च ॥

यदपि ॥ अस्तुवा तद्यथेहेति वाक्यस्याथशब्देनोपस्थापनं । एवमपि स्वसमानयोगक्षेमाक्षय्यादिवाक्यात्प्राबल्यं तस्य न ब्रह्मविदाप्नोति परमित्यादिवाक्यांतरानपेक्षमवगंतुमलं । नहि लोकसिद्धन्यायानुवादः श्रौतार्थान्यथानयने प्रयोजक इत्यादि । तदपि भामत्यादिग्रंथांध्यमूलं । तथाहि ॥ भामत्यां ॥ "क्षयितानुमानोपोद्बलितंच तद्यथेहकर्मचित इत्यादिवचनं क्षयिताप्रतिपादकं अपामसोममित्यादि वचने जघन्यवृत्तितामापादयति । यथाहुः पौराणिकाः ॥ आभूतसंप्लवंस्थानममृतत्वं हि भण्यत इति" इत्याद्युक्तं ॥ पंचपादिकायां तु ॥ "ननु पुण्यस्याप्यक्षय्यफलत्वं वेद एवाहेत्युक्तं । न । तस्य वस्तुबलप्रवृत्तानुमानविरोधे अर्थवादस्य नित्यत्वप्रतिपादनासामर्थ्या" दिति । विवरणेपि ॥ 'ननु तद्यथेहेति सामान्यश्रुतिश्चातुर्मास्यादिविशेषादन्यत्रैव प्रवर्ततामितिचोदयति ।

ननु पुण्येति ॥ तत्रतावच्चातुर्मास्यश्रुतिः सुकृतस्याक्षयत्वमाह । न तत्फलस्य ॥ सत्यपि सुकृते फलस्यानुपभोगवत् क्षयोपपत्तेः । तत्र वाक्य श्रुतार्थं परित्यज्य फलाक्षयत्वविषयत्वकल्पनाप्रमाणविरुद्धेत्याह । नतस्येति ॥ वस्तुबलप्रवृत्ता व्याप्तिबलप्रवृत्तेत्यर्थः । अनुमानानुगृहीतश्रुतिविरोध इतियोजइतव्यं । हिरण्यदा अमृतत्वं भजंत इति श्रुतिर्वर्तमानापदेशायोग्यानुपलब्धिविरुद्धा । भजिष्यंते इति कल्पनापूर्ववत्प्रमाणविरुद्धा । अनुमानानुगृहीतदेवसर्गप्रलयश्रुतिविरुद्धा । तस्माद्ब्रह्मव्यतिरिक्तपुरुषार्थे अनित्यतया वैराग्यमुपपन्नमिति । ननु दोषस्य तुल्यत्वान्न ब्रह्मण्यपि प्रवृत्तिकारणमेतदिति तत्राह । यन्मुमुक्षुत्वाभाव इती''त्यादि। पंचपादिकायामन्यत्रापि । ''यत्पुनर्मुमुक्षुत्वाभावे निमित्तमुक्तं तत्राह । तथा ब्रह्मज्ञानादपि परं पुरुषार्थं दर्शयतीत्यादिकमुक्तं । तथाचोदाहृतग्रंथसंदर्भे ब्रह्मविदाप्नोति परमित्यादिवाक्य निरपेक्षमेवानुमानानुगृहीतत्वेन तद्यथेहेति श्रुतेः प्राबल्यस्योपदर्शितत्वात्तस्य वाक्यस्य लोकसिद्धार्थानुवादकत्वेन दुर्बलत्वप्रलपनं दीपिकाकारस्याज्ञानविलसितमेव । किंच कर्मफलानित्यत्वप्रतिपादकवाक्यस्य कर्मफले वैराग्यहेतुत्वस्य ब्रह्मज्ञानफलनित्यताप्रतिपादकवाक्यस्य मुमुक्षुत्वप्रयोजकतायाश्चोक्त्या परस्परसापेक्षतया द्वयोरपि वाक्ययोर्वैराग्योपपादकत्वमप्यसंभवदुक्तिकमज्ञानमूलंच । साधनचतुष्टयविवक्षायांतु अथशब्देनैव स्वार्थैकदेशविरागोपपादकतद्यथेहेतिवाक्यस्येव स्वार्थैकदेश मुमुक्षोपपादक ब्रह्मविदाप्नोतीत्यादिवाक्यस्याप्युपस्थितिसंभवेन तत्रापि ब्रह्मपदानपेक्षणाद्वैरूप्योक्तिरप्ययुक्तैव ॥

यदपि ॥ पूर्वोक्तरीत्या विवक्षणीयं वाक्यद्वयं न कथमपि वैराग्येणोपस्थापयितुमलमित्यादि । तदप्येतेन परास्तं ॥ तद्यथेहेतिवाक्यस्यैव वैराग्येणोपस्थापितत्वं ब्रह्मविदाप्नोतीत्याद्युपस्थापकत्वंतु मुमुक्षुत्वस्यैवेत्यर्थस्य पंचपादिकासंमत्या समर्थितत्वात् । शेषषष्टीपरिग्रहे साधारणे

शब्दे अभिप्रेतमर्थं विहायार्थांतरं परिगृह्य पुनस्तद्द्वारेणाभिप्रेतमर्थं प्रतिपद्यमानस्य व्यर्थः प्रायसस्स्यात् । प्रत्यक्षं ब्रह्मणः कर्मत्वमुत्सृज्य सामान्यद्वारेण परोक्षं कर्मत्वं कल्पयन्तो व्यर्थः प्रयास इत्यादिपंचपादिकानुसारेण ब्रह्मशब्देन वेदोपस्थितौ व्यर्थप्रयासदोषस्य जागरूकत्वाच्च । यदपि नित्यत्वेनाशंकितस्यामिथ्यात्वव्यवस्थापनं ह्यनित्यत्वप्रतिपादनं विना न संभवतीति । मिथ्यात्वश्रुतेश्चातुर्मास्यफलातिरिक्त विषयत्वशंकानिवारणं तदनित्यत्वप्रतिपादनेनैव कर्तव्यमिति तद्यथेहेतिवाक्योपन्यास एव योग्यः नतु नेहनानेत्यादेरिति च । तदपि महामोहविजृंभितं । दृश्यत्वजडत्वपरिच्छिन्नत्वादिहेतुभिः नेहनानेत्यादिश्रुतिभिश्चाद्वैतमते प्रपंचमिथ्यात्वस्य साक्षादेव साधितत्वेन मध्येऽनित्यत्वसाधनस्य त्वदनुभवमात्रगम्यत्वेनाप्रामाणिकत्वात् । ज्ञानत्वेन ज्ञाननिवर्त्यत्वस्य मिथ्यात्वरूपत्वाच्च । यद्यपि ज्ञाननिवर्त्यत्वान्यथानुपपत्या मिथ्यात्वसाधनमप्यस्ति । तथापि निवर्त्यत्वस्य ध्वंसप्रतियोगित्वरूपस्य प्रतियोगिसत्वसापेक्षस्य त्रैकालिकनिषेधरूपमिथ्यात्वप्रतिकूलत्वेन तत्वमस्यादीतिवार्तिकानुसारेण निवृत्तिपदस्यात्यंताभावरूपताया अद्वैतचंद्रिकादिसंमत्या प्रागेवोक्तत्वान्नतेनापि परस्य समीहितलाभः । तथाच अनित्यत्व बोधनेपि यावत्तत्सत्वं तत्प्रेप्सया तत्साधने प्रवृत्तिसंभवेन नात्यंतिकनिवृत्तिरूपविरागसंभवः । मिथ्यात्वबोधनेतु न कदापि कोपि तत्र प्रवर्तते । नहि नेदं रजतमिति ज्ञानोत्तरमपि रूप्यादौ प्रवर्तते । तस्माद्धामस्यभिमत विवेकोपपत्तये प्रपंचमिथ्यात्व ब्रह्मसत्यत्वबोधकवाक्योपन्यास एवोचितः । एतेनातःशब्दस्य सप्रयोजनत्वार्थत्वमेव स्वीकरणीयमित्यादिमंडनोक्तिरपि समाहिता । तस्यैवार्थस्योपपादयिष्यमाणत्वेनोचितत्वात् । अर्थांतरस्यायुक्तत्वाच्चेति ॥

यदपि ॥ तद्यथेहेत्यनेनावगतकर्मफलानित्यत्वरूपहेतुसमर्पणमेवात्रातःशब्देनापि क्रियते । एवंच सात्रयवत्वं यथाक्तकत्वसाधकं एवं ब्रह्मवेद

त्यादिकं तद्यथेहेतिवाक्यावगतकर्मफलानित्यत्वसाधकमिति । ब्रह्मवेदेतिवा क्यसहकृततद्यथेहेतिवाक्यार्थज्ञानं विचारसाधनमित्यादि । तदप्यसारं ॥ विमतः कृतकः सावयवत्वादितिप्रयोगवत् । कर्मफलमनित्यं ज्ञानफलस्य नित्यत्वादिति प्रयोगसंभवात् । द्वयोरपि नित्यत्वसंभवेन तत्रैवात्रानुकूल तर्काभवेनाप्रयोजकत्वात् । अन्यथा ज्ञानफलनित्यता बोधकापेक्षया अनुमानानुगृहीतत्वेन प्रबलया स्वार्थपरया कर्मफलानित्यत्वश्रुत्या तत्सिद्धौ कर्मफलानित्यत्वेन ज्ञानफलानित्यत्वसाधनप्रसंगात् । विवरणमते तद्यथेहेति- वाक्यस्य वैराग्यसाधनत्वेन ब्रह्मविदाप्नोतीत्यादेर्विचार साधनत्वांगीकारेण मिलितयोर्द्वयोरपि विचारसाधनत्वोक्तेरयुक्तत्वाच्च । एतेन विवक्षितंह्यत्रापि ब्रह्मवेदेत्यादिवाक्यसिद्धब्रह्मज्ञानपुरुषार्थत्वस्य तदितरा पुरुषार्थत्वपर्यवसित- स्यापि हेत्वंतरस्य ग्रहणं । अतःशब्दवैयर्थ्यशंकानिरासेनोक्तन्यायविषयता संभवत्येवेत्यादि । तदप्येतेन परास्तं ॥ कर्मफलानित्यत्वस्य वैराग्यहेतु त्वेन ज्ञानफलनित्यत्वस्य विचारप्रवृत्तिहेतुत्वेनच द्वयोरेकसाध्यसाधकत्वाभावेन हेत्वंतरत्वोक्तेरज्ञानमूलत्वात् । उक्तरीत्याथशब्देनैव मुमुक्षुत्वज्ञापकतया ब्रह्मवेदेत्यादेरपि उपस्थापनसंभवेनाथशब्दानुक्तार्थत्वासंभवादतश्शब्दस्य इत्थंचा थशब्दपरिगृहीतस्यैव साधनकलापहेतुत्वस्य हेत्वंतरेणापवादशंकायां तन्निराक- रणं पुनरप्यथशब्दोक्तहेतुत्वाभिधायिनातःशब्देन क्रियत इति विवरणोक्तं न युक्तमेव । अतइत्यनेन साधनकलाप हेतुत्वसाधकस्यापि हेतोरथशब्दानुक्त स्याप्रतिपादनेनापवादशंकावारणस्यासंभवात् । अन्यथा अथशब्देनैव त- त्स्यात् । कर्मफलानित्यत्वबोधकवाक्यस्येव ज्ञानफलनित्यत्वबोधकवाक्य- स्याप्युपस्थापनसंभवात् । सफलत्वादि हेतुसमर्पकतया अतश्शब्दस्य सार्थक्यं त्वनुपदमेव समर्थयिष्यामः । एतेन हेतुद्वयाभावेनेत्यादि- मंडनोक्तमपास्तमित्येतद्दूरीकृतं । द्वितंतुबंधनस्थले तंतुद्वयमिव प्रकृते एकस्मिन्साध्ये हेतुद्वयाभावस्योक्तत्वेनमंडनोक्तेस्सूपपन्नत्वात् । दुराग्रह-

मात्रमूलत्वादसत्प्रलापस्येति । तस्मात्परोक्तस्यायुक्तत्वाद्ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

यदपि ॥ नच सर्वानुभवसिद्धआत्मा संदिग्धोवा सप्रयोजनोवा । येन जिज्ञास्यस्सन् विचारं प्रयुंजीतेत्यत्रासंदिग्धत्वादिना विचाराभाव एव साध्यते । नतु जिज्ञासाभावः । नहि येनेत्यस्य जिज्ञास्यस्सन्निति विशेषणांशान्वयो व्युत्पत्तिसिद्धः । तथाच ज्ञानेच्छां स्वीकृत्यैव विषयाभावप्रयुक्तविचाराभावपूर्वपक्षस्य भामत्यां प्रवर्तितत्वादिति । तदिदं मोहमूलं ॥ भामत्यां यदि प्रसिद्धं निश्चयेन विषयीकृतं ततो न जिज्ञासितव्यं अथाप्रसिद्धं नैव शक्यं जिज्ञासितुं । अनुभूतेहि प्रिये भवतीच्छा । तस्मात्प्रसिद्धस्यं ज्ञातुं शक्यस्याप्यजिज्ञासनात् अप्रसिद्धस्येच्छाया अविषयत्वात् न ब्रह्मजिज्ञास्यमित्याक्षेप इति स्पष्टमुक्तं । तत्रयेच्छासंभवाभावनिमित्तक एव पूर्वपक्ष इति मंदधियामपि प्रतीयते स्पष्टं । तथाचेच्छामंगीकृत्य पूर्वपक्षः भामत्यामिति देवानां प्रियेण कथमवगतमिति दुरुक्तं तत् । एवं येनेत्यस्य विचारएवान्वये मध्ये जिज्ञास्यस्सन्निति विशेषणस्यानर्थक्यापातः भामत्यामसंदिग्धत्वस्येच्छाभाव एव हेतुत्वोक्त्या तद्विरोधः । नहि प्रत्यक्षं तत्वावेदकं । येन भेदगोचरं सदद्वैतानुमानंप्रतिक्षिपेत् । नहि ब्रह्मनिमित्तमात्रं ॥ येन कार्यभिन्नं सत् एकविज्ञानेन सर्वविज्ञानंप्रतिरुध्यादित्यादौ येनेत्यस्य सन्नंतविशेषणांश एवान्वयदर्शनेन तस्य व्युत्पत्त्यसिद्धत्ववचनमपि स्वाव्युत्पत्तिनिबंधनमेव ॥

यदपि ॥ धर्मज्ञानमनुष्ठानापेक्षं स्वर्गादिसाधनं न तथा ब्रह्मज्ञानमितरापेक्षं फलसाधनं । किंतु स्वत एव फलमिति । तदपि मंदधीमात्रगम्यं । ज्ञानाद्बंधनिवृत्तिस्सूत्रिता बंधमिथ्यात्वं गमयतीत्यादि विवरणादिग्रंथेषु ब्रह्मज्ञानस्य बंधनिवर्तकतयैव फलत्वावगमात् । अन्यथा प्रयोजनार्थमध्यासभाष्यानुत्थितिप्रसंगात् । तत्त्वमस्यादि वाक्यार्थसम्यग्धी-

जन्ममात्रतः । तरतिशोकमात्मवित्, विद्यैवतुनिर्धारणात्, इत्यादिप्रमाणविरोधात् । स्वतःपुरुषार्थत्वासंभवाच्च ॥ ज्ञानफलनित्यत्वप्रतिपादकवाक्योक्त्या ज्ञानस्य फलाभिधानाच्च । त्वयैव पटुतमसंस्कारभुज्यमानप्रारब्धकर्मनिवृत्त्यादिसहकृतस्यैव ज्ञानस्य फलसाधनत्वोक्त्या इतरापेक्षत्वाच्च। अत एव, प्रत्यग्याथात्म्यधीरेव प्रत्यगज्ञानहानिकृत् । साच स्वोत्पत्तितो नान्यत् ध्वांतध्वस्तावपेक्षत । इति वचनं प्रतिबंधकादृष्टाभावातिरिक्तानपेक्षपरमिति अद्वैतचंद्रिकायां व्याख्यातं ॥

यदपि । अत्राधिकरणेनेच्छासंभवासंभवौ विचार्यविति तदुदाहृतभामत्यादिग्रंथांध्यनिमित्तं । उक्तार्थग्रहणासामार्थ्यनिमित्तंचेत्युपेक्ष्यं। यत्तु ॥ जिज्ञासासूत्रविषयवाक्यविचारकाले वाक्यांतराणामनुपस्थित्या अहंप्रत्ययस्यैक्यनिश्चयत्वमुपपन्नमिति । तदप्यबोधविलसितं ॥ सांगवेदाध्ययनजन्यजीवब्रह्मैक्यविषयकापातप्रतीतेरहमिति ज्ञानस्य ब्रह्मज्ञानत्वनिश्चयादिति खंडनग्रंथोपरि । अधीतस्वाध्यायस्य विचारात्पूर्वं द्वैताद्वैतोभयविधवाक्यदर्शनेनैक्यसंदेहसंभवेपि तन्निश्चयायोग इति प्रसरोक्तदूषणस्यानेनापरिहारात् । सांगवेदाध्ययनवतः विचारकाले वाक्यांतरानुपस्थितिकल्पनस्यातिहेयत्वाच्चेति । यत्तु मंडने ज्ञानप्रयोजने मोक्षसंदेहसत्वे तादृशज्ञानेच्छाया एवायोगेन पूर्वपक्षिणा ज्ञानेच्छांगीकारोक्तिरयुक्तेत्युक्तिः श्रुत्यर्थविचाररूपत्वात्पूर्वपक्षस्य श्रुतौच सन्प्रत्ययस्य विद्यमानत्वादकिंचित्करेत्यादि । तदसंबद्धं ॥ मंडनोक्तदूषणपरिहाराक्षमत्वात् । शब्दो नित्यः काकस्य कार्ष्ण्यादित्यादिवदसंबद्धप्रलापत्वात् । इच्छासंभवासंभवाभ्यां पूर्वपक्षसिद्धांतयोरप्रवृत्तत्वोक्तेरुदाहृतभामत्यादिना स्ववचनेनच विरोधात् । पूर्वपक्षस्य विचारेण निरसनीयपक्षरूपस्य श्रुत्यर्थ विचाररूपत्वोक्तेर्विचारशास्त्रज्ञानमूलत्वात् । मंडनोक्ताकिंचित्करत्वानुपपादकत्वाच्चेति । तस्मात्परोक्तस्याभासत्वात् ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

अत्रोक्तं चंद्रिकायां ॥ अन्यथा शास्त्रारंभसामार्थ्यादेव वा कर्तव्यतोक्तिसामर्थ्यादेववा विषयादिसूचनसंभवात् जिज्ञासापदादिना तत्सूचनोक्त्ययुक्तिरिति ॥

यदत्रोक्तं दीपिकायां संध्यावंदनादि नित्यकर्मफलस्येश्वरप्रीत्यादेः फलस्यानुद्देश्यत्वमिति । तन्न ॥ तत्प्रेरणया तत्प्रीत्यर्थंसंध्यामुपासिष्ये इत्येवं सर्वैरपि आस्तिकैरीश्वरप्रीत्यादिकमुद्दिश्यैव तत्करणात् । नियमापूर्वस्याप्युद्देश्यताया विवरणसंमत्या प्रागेवोपपादितत्वाच्च ॥

यदपि ॥ ब्रह्मविचारस्यापि यदि कर्तव्यत्वेन प्रयोजनमाक्षिप्यते तर्हि ब्रह्मज्ञानफलमानुषंगिकं स्यात् न स्वतःफलमिति शंकास्यादित्यादि तदप्यसारं ॥ प्रेक्षावदनुष्टानाद्याक्षिप्तस्य मंगलफलस्य समाप्त्यादेरानुषंगिकत्वापातात् । निष्प्रयोजने प्रेक्षावतामप्रवृत्तेः । प्रेक्षावत्प्रवृत्त्या प्रयोजनं सूचतइत्यस्याविप्रतिपन्नत्वेन सूचितस्य प्रयोजनस्य स्वतःफलत्वादेर्मानांतरगम्यत्वात् । स्वप्रयोजनंपरप्रयोजनंवोद्दिश्यैव प्रेक्षावतां प्रवृत्तेर्दर्शनेन कर्तव्यत्वाक्षिप्तस्योद्देश्यत्वेनानुषंगिकत्वासिद्धेश्च । अन्यथा त्वत्पक्षेपि तत्प्रसंगस्य को निवारयिता । एतेन नित्यकर्मकर्तव्यत्वस्य प्रयोजनव्याप्यत्वेन प्रयोजनसिद्धेरिति मंडनोक्तमपि समाहितं । तत्रापीश्वरप्रीत्यादेः कामनाविषयत्वात् । प्रेक्षवत्प्रवृत्तिसूचितप्रयोजनस्योद्देश्यतानियमाच्च । यच्च शास्त्रारंभसामार्थ्यादित्यत्र किं विवक्षितमित्यादि तच्चंद्रिकाप्रकाशोक्तरीत्या प्रकाशप्रसर एव दत्तोत्तरमिति नेह पुनः प्रपंच्यते । यदप्यत्र तत्प्रयोजकविषयादिसूचनमित्यत्र यदि प्रयोजकत्वं व्यापकत्वमित्यादि तदप्येतेन परास्तं । प्रेक्षावत्कर्तृकत्वसफलत्वयोर्व्याप्तेर्निष्प्रत्यूहत्वात् । यत्तु ॥ आक्षिप्तकर्तव्यत्वस्य प्रयोजनादिसूचनानुक्तेरनुक्तोपालंबनत्वमिति मंडनोक्तमपास्तं । विवरणमतेपि विचाराक्षेपेणविचारकर्तव्यतोक्तेरेवाभावादित्यादि । तदपि निरस्तं ॥ विवरणमते विचारे लक्षणायाः पूर्वं प्रदर्शितत्वात् । खंडन-

कारस्यान्यथानुवाददोषापरिहारात् । त्वदीयापव्याख्यानस्यातिहेयत्वा-
च्चेति । तस्मात्परोक्तस्याभासत्वाद्भयकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

अत्र ॥ चंद्रिकायां ब्रह्मशब्दश्च "अथकस्मादुच्यते ब्रह्मेति बृहं-
तोह्यस्मिन्गुणा" इत्यादिश्रुतिबलाद्गुणपूर्त्यर्थः । परपक्षेतु अखंडब्रह्मपद-
लक्ष्यस्यैव जिज्ञास्यत्वात् श्रुतिसूत्रस्थब्रह्मपदस्यैव मुख्यार्थत्यागः । परिच्छे-
दत्रयराहित्यरूपमहत्वार्थत्वेन जीवाभेदार्थत्वे तेनैव घटाद्यभेदप्रसंगादित्युक्तं ।
अत्र यदुक्तं ॥ विशिष्टशक्तेनापि पदेन तात्पर्यवशाद्विशेष्यमात्रस्य ग्रह-
णसंभवत्र इति शक्त्यैव ब्रह्मग्रहणान्नमुख्यर्थत्याग इति । तदसारं ॥
तात्पर्यमात्रानुसारेण विशिष्टशक्तेर्विशेष्यमात्रबोधकत्वे घटो न जातिमानिति
बाधग्रहकाले घटोजातिमानितिवाक्येन स्वरूपतो द्रव्यत्वप्रकारकस्य द्रव्यं
घट इति बोधस्यापत्तेः । अविशेषात् ॥ जातिमद्व्याप्यवानिति पराम-
र्शकालेस्वरूपतो जात्यवच्छिन्नविधेयकानुमितिर्जायतामितीच्छाबलाद्वन्हिमा-
नित्याद्यनुमित्याद्यापाताच्च । एवं विशिष्टशक्तपदस्य विशिष्टबाधग्रहसहकृ-
तस्य विशिष्टशक्त्यैवैकदेशबोधकत्वे घटो जातिमानिति वाक्यं विशिष्टबाध-
ग्रहसहकारिवशात् । शक्तिभ्रमंलक्षणाग्रहंच विना अनवच्छिन्नद्रव्यत्वप्र-
कारकबोधं जनयेत् । नचेष्टापत्तिः ॥ घटो जातिमान्नवेति प्रश्नं प्रत्य-
स्यानुत्तरत्वापत्तेः । यत्तु ॥ स्वरूपचैतन्यपरत्वस्य लाक्षणिकस्याप्य-
दोषत्वादित्यादि । तदपि न ॥ गंगायां घोष इत्यादौ बाधकवशेन
मुख्यार्थत्यागेपि इह तत्यागस्य दोषत्वात् । प्रकृते बाधकाभावस्योक्त-
त्वात् । श्रौतस्य मुख्यार्थस्याबाधितत्वेन लक्षणाकल्पनस्यान्याय्यत्वाच्च ।
यच्च ॥ मणिकारोक्तरीत्या विशिष्टशक्तिज्ञानस्य शुद्धमात्रतात्पर्यज्ञान-
सहकृतस्य शुद्धस्मृतिहेतुत्वात् । तत्र शक्त्यपेक्षैव नास्तीत्यादि ॥
तत्स्वव्याहतं ॥ विशिष्टशक्तिज्ञानस्यैव सहकारिवशेन शुद्धविषयस्मृति-
हेतुत्वस्य त्वयैवोक्तत्वेन शुद्धस्मृतेः शक्तिज्ञानसापेक्षत्वात् । अन्यथा

पटादेरपि घटपदार्थत्वेनशाब्दज्ञानविषयत्वापत्तेः । जातिशक्तिज्ञानाद्व्यक्तिशाब्दधीस्वीकारस्तु लक्षणादिनेति व्यक्तमेव मीमांसकमते । मण्युक्तरीत्या स्वरूपशक्तिरपि अद्वैतचंद्रिकादौ "यतोवाचोनिवर्तंते, अशब्दमस्पर्शं; अवचनेनैवमोवाच, अनिरुक्त"मित्यादिश्रुत्या ब्रह्मणो वाच्यत्वनिषेधादिव्युत्पादनेनोपेक्षितैव । एतत्पक्षेचोक्तकुब्जशक्तेर्लक्षणातुल्यत्वेन श्रौतप्रकृतिप्रत्ययलब्धयौगिकमुख्यार्थत्यागस्यावर्जनीयतया विशिष्टार्थस्य ब्रह्मशब्दस्य शुद्धचिन्मात्रे अस्वारस्यस्य वज्रलेपत्वाच्च ॥

यदपि ॥ भवंत एव विवेचयंत्विति । तदपि न चंद्रिकायां लक्षणामुख्यार्थत्यागश्चेति लक्षणाशब्दः चशब्दोपि न गृहीत इति प्रसरोक्ताशयाज्ञानमूलत्वात् । वस्तुतस्त्वित्यादिना लक्षणादोषश्चंद्रिकोक्तो न स्थायीत्यत्र स्वानुकूलाश्रांतिमूलं । "यद्वा न ब्रह्मपदमुख्यार्थत्यागः । अखंडचैतन्यस्यैव ब्रह्मशब्दस्वरसार्थत्वादित्यतस्तदनूद्यनिराहे"तिप्रकाशवाक्योदाहरणमपि । केरलकरवालवत्स्वात्मानमेवघातयति । अनूद्यनिराहेत्यनेन परिच्छेदत्रयराहित्यरूपमहत्वरूपार्थस्यापि दूषितत्वेन स्वरसत्वस्य परोक्तस्य दूषणार्थमनुवादेन द्वयोरपि दूषितत्वात् । त्वदभिप्रायकत्वे इत्यस्वरसादाहेत्यवत्तरणप्रसंगादिति ॥

यदपि ॥ रजतपदस्य व्यावहारिकप्रातिभासिकसाधारणरजतत्वशक्ततामते प्रातिभासिकरजतस्य रजतपदवाच्यतानापत्त्या स्वसमानसत्ताकतत्पदप्रवृत्तिनिमित्तधर्मवत एव तत्पदवाच्यत्वमिति नियमस्याप्रामाणिकत्वादिति । तदशुद्धं ॥ व्यावहारिकरजतत्वस्य प्रातिभासिकवृत्तित्वेसद्रजतमित्यादावधिष्ठानगतस्येदंत्वस्यैवसत्वस्याप्यारोपसंभवेनोपपत्त्या तत्र व्यावहारिकरजततादात्म्याध्यासवैयर्थ्यात् । अनेनैव दोषेण व्यावहारिकं दृष्टं रजतत्वादिकं प्रातिभासिकेन स्वीक्रियते प्रथमपरिच्छेदांते मूले प्रातीतिकव्यावहारिकसाधारणमेकं रजतत्वादिकं । व्यावहारिकमात्रे अन्यत् प्रातिभासिकमात्रे-

चान्यदित्युक्तिस्तु व्यावहारिकरजततादात्म्यस्य प्रातीतिके अनंगीकारपक्षे प्रौढिवादमात्रेणेति लध्व्यामुक्तत्वात् । प्रातीतिकरजतस्याप्यर्थक्रियापातात् । वन्हेर्धूमव्याप्तत्वापाताच्च । अत्रोक्तं लघ्व्यां । व्यावहारिकनिष्ठरजतत्वादेः प्रातिभासिके स्वीकारेऽपि ततो व्यावहारिकरजतादिकार्यस्य नापत्तिः । व्यावहारिकत्वविशिष्टस्यैव कारणस्य कार्यप्रयोजकत्वदर्शनेन तदंतर्भावेनैव कारणकूटस्य फलोत्पत्तिव्याप्यतास्वीकारात् नचैवं वन्ह्यादेर्धूमव्याप्यतापत्तिः । वन्हिसमानाधिकरणप्रतियोगिव्यधिकरणाभावप्रतियोगिप्रतीतिकधूमसामानाधिकरण्यस्य वन्हौ सत्वादितिवाच्यं । व्यावहारिकमात्रवृत्तेरपि संयोगत्वादेः स्वीकारेण तदाश्रयस्यैव संयोगादेः साध्यसमानाधिकरण्यवच्छेदकाधिकरणादौ साध्यादिसंसर्गतया निवेशेन व्यावहारिकस्य प्रातीतिकसंसर्गत्वाभावेन प्रातीतिकधूममादायव्याप्तिघटनाया असंभवात् । एवंच व्यावहारिकप्रतीतिकोभयवृत्तिसंयोगत्वादिकं व्यावहारिकमात्रवृत्तिचतत्स्वीक्रियते । नतु प्रतीतिकमात्रवृत्तीति । तदपि न व्यावहारिकत्वविशिष्टरजतत्वेन कारणतामंतरेण तद्घटितकारणकूटस्यैव कार्योत्पत्तिप्रयोजकत्वमित्यस्यैवासिद्धेः । कारणतावच्छेदकावच्छिन्नकदंबस्यैव कार्योत्पादप्रयोजकत्वात् । अन्यथा ॥ अनुमित्यादौ ज्ञानत्वादिकमात्रेण हेतुत्वेपि परामर्शादिरूपज्ञानघटितकूटस्यैव तत्प्रयोजकत्वसंभवेन परामर्शत्वादिना हेतुत्वविलयापत्तेः । नच प्रातीतिकसाधारणरूपेण हेतुत्वेपि व्यावहारिकसंबंधस्यैव तदवच्छेदकत्वात् । व्यावहारिकरजतघटितकूटस्यैव कार्योत्पत्तिप्रयोजकत्वनिर्वाह इति वाच्यं । व्यावहारिकमात्रवृत्तिरजतत्वेनैव हेतुत्वसंभवात् । नच व्यावहारिकमात्रवृत्तिरजतत्वादिकमप्रामाणिकं । संयोगत्वादेरिव तस्याप्यंगीकार्यत्वात् । नच व्यावहारिकस्य वन्हेः संयोगो यत्र प्रातीतिकः तत्र धूमापत्तिवारणाय व्यावहारिकसंयोगस्यैव तत्प्रयोजकत्वात् । तदवच्छेदकतया व्यावहारिकमात्रवृत्तिसंयोगत्वादिसिद्धावपि न तथाविधवन्हित्वरजतत्वादेरावश्यकता ।

प्रातीतिकवन्ह्यादेर्व्यावहारिकसंयोगाद्यभावेनातिप्रसंगाभावादितिवाच्यं । गुंजा पुंजादौ वन्हिभ्रमानंतरं अयं देशो वन्हिसंयोगीति प्रतीतेर्गुंजापुंजप्रतियोगिकव्यावहारिकसंयोगविषयकत्वस्यैव स्वीकारेण तत्र धूमादिकार्यवारणाय व्यावहारिकवन्हेरेव तद्धेतुत्वेन तदवच्छेदकतया व्यावहारिकमात्रवृत्तिवन्हित्वादिसिद्धेः । एवं व्यावहारिकप्रातिभासिकवन्ह्यादिसामग्र्योर्विलक्षणत्वात् । तत्तत्कार्यतावच्छेदकतयापि प्रत्येकं तत्तन्मात्रवृत्तिवन्हित्वादिकं पृथगेव । एवंच ॥ व्यावहारिकप्रातिभासिक साधारण रजतत्वादिकमप्रामाणिकमेव । किंच उभयसाधारणधर्मस्वीकारे बाष्पारोपितधूमेन वन्हिसिद्ध्यापत्तिः । नचाभासविवेकादिरपिहेतुविशेषणं तथाप्यसंजातबाधभ्रमविषयधूमाव्यावृत्तेः । अधिकमन्योन्याश्रयादिना दूषणाभिधानमाकरे द्रष्टव्यं । गौरवभयान्नेहोच्यते ॥ तस्मान्नोक्तनियमस्य शुक्तिरूप्यादौ व्यभिचारः । वस्तुतस्तु ॥ शुक्तिरूप्ये रूप्योचितार्थक्रियाभावेन वस्तुतोऽरजतत्वात् । तत्र रजतत्वजातिसद्भावे मानाभावेन सृद्रवि(?)गोशब्दस्यैव तत्र सादृश्यादिना रजतशब्दो गौण एवेति न रजतपदवाच्यत्वं तस्येति ॥

यदपि ॥ गौरनित्येत्यत्र गोत्वस्य प्रकारतयेव पूर्णत्वस्यापि भानमिति प्रसरोक्तमपास्तं । तत्रानित्यत्वे गोत्वस्येवात्रापि गुणपूर्णत्वस्य जिज्ञास्यत्वेनान्वयानापत्यास्वरूपमात्रजिज्ञासाया एव पर्यवसानादिति । तदप्युक्ताशयाज्ञानमूलं ॥ तत्र गोत्वस्यानित्यत्वधर्मितावच्छेदकविधयेव प्रकृते पूर्णत्वस्य जिज्ञासाधर्मितावच्छेदकतया भानापादनस्येष्टत्वोक्तेः स्वव्याघातकत्वात् । एतेन गोत्वस्यानित्यत्वानन्वयेपि तदन्वयितावच्छेदकतया भानमित्यादिमंडनवचनमपि व्याख्यातं । तथाच तद्दूषणाभासालापोपि तदाशयाबोधविलसित एव । यत्तु ॥ स्वरूपमात्रशक्तिपक्षे निर्धर्मितावच्छेदकशाब्दज्ञानवारणायैकत्वादिविशिष्टधर्मिकबोधोऽभ्युपेय इति । तद-

युक्तं ॥ त्वन्मते ब्रह्मपदाधीनबोधस्य निर्विकल्पकत्वेन तद्दोषावारणात् । तत्पक्षस्य त्वदीयैरेव दूषितत्वाच्चेति । तस्मात्परोक्तस्याभासत्वाद्ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

अत्रोक्तं चंद्रिकायां ॥ "परैस्त्रिविधपरिच्छेदाभाववाचिना ब्रह्मपदेनैव जीवाभेदसिद्धिरित्युक्तं । तन्न ॥ तेनैव घटाद्यभेदप्रसंगा"दिति । यदत्रोक्तं दीपिकायां ॥ विशेषणविशेष्यभावस्थल एव तन्निष्टासाधारणधर्मयोगित्वमभेदः प्रतिभासत इति । तदशुद्धं ॥ अद्वैतचंद्रिकायां नैयायिकाभिमतैतत्कल्पदूषणेन व्यावहारिकतादात्म्यं विशेषणविशेष्यभाव इत्युक्तत्वेनापसिद्धांतात् । एवं सन्घट इत्यादिकमपि बाधायां समानाधिकरण्यमित्युक्तिरप्यज्ञानमूला । तत्रैव प्रातिभासिकतादात्म्यमध्यासः । इदंचाध्यासे सामानाधिकरण्यं यश्चोरः सस्थाणुरित्यादिकं बाधायां सामानाधिकरण्यमित्युक्तत्वात् । वस्तुतस्तु ॥ चतुर्धासामानाधिकरण्यमपि प्रागेव दूषितमिति तत्प्रभेदोप्ययुक्तः ॥

यदपि ॥ न्यायामृतोक्ताज्ञानाश्रयादि दूषणखंडनप्रकारोऽद्वैतसिद्ध्यादितोत्ववसेय इति । तमेतं महामोहमपहर्तुमेव पूर्वं प्रसंगात्तत्र तत्र स्थालीपुलाकन्यायेन लघुगुरुचंद्रिकाद्वयादिनिरासप्रकारः प्रदर्शितोऽस्माभिः । ततश्चाद्वैतसिद्ध्याद्युक्तस्य तत्ववादिमते शतधादूषितत्वात्परस्य तदाशामात्रं । सर्वत्रापि तन्निरासप्रकारः विस्तरभयान्नप्रदर्श्यते । यत्तु ॥ स्वात्मनापरिणममानाविद्याविषयत्वं प्रयोजकाज्ञानविषयत्वमिति खंडनाशयवर्णनं । तदपि पिष्टपेषणमेव ॥ अनादिदृश्यंप्रत्यज्ञानस्य प्रयोजकतायाः पूर्वमेव निरस्तत्वात् । तत्प्रयोजकाज्ञानविषयत्वस्य तदभेदरूपत्वे भयकंपादिप्रयोजकाज्ञानविषयस्य सर्पादेस्तदभेदप्रसंगात् । रूप्यार्थिप्रवृत्तिकालीन कंटकवेधादि जन्यदुःखादि प्रयोजकाज्ञानविषयशुक्त्यादेस्तदभेद प्रसंगाच्च ॥

वस्तुतस्तु ॥ सदसतोरधिष्ठानाध्यस्तयोस्तादात्म्यस्य भ्रमसिद्धत्वे-नाभेदस्य प्रातीतिकतया भेदस्यतु बाधधीगम्यतया धर्मिसमसत्ताकत्वेन तात्विकत्वात् । उक्तपरिष्कारेण घटाद्यभेदस्येव जीवाभेदस्यापि भ्रम-सिद्धस्य प्रातिभासकत्वेन तेन बाधबुद्धिसिद्धस्य धर्मितुल्यसत्ताक भेदस्याप्र-तिघातेन ब्रह्मपदेन भेदविरोधिनोऽभेदस्यासिद्धिरेव । एतेनाविद्यात्मनोर्भे-देनोक्तदोषतादवस्थ्यमिति मंडनोक्तमपि समाहितं । जीवस्येवोक्त विभा-गस्यापि विशिष्टरूपेणाज्ञान परिणामत्वानुपपादनात् । स्वप्रयोजकेत्यादि परिष्कारस्याभासत्वाच्चेति ॥

एतेनैव यत्तु । प्रकाशप्रसर इत्याद्युक्तमपास्तं ॥ अद्वैत-सिध्यादि निरासप्रकारस्योपदर्शितत्वात् । अज्ञानस्य भावाभावविलक्षणत्वे विवरणादौ तस्यभावत्वसाधनप्रयास वैकल्यापातात् । तस्याभावविलक्षण-त्वमात्ररूपत्वे सर्वत्राप्येवं भावेन त्वन्मते भावाभावविभागविलोपप्रसंगादि-त्यलं । यच्चारोप्याधिष्ठानयोर्वस्तुतोभेदस्य कुत्राप्यदर्शनादिति । तन्न ॥ तयासति नेदं रूप्यमिति बाधधीविलोपप्रसंगात् । भ्रमसिद्धाभेदस्य प्राति भासिकस्य बाधगम्यतात्विकभेदाविरोधिन इष्टत्वापादनेन तत्वार्थाप्रतिपत्त्या तत्र तत्रासंबद्धविषयपरिग्रहव्यापारो वानराणामेव युक्तो न नराणामित्युक्तं स्वात्मन्येव संबध्यत इति युक्तमेवेति । वस्तुतस्तु ॥ अद्वैतमते स्वरू पतः तात्विकपदार्थभेद एव महत्वप्रयोजकः । तात्विकप्रतियोगिकभेद-स्यैवाल्पत्वप्रयोजकत्वांगीकारात् । घटादेस्त्वतथात्वात्तदभेदाभावस्याल्प-त्वप्रयोजकत्वमंगीकृत्य तदभेदसमर्थनं ब्रह्मणि अनृतादिजगद्व्यावृत्तिमभिल-षतामद्वैतिनामनिष्टमेवेति सर्वमिदं गजस्नानायितं स्वपरमतानवबोधविजृंभितं चेति । तस्मात्परोक्तस्याभासत्वाद्ध्येयकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

अत्रोक्तं चंद्रिकायां ॥ "अपरिच्छेदस्य ब्रह्मानन्यत्वे प्रत्ययार्था-भावेनापरिच्छिन्नत्वासिद्धिः । अन्यत्वेसुतरां ॥ तद्रूपविकल्पत्वात् ।

अतात्विकत्वे तत्वतः परिच्छिन्नत्वापत्तिः । किंच ॥ वस्तुतोऽल्पे सत्येवतन्निरूपितमहत्वस्य वास्तवत्वमिति ब्रह्मशब्देनैव सद्वितीयत्वमिति निरंकुशमहत्वार्थं ब्रह्मणस्सर्वात्मकत्वे एकात्मकाद्गगनादितोऽनेकात्मकराश्यादौ महत्वबुद्धिस्स्या''दिति । अत्रोक्तं दीपिकाकारेण अनेकात्मकत्व प्रयोजका ज्ञानविषयत्वमनेकात्मत्वंमाषराश्यादिव्यावृत्तं विवक्षितमिति । तत् तत्प्रयोजकाज्ञानविषयत्वं तदात्मकत्वमिति पक्षस्य पूर्वमेव निराकृतत्वात्पिष्टपेषणं वस्तुतस्तदज्ञानप्रयोज्यस्य तद्भिन्नत्वनियमात् । अनेकप्रयोजकेतिवक्तव्ये-अनेकात्मकत्वेत्युक्तिरप्यज्ञानमूलैव । किंच । नानावृक्षात्मकं वनं गजाश्वाद्यनेकात्मिका सेनेत्यादि व्यावहारविलोपप्रसंगश्च ॥

यत्तु ॥ अपरिच्छिन्नत्वं ब्रह्मानन्यमेव कल्पितभेदेनाधारत्वं । अनन्यत्वेपि स्वेमहिम्नीत्यादाविव स्वाधारत्वमिति । तन्मंद ॥ कल्पितभेदस्य तस्याधाराधेयभावनिर्वाहकतायाश्चनिराकृतत्वात् । कल्पितभेदाधीनाधारत्वस्यापि कल्पितत्वापत्तेश्च । निर्विशेषाभेदवादिमते स्वस्यैव स्वाधारत्वस्य वक्तुमशक्यत्वाच्चेति ॥

यदपि ॥ घटे रूपमित्यादौ तादात्म्यस्यापि वृत्तिनियामकत्वमित्यादि । तन्न ॥ तत्र तादात्म्यघटकभेदस्यैव विशिष्टव्यवहारनिर्वाहकताया अद्वैतचंद्रिकादौ व्यक्तमुक्तत्वात् । अपरिच्छेदस्य विशिष्टरूपेण ब्रह्मतादात्म्ये स्वस्मिन्स्वतादात्म्याभावेन तस्य ब्रह्मान्यत्वप्राप्त्या तत्पक्षोक्तदोषस्यापरिहारादिति । यच्च ॥ प्रातिभासिकरूप्याद्व्यावहारिकरूप्यमुत्कृष्टमिति व्यवहारान्नसमसत्ताकद्वितीयापेक्षएवोत्कर्ष इति । तदसारं ॥ प्रातिभासिकस्य रजतोचितार्थ क्रियाद्यसमर्थस्य तत्वतो अरजतत्वेन तत उत्कर्षस्य रजतोचितार्थ क्रियाशून्यारजतादुत्कर्ष एव पर्य्यवसानेन रजतांतरादुत्कर्षासिद्धेः । किंच ॥ गीतायां "आदित्यानामहंविष्णुरित्यादिना मासानांमार्गशीर्षोस्मी''त्यादौ सर्वत्रापि स्वसमानसत्ताकस्वस-

जातीयपदार्थांतरापेक्षयोत्कर्षस्य प्रतिपादनात् । वेदेपि वाग्वावनाम्नो भूय भूयसी इंद्रियेभ्यः पराह्यर्थाः । ज्योतिषां ज्योतिरित्यादौ । लोकेपि अल्पधनवतोऽधिकधनवानुत्कृष्टः । अयं परमधार्मिको धार्मिकांतरादुत्कृष्ट इत्यादौ पुराणादावपि । दाने कर्णः शासने रविपुत्रः ऐश्वर्ये इंद्रः द्वादशीव्रते अंबरीषः अध्यात्मविद्यायां उत्तरापुत्रः उत्कृष्टइत्यादौ सर्वत्र स्वसमानसत्ताकवस्त्वंतरादेवोत्कर्षस्य प्रतीत्या समानसत्ताक सद्वितीयत्वापादनस्य वज्रलेपत्वात् । शुक्तिरूप्यादापणस्थं रूप्यमुत्कृष्टं ॥ तीक्ष्णत्वादौ नरविषाणाद्गोविषाणमुत्कृष्टं इत्यादिरूपः स्वन्यूनसत्ताकार्थांतरात् स्वरूपतोऽसतोवा उत्कर्षादिव्यवहारस्तु स्वदनुभवैकगम्यत्वेनाप्रामाणिकएव ॥

यद्यपि ॥ तत्वदीपनादौ प्रातिभासिकसत्वाद्व्यावहारिकसत्वमुत्कृष्टमित्यादिव्यवहारो दर्शितः । तथापि तयोर्द्वयोरपि सत्वयोर्व्यावहारिकत्वात् स्वन्यूनसत्ताकस्यासतोवास्वनिष्टोत्कर्षनिरूपकत्वं न तेनापि सिद्धमतोऽत्रास्मदुक्तनियमोनिराबाध एव । किंचोक्तमहत्वविशिष्टब्रह्मणो व्यावहारिकत्वे तत्र जीवाभेदस्यासिद्धिरेव । विशिष्टाभेदानंगीकारात् ॥ ततश्च यत्र जीवाभेदः न तत्रापरिच्छेदः यत्रापरिच्छेदः न तत्र जीवाभेद इति दीपिकाकारेण साधु समर्थितः अपरिच्छेदवाचिब्रह्मशब्देन जीवाभेदो ब्रह्मणीति ॥

यदपि ॥ व्यावहारिकस्यापि ज्ञानबाध्यत्वाज्ञानकल्पितत्वादिना वैलक्षण्याभावादिति मंडनोक्तमनूद्य ब्रह्मज्ञानेतरबाध्यत्वपल्लवाज्ञानकार्यत्वाभ्यां वैलक्षण्यमुपपादितमिति । तदिदं स्वमनोरथमात्रमज्ञाननिबंधनमेव । एतावतापि व्यावहारिकप्रातीतिकयोर्ज्ञानबाध्यत्वादि वैलक्षण्यस्याप्युत्पादनात् । ब्रह्मज्ञानेतरस्यापि ज्ञानत्वात् पल्लवाज्ञानस्याप्यज्ञानत्वात् । असंजातबाधभ्रमविषयावृत्तेश्चेति । प्रकारांतरेण वैलक्षण्यंत्वन्यत्र निरस्तं । तस्मात्परोक्तस्वाभासत्वाद्ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

अत्रोक्तं चंद्रिकायां ॥ "परपक्षे कर्मणि षष्टी न युक्ता विचारजन्यज्ञानाकर्मणो ब्रह्मणो विचारकर्मत्वायोगात् । अपरोक्षवृत्तिव्याप्यस्य फलव्याप्यत्वनियमाच्चेति" । अत्रोक्तं दीपिकाकारेण ब्रह्म वेदांतजन्यापरोक्षवृत्यविषयः फलाव्यप्यत्वादित्यनुमाने नित्यातींद्रिये दृष्टांतीकर्तव्यं तत्रच वृत्यभावतन्निर्गमनाभावादेरेव तत्प्रयोजकत्वेन फलाव्याप्यत्वमप्रयोजकं । नकोप्यत्र विपक्षे बाधकस्तर्क इति । तन्न ॥ बहिः निसृतांतःकरणवृत्तावेव चैतन्यप्रतिबिंबननियमेन तादृशचैतन्याविषयत्वे उक्तापरोक्षवृत्तिविषयत्वासंभवात् । ब्रह्मणि द्वाराभावेन बहिः निःसरणाद्यभावादेः साधनव्यापकत्वात - तस्यापि स्वप्रयोज्यफलव्याप्यत्वाभावद्वारैवोक्तापरोक्षवृत्तिविषयत्वाभावप्रयोजकत्वाच्च । किंच अतींद्रियधर्मादेरांतरत्वादिंद्रियागोचरत्वाच्च खलु बाह्यविषयसन्निकृष्टेंद्रियरूपद्वाराभावेन तत्रांतःकरणस्य बहिर्निस्सरणाभावात् बहिर्निस्सृतांतःकरणवृत्तिरूपापरोक्षवृत्तिविषयत्वाभावः । एवमपरोक्षवृत्तावेव चैतन्यप्रतिबिंबनं न परोक्षवृत्ताविति नियमात् । उक्ता परोक्षवृत्तिविषयो नियमेन फलव्याप्य इति फलव्याप्यत्वस्य तादृशवृत्तिविषयत्वव्यापकत्वंच परान्यायेनैव लब्धं । तथाच दृष्टांते उक्तसाध्यंप्रतिबाह्यत्वेसत्यैंद्रियकत्वाभावोवा फलव्याप्यत्वाभावोवा प्रयोजकः प्राप्तः निर्गमनाभावं प्रत्यपि तस्यैव प्रयोजकत्वात् । सतिचैवं यदि ब्रह्मअपरोक्षवृत्तिविषयः स्यात् तर्हिअपरोक्षवृत्तौ चैतन्यप्रतिबिंबननियमेन फलव्याप्यमेव स्यात् । ऐंद्रियकत्वे सति बाह्यविषयोवा स्यादिति बाधकतर्कः विपक्षे हेतूच्छित्यादिरूपानुकूलतर्कोपि सुवच एव । अन्यथा कस्यापि फलव्याप्यत्वासिद्धिप्रसंगः । तेन विनापि अपरोक्षवृत्तिव्याप्यत्वमात्रेण सर्वनिर्वाहात् । एतेन वन्हिरनुष्ण इत्यादाविवपक्षग्रहणकाल एव साध्याभावग्रहणात् बाधोन्नीते पक्षेतरत्वमुपाधिः स्यादित्यादिकमपास्तं । हेतूच्छित्यादिरूपानुकूलतर्कस्योदितत्वात् । ब्रह्मातिरिक्ते सर्वत्रापरोक्षवृत्तिविषयत्वफल-

व्याप्यत्वयोरव्यभिचरित साहचर्यदर्शनादिसिद्धस्य तत्प्रतिबंधस्यापन्होतुमशक्यत्वात् । अनुकूलतर्कसनाथेच साधने पक्षेतरत्वादेरुपाधित्वशंकाया अप्यसंभवात् । वेदांततात्पर्यविषयत्वेन सिद्धस्य वेदांतजन्यपरोक्षज्ञानविषयस्य ब्रह्मणः पक्षत्वसंभवेन धर्मिग्राहकमानाबाधाच्च । ब्रह्म अपरोवृत्यविषय इत्यस्य माता वंध्येतिवत् व्याहतिरितिवचनमपि मोहमूलमेव । वेदांततात्पर्यविषयीभूतं परोक्षवृत्तिविषयं पक्षीकृत्य अपरोक्षवृत्तिविषयत्वाभावे परन्यायेन साधिते व्याहतेरनवकाशात् । तत्ववादिमतेपि पुंशक्तिसाध्यापरोक्षाविषयत्वांगीकाराच्च । एतेन मंडनोक्तमपि समाहितं ॥ उक्तरीतेस्तुल्यत्वादिति । खंडनकारीयग्रंथांतरविरोधोद्भावनमपि मंडनोक्तं युक्तं। स्वस्यैव प्रस्थानांतराभावेन स्वोक्तविरुद्धभाषित्वे तदुद्भावनस्य त्वदीयैरेव ग्रंथांतरे कृतत्वात् । पक्षादन्यत्र निश्चितहेतुमतिसाध्यसंदेहेन व्यभिचारसंदेहस्य दोषत्वेपि पक्षीयव्यभिचारसंदेहस्य दोषत्वे अनुमानमात्रोच्छेदप्रसंगात् । प्रकृतेचानुकूलतर्काणां जागरूकत्वेन तच्छंकाया गर्भस्रावेणैव गतत्वादितिसंक्षेपः । तस्मात्परोक्तस्याभासत्वाद्ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

अत्रोक्तं चंद्रिकायां ॥ "स्वपक्षे कर्मणिषष्ट्यामपि प्रमाणसाधनप्रयोजनादिपरिकरयुक्तस्यैव ब्रह्मणो जिज्ञासाकर्मत्वान्नप्रमाणादि विचारस्याप्रतिज्ञातताप्रसंग" इति । अत्रोक्तं दीपिकायां ॥ परिकरयुक्तस्येति चंद्रिकाया उक्तविशिष्टब्रह्मण एव ब्रह्मशब्दमुख्यार्थत्वात्प्रमाणादि जिज्ञासापि शाब्दीत्येवाशयः न तत्प्रकाशोक्तदिशा परिकरशब्दस्वारस्यात् प्रमाणादिजिज्ञासाया आर्थिकत्वमिति । तत्रेदं वक्तव्यं ॥ कथमिदमवगतमपूर्वं चंद्रिकातात्पर्यं प्रकाशकारादिभिरनवगतं लोकोत्तरप्रज्ञेन देवानां प्रियेणेति । परिकरशब्दोहि राजासौगच्छतीत्यादौ सपरिवारस्येति यथा अर्थाल्लभ्यते तथा परिकरशब्दबलादेव प्रमाणादिजिज्ञासा आर्थिकीतिप्रकटा-

एवोक्तत्वेन तस्य स्वप्रतिकूलत्वात् । ब्रह्मज्ञानप्रयोजनतत्साधनतत्करणप्रमाणादीनां सर्वेषामपि ब्रह्मशब्दमुख्यार्थत्वस्य भ्रांतेन मूर्खेणापि वक्तुमशक्यत्वेन तस्याशाब्दस्य प्रमाणादिजिज्ञासाकर्तव्यतारूपस्य शाब्दतया चंद्रिकाशयविषयत्वस्य त्वत्क्षुद्रबुद्धिमात्रकल्पितस्यातिहेयत्वात् । अन्यथानुवादादिदोषो दुरुद्धर एव । किंच ॥ चंद्रिकावाक्यस्य प्रकाशे सम्यग्व्याख्यातस्यापि स्वबुध्या अनभिप्रेतमपार्थं परिकल्प्य तद्दूषणार्थं प्रवृत्तस्य छलेन निग्रहोप्यधिकस्संपादितः । परोक्तस्यायुक्तत्वेपि अन्यथानुवादस्य दोषताया आवेदितत्वात् । परिकरशब्देन यावता विना तज्जिज्ञासा न संभवति तावतः अर्थात्सिद्धत्वस्यैव परन्यायेनैव लाभसंभवात् । अन्यत्प्रकाशप्रसरेऽव्यक्तं ॥

यदपि ॥ जिज्ञासाधिकरणपूर्वपक्षे सुधाखंडनेन पूर्वपक्षांतरं चंद्रिकाकारैः प्रदर्शितमिति । तदपि ॥ सहजभ्रांतविलसितं । चंद्रिकायां सुधाटीकयोरापाततः प्रतीतं विरोधमाशंक्य बहुधा तत्परिहारेण तयोरैकार्थ्यसमर्थनेन सुधाखंडनवचनस्योन्मत्तप्रलापत्वात् । सर्वविदितमित्युक्तिस्तु स्वयं नष्टः परान्नाशयतीति न्यायमनुकरोति । केनापि स्वस्थात्मना तत्परिकल्पितातिहेयार्थस्याग्रहीतत्वात् । सुधाकारान्नमस्कृत्य तदुक्तिमुपजीव्य तदुक्तस्य विक्षिप्तस्य प्रमेयस्य संग्रहाद्यर्थं आपाततः प्रतीतस्य विरोधस्य परिहारार्थं च प्रवृत्तैश्चंद्रिकाकारैः तच्छात्रगणप्रविष्टैः तेष्वतिमहत्वबुद्धिमद्भिस्तत्खंडनवचनस्यानादेयत्वाच्चेति । प्रकाशप्रसरे लक्षणयेत्युक्तिरनास्थया अभ्युपेत्य वादेनवेति न दोषः । एतेन मंडनोक्तमपि समाहितं । तस्मात्परोक्तस्याभासत्वात् ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

अत्रोक्तं चंद्रिकायां ॥ "यस्माज्जिज्ञासा संपन्ना तस्माद्विचारः कर्तव्य इति कौमुद्युक्तमयुक्तं । जिज्ञासाशब्दस्य युगपद्वृत्तिद्वयप्रसंगात् । अध्या

हारसापेक्षावांतरवाक्यार्थानुपपत्तेः । ज्ञानेच्छापरत्वे मानाभावाच्चेति ॥

यदत्रोक्तं दीपिकायां ॥ ज्ञानेच्छाबोधनेनेष्यमाण ज्ञानसाधन विचारकर्तव्यतायास्तुल्यवित्तिवेद्यतया लाभेन युगपद्वृत्तिद्वयाभावात् । सतिप्रयोजने अध्याहारस्यावश्यकत्वात् । वृत्तिद्वयस्य युक्तत्वाच्चेत्यादि । तत्कौमुदीग्रंथांध्यमूलं । तत्रहि ॥अवांतरवाक्ये जिज्ञासाशब्द इच्छा-परः महावाक्ये विचारलक्षणक इत्यभिहितत्वेन तुल्यवित्तिवेद्यस्यानुमानिक-तया तस्य लक्ष्यत्वोक्तिविरोधात् । अथादिशब्देनाधिकारिविषयप्रयोजना-दिसिद्धेरुक्तत्वेन प्रयोजनाभावेनाध्याहारस्य निर्मूलत्वात् । सत्येकवाक्य-त्वे वाक्यभेदायोगात् । संभवत्येकार्थत्वे वृत्तिद्वयकल्पनाया अन्याय्य-त्वाच्चेति । अधिकंतु प्रकाशप्रसरे व्यक्तं । एतेन सतिप्रयोजने वृत्ति-द्वयस्वीकारेपि प्रकृते अतःपदादिना प्रयोजनादिलाभसंभवात् युगपद्वृत्तिद्वय-कल्पनादिकं दुष्टमिति मंडनोक्तं समर्थितं । परोक्तप्रयोजनादिसूचकत्वा-न्ययानुपपत्यादि रूपार्थापत्तिप्रमाणाभावतात्पर्येण मानाभावादिति चंद्रिकोक्ते-राशयमविदुषो व्याकरणरूपं मानमुपदर्शयतः परस्य छलेन निग्रहात् । नहि चंद्रिकाकाराः इच्छायां सन्निति व्याकरणं न जानंतीति सांप्रतमिति । तस्मात्परोक्तस्याभसत्वाद्ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

अत्रोक्तं "चंद्रिकायां ॥ यत्तु परैरस्य शास्त्रस्य पूर्वेण गतार्थत्व-माशंक्य तत्र कार्यनिष्टो वेदभागो विचारितः इहतु वस्तुतत्वनिष्टो विचार्यत इत्यगतार्थतेत्युक्तं । तन्न ॥ इहातत्वभूत सविशेष ब्रह्मविचारायोगाद्ब समुद्रध्यानादिवत्कर्मकांड एवोपासनाविचारो युक्तः । नात्र साधनपादे ॥ निर्विशेषज्ञानार्थत्वेनेह विचारे नित्यकर्मणामपि तदर्थत्वादिहैवतद्विचारस्स्या-दिति ॥

यदत्रोक्तं दीपिकायां ॥ सिद्धब्रह्मपरशब्देन निर्विशेषब्रह्मप्रमाणवाक्य मित्यर्थोविवक्षितः । कार्यपर इत्यस्यापूर्वद्वाराफलोपयोगिक्रियापर इत्यर्थः ।

सविशेषब्रह्मपरवाक्यानामपि वस्तुतः निर्विशेषज्ञानार्थत्वादुत्तरतंत्र एव विचारः । कार्यपरस्य साक्षाद्ब्रह्मसिध्यनुपयोगात्पूर्वतंत्रे विचारः । एतेन उपास्यविशेषब्रह्मविचारस्य उपासनापादे उपासनाविधिविचारस्य चात्र प्रवर्तनायोगादिति चंद्रिकोक्तं परास्तमिति ॥

अत्रोच्यते ॥ पंचपादिकायां हि । वस्तुतत्वनिष्ठो वेदभाग इह विचार्यते इत्युक्तत्वेन तत्वविषये शास्त्रे अतत्वविचारायोगोक्तिश्चंद्रिकायां तावद्युक्तैव । सिद्धब्रह्मपरेत्यादिकंत्वप्रमाणिकमेव । कार्यभूतस्य शबलब्रह्मणोपि सिद्धत्वात् । अस्तु वा तत् ॥ तथापि सगुणोपासनावाक्यानां त्वन्मते चित्तवशीकरणद्वारा निर्विशेषज्ञानोपयोगः । न साक्षादव्यवधानेन ॥ ततश्च नित्यकर्मणामपि चित्तशुद्धिद्वारा ज्ञानार्थत्वेनाविशेषादत्रैव विचारप्रसंगो दुर्निवार एव । नहि अतत्वभूतसविशेषब्रह्मपरंवाक्यं । निषेध्यसमर्पकं । अविद्यमानातत्वभूतार्थविषयकोपासनापरंवाक्यंवा । निर्विशेषब्रह्मणि प्रमाणं । अन्यथा वेदच्छेदानुपपत्तेः । परंपरया महातात्पर्येणनिर्विशेषपरत्वंतु कर्मकांडस्याप्यवर्जनीयं । ततश्चोक्तविभागानुपपत्तिरिति चंद्रिकोक्तं युक्तमिति । केचित्वित्यादिनाशंकितपक्षः स्वेनैव त्यक्त इति न तत्र विचारः । यत्तु मानसज्ञानविधिविचारस्योत्तरतंत्रविषयत्वेपि समुद्रध्यानव्यावृत्तप्रधानज्ञानविधिविवक्षया न तस्यात्र विचार्यताशंकावसर इति । तदपि न समंजसं ॥ अद्वैतमते ज्ञानभिन्नामानसी क्रियाऽर्थहीनापि संभवत्युपासनेत्युक्तत्वेनोपासनाया ज्ञानरूपत्वोक्त्यावपसिद्धांतात् । प्रधानशब्देन साक्षाज्ज्ञानांगत्वविवक्षायामुद्गीथोपासनाद्यसंग्रहात् । परंपरया तदंगत्वविवक्षायां तस्य समुद्रध्यानेपि सत्वात् । कर्मानंगत्वविवक्षायां कर्मसमृध्यर्थोपासनानामत्राविचारप्रसंगात् । एतेन मंडनोक्तमपि समाहितं । समुद्रध्यानात् ध्यानत्वसाम्येन प्राणाद्युपासनानामपि पूर्वतंत्रे विचारापादनस्ययुक्तत्वात । अतएवचंद्रिकोक्तं नानुपपन्नं ॥ अतत्वनि-

ष्टोपासनावाक्यस्य पूर्वतंत्रएव विचार्यस्य वस्तुतत्वनिष्टवाक्यविचारपरशास्त्रे अविचार्यत्वेनानावश्यकत्वात् । यत्तु ॥ खंडने अपुनरावृत्तिरूपमोक्षंप्रतीत्यत्र मोक्षशब्देन स्वर्गादिविलक्षणं हिरण्यगर्भादि लोकप्राप्तिरूपं फलं विवक्षितं नतु मोक्ष इतीति । तदसुद्धं ॥ हिरण्यगर्भलोकस्थानामप्यंशेनात्र जननादिसद्भावात् । तत्रमोक्षशब्दाव्यवहाराच्च ॥ अपुनरावृत्तिरूपइति स्पष्टमेव खंडने अपुनरावृत्तेर्मोक्षत्वाभिधानाच्च । गौणमोक्षातिरिक्तस्य फलाध्यायाविचारितस्य मोक्षस्याप्रामाणिकत्वात् । "सर्गेपि नोपजायंते प्रलयेनव्यथंतिचेति गीतायां" । अनावृत्तिश्शब्दादितिसूत्रे । "न स पुनरावर्तत"इतिश्रुतौ च सगुणं प्राप्तस्य भोगान्भुंजानस्यापुनरावृत्त्युक्त्यानित्यत्वावगमेन मोक्षांतरस्य शंकितुमशक्यत्वाच्च । निर्गुणमोक्षप्रत्याशातु आपाततस्तथाप्रतीयमानश्रुत्यादीनां प्रसंगादिपरतया पूर्वोत्तराविरोधायाकरेव्याख्यातत्वाद्दूरनिरस्ता ॥

यदपि ॥ एतेन अतत्वावेदकवाक्यविचारत्वेनोपासनावाक्यानां पूर्वतंत्रयोग्यतापादनमपास्तं । अस्माभिरतत्वावेदकवाक्यविचारत्वस्य पूर्वतंत्रविषयतावच्छेदकत्वानंगीकारादिति । तदपि मंदं ॥ पंचपादिकायामिहवस्तुतत्वनिष्टइत्युक्त्यातत्वावेदकवाक्यविचारत्वमुत्तरतंत्रविषयतावच्छेदकमित्यवगमेन ताद्दशोपाध्यनाक्रांतस्योपासनावाक्यस्य पूर्वतंत्रयोग्यताया अकामेनाप्यंगीकार्यत्वात् । यच्च ॥ प्रकाशप्रसरे "तस्मात्सर्वेंद्रियाण्यादौ निधाय पुरुषोत्तमे । दृष्ट्वा तं परमं विष्णुं तल्लोकं प्रतिपद्यत" इतिवचने दृष्ट्वेत्युक्त्या त्वदभिमतमोक्षस्यापि ज्ञानफलत्वेन नोपासनाफलत्वमित्युक्तमपास्तं । अस्मन्मते सगुणोपासनस्यापि दर्शनाविनाभूतत्वादित्यादि । तदप्ययुक्तं ॥ अपुनरावृत्ति लोकप्राप्तिरूपफलस्य नोपासनासाध्यत्वं । किंतु तत्साध्यविद्यासाध्यत्वमेवेति उपासनस्य साक्षात्फलत्वोक्तिरयुक्तेत्यस्यानेनापरिहारात् । परंपराविवक्षायां त्वदभिमता

भित्तिचित्रायितपरममोक्षस्यापि तत्फलत्वसंभवात् । यत्तु ॥ न्याय-रक्षामणौ उपासनानां निर्विशेषज्ञानप्रत्यासन्नोपायतयात्रैव संगतिरित्युक्त-मिति । तदप्येतेन परास्तं ॥ तत्रैवोपासनानां चित्तवशीकरणद्वारा-शुद्धब्रह्मप्रतिपत्युपायताया एवोक्तत्वेन साक्षादुपायताया अनुक्तत्वात् । चितवशीकरणद्वारेव चित्तशुद्धिद्वारा नित्यकर्मणामपि इहैव संगातिसंभवाच ।

यदपि ॥ नित्यकर्माणां परंपरया ज्ञानार्थत्वेपि न प्रत्यासन्नोपा-यत्वं । तदुक्तंकल्पतरौ ॥ "वशीकृते मनस्येषां सगुणब्रह्मशीलनात् । तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पन"मितीत्यादि । तत्स्वव्याहत्यादिनो-पेक्ष्यमेव । कल्पतरौ चित्तवशीकरणद्वारैवोपयोगस्योदितत्वात् । वस्तु-तस्तु ॥ रूपादियुक्तपरागभूतसविशेषध्यानेन तद्विपरीनिर्विशेषज्ञानायोगे-नानयोः परस्परविरुद्धत्वान्नकार्यकारणभाव इति । यच्च ॥ तत्र वयं न पश्यामः यद्भवतां तन्निराकरणमेव कफोणिगुडायितमिति । तत्रोत्तरं ॥ अंतस्थत्वनये सविशेषज्ञानस्य दृष्टद्वारावा अदृष्टद्वारावा प्रतिबंधकनिवृत्तिद्वा-रावा निर्विशेषज्ञानार्थत्वमित्यादिविकल्पतद्दूषणेन कफोणिगुडायितमिति शंकां-परिहृत्य निराकणप्रकारं स्फुटीकृत्य दीपिकाकारं तोषयिष्याम इति ॥

यदपि ॥ यत्तु मंडने इत्यादिना सर्वे वेदायत्पदमामनंतीत्यादिना सर्वोपि वेदः इहैव विचार्यत इति मंडनोक्तमनूद्य अनेन पूर्वतंत्रगतार्थताशंका कथं परिहरणीयेत्यादिदूषणं । तदप्यज्ञानमूलं ॥ चंद्रिकायामेव तस्मा त्सर्वस्यापि वेदस्य ब्रह्मपरत्वात्सर्वोपीहैवविचार्यः कर्मदेवमीमांसयोर्वैदैकदेशावां-तरतात्पर्यविषयकर्मदेवताविचार इति व्यक्तमुक्तत्वात् । टीकायामपि ॥ "शब्दजातस्य सर्वस्य यत्प्रमाणश्चनिर्णय" इत्यादिप्रमाणानुरोधेन अन्येषां-द्वित्रशाखानिर्णायकत्वेपि अस्त्येव ब्रह्मसूत्राणां सर्वशाखानिर्णायकत्वं । तन्निर्णयस्य ब्रह्मसूत्रनिर्णयमूलत्वेन श्रुतिमूलकस्मृतिवदवैयर्थ्योपपत्तेरित्युक्त्याचै-तच्छंकायागर्भश्चावेणैव गतत्वात् । एतेन ॥ गुरुराजीयोक्तस्यानुपपन्न-

तापिदूरापास्ता । अस्मन्मतेतु भिन्नशास्त्रत्वप्रकारं मीमांसाद्वयस्यागतार्थताप्रकारंच संप्रदायज्ञेभ्यो महत्तमेभ्यश्चंद्रिकाशयं सम्यगवबुध्य जानीहीत्यलं विस्तरेणेति । तस्मात्परोक्तस्याभासत्वाद्भश्चक्तदुक्तं दूषणं सुस्थमिति सिद्धं ॥

अत्र चंद्रिकायां ॥ "परमते ब्रह्मणि सामान्यप्रसिद्धि विशेषविप्रतिपत्ति प्रदर्शनमयुक्त"मित्युक्तं ॥ तत्प्रकारश्चेत्थं । तथाहि ॥ आत्मा च ब्रह्मेत्यादिना ब्रह्मणि सामान्यप्रसिद्धिविशेषविप्रतिपत्ती । किंविशिष्टे ॥ उत निर्विशेषे चैतन्यमात्रे । नाद्यः ॥ तस्यविशिष्टस्य प्रत्यगभेदाभावेन तदुद्दिश्यजीवाभेदविधानायोगात् । तस्य मिथ्यात्वेन मुमुक्षुभिरजिज्ञास्यत्वाच्च । भाष्ये "नित्यशुद्धबुद्धमुक्तस्वभाव"मित्यनौपाधिके ब्रह्मणि प्रसिद्धिप्रदर्शनायोगाच्च । न द्वितीयः ॥ चैतन्यमात्रे विप्रतिपत्यभावात् । चिन्मात्रे देहादिभिन्नत्वादेनिर्णीतत्वात् । नहि चिन्मात्रे देहत्वादिविप्रतिपत्तिः । देहेंद्रियादिविशिष्टे सव्यापारे एव तद्भावात् । तत्र जीवाभेदादिविप्रतिपत्त्ययोगाच्च । नहि भेदवादिनश्चिन्मात्रत्वं जीवस्य नाभ्युपयंति । नापि द्रव्ये घटाभेदविप्रतिपत्तिरिवात्र सा संभाविता । जीवस्यापि चिद्रूपत्वात् । सर्वज्ञं सर्वशक्तिसमन्वितमित्यादिना विशिष्ट एव सामान्यप्रसिद्धिविप्रतिपत्योरुक्तेश्च । चिन्मात्रस्य भामतीमते अवेद्यत्वेन शब्दात्तत्प्रतीत्ययोगाच्च । जिज्ञासाधर्मिणि ब्रह्मण्येव प्रतीचोन्यत्रनेति विप्रतिपत्तेर्नवैयधिकरण्यमित्यपि न युक्तं । भेदाभेदविप्रतिपत्तौ त्वन्मते ब्रह्मविचारपरे द्वितीयसूत्रे जीवाभेदस्यैववाच्यत्वेनतद्भेदकलक्षणोक्तेरयुक्तत्वात् । त्वन्मतेपि प्राणभृच्चेत्यादौ जन्मादिसूत्रोक्तलक्षणस्य जीवे निषेधात् । नच विशिष्टरूपेण तद्भेदोपि सम्मत इति वाच्यं । तर्हि ब्रह्मजिज्ञासेत्यनेन ब्रह्मणि तदभेदविधानायोगात् । तत्र शुद्धरूपेणाभेद इति चेत् । शुद्धे शुद्धाभेदे विवादाभावेन वैयर्थ्यात् । अद्वैतचंद्रिकायां चिन्मात्रे कथंचि-

दपि संशयायोगादित्युक्तेश्च । किंच धर्मितुल्यसत्ताकज्ञायमानसामान्याकार तादृशाज्ञायमान विशेषाकारोभयवत्वस्य विप्रतिपत्तिधर्मित्वजिज्ञास्यत्वादिव्यापकत्वेन त्वन्मते निर्विशेषेतस्याभावेन धर्मित्वासंभवश्च । ततश्च ब्रह्मजिज्ञासेत्यत्र ब्रह्मशब्देन चैतन्यमात्रविवक्षायां तस्याविप्रतिपन्नत्वात् । तत्र जिज्ञासासाध्यविप्रतिपत्तिविरुद्ध धर्मविशेषनिश्चयायोगः । शब्दतः प्रसिध्यसंभवश्च । विशिष्टविवक्षायांतु तस्य मिथ्यात्वात् । तद्विचारस्य मुमुक्षुभिरकर्तव्यत्वाच्च न जिज्ञास्यत्वमित्यादिरूपानुपपत्तिःसुस्थैव । अत एवोभयानुगते चिन्मात्रे तत्वंपदलक्ष्ये विप्रतिपत्तिः जिज्ञासाधर्मितु चिन्मात्रमेवेति प्रत्युक्तं । तद्विशेषं प्रतीत्यादिनाऽद्वैतभाष्ये धर्मिविकल्पेनानुपपत्तेः प्रदर्शितत्वात् । अत्रोक्तमद्वैतदीपिकायां । चिन्मात्रमेव विप्रतिपत्तिधर्मीति भामत्यादिसम्मतमिति । तन्न ॥ यतोत्र यथाश्रुतभाष्यभामत्यादिग्रंथसंदर्भेण विशिष्ट एव विविप्रतिपत्तिस्स्वरसतया प्रतीयते । अत एव सपक्षःप्रकाशप्रसरादौ प्रर्शितः । अस्तुवा त्वदुक्तरीत्या चिन्मात्रे विप्रतिपत्तितात्पर्यकताभाष्यादेः । तथापि तत्पक्षे चंद्रिकोक्तानुपपत्तिरूपतमः परिहारस्तत्र प्रकाशहीनयोक्तदीपिकया कथं लब्ध इति दीपिकाकार एव विभावयतु । एतेन ॥ मंडनोक्तमपि समाहितं । कारणत्वस्य स्वरूपलक्षणतायाः साधयिष्यमाणत्वात् । सविशेषनिरूपणस्य व्यर्थत्वेनासंगतत्वात् । ''वशीकृते मनस्येषा''मित्यादिदीपिकाकारवचनस्यानन्वितत्वात् । ब्रह्मपदस्य चिन्मात्रे अस्वारस्यस्योक्तत्वात् । द्वैतवादिभिर्यादृशजीवभेदोभिधित्सितः तादृशजीवाभेदस्यैवाद्वैतिभिस्स्थाप्यत्वाच्च परोक्तं सर्वमयुक्तमनुपयुक्तंचेत्यलं । तस्मात्परोक्तस्याभासत्वाद्ग्रंथकृदुक्तं दूषणं सुस्थमिति सिद्धं ॥

अत्रचंद्रिकायामाद्यसूत्रार्थः ॥ श्रीमद्भाष्यटीकानुरोधेन सोपपत्तिकं सम्यग्विवृतः । अत्रोक्तमद्वैतदीपिकायां सूत्रार्थोप्यनुपपन्न एव ।

भगवदेकाश्रयत्वाद्यानंतर्यस्याथशब्दार्थत्वासंभवात् । भगवदेकाश्रयत्वस्य जिज्ञासाधीनत्वेनान्योन्याश्रयादिति । तदज्ञानमूलं ॥ स्वव्याघातकंच । 'यत्वादौ श्रद्धया सिद्धं पुनर्न्यायेन साधित''मिति न्यायेन विचारात्प्रागपि आप्तपित्राद्युपदेशेन वा अन्यथा शरणं नास्ति त्वमेव शरणं ममेत्यादिशिक्षणपरबाल्योपदिष्टमंत्रार्थानुसंधानेन वा अनन्यार्श्चितयंतो मां ये जनाः पर्युपासत इत्यादिगीताद्यापातप्रतीतार्थानुसंधानेन वा प्राग्भवीय ंस्कारपाटवादिना वा । भगवदेकाश्रयत्वादिसिद्धिसंभवात् । अन्यथा त्वन्मतेपि मोक्षजनकज्ञान विषयब्रह्मैकाश्रयत्वं विना मुमुक्षोरन्यपरित्यागेनब्रह्मविचारे प्रवृत्ययोगात् । "शमदमाद्युपेतस्स्यात्तथापितुतद्विधेस्तदंगतया तेषामवश्यानुष्ठेयत्वात्" । शांतो भवेत् दांतो भवेदित्यादि शास्त्रार्थज्ञानाधीनज्ञानशमाद्यानंतर्याभिधानेपि अन्योन्याश्रयापातात् । श्रवणादेर्विचारांगगुरूपसत्तिपूर्वभावित्ववत् । "आब्रह्मस्तंबपर्यंतमसारंचाप्यनित्यकं । विज्ञाय जातवैराग्यो विष्णुपादैकसंश्रयः । स उत्तमोऽधिकारीस्यात्सन्यस्ताखिलकर्मवा''नित्यादिस्मृतौ तस्याधिकारिविशेषणत्वोक्त्या विचारात्पूर्वकालीनत्वस्य स्पष्टमवगमाच्चेति । अधिकंतु चंद्रिकायामेव व्यक्तं । तथाचेदं दूषणाभासाभिधानं तद्ग्रंथांध्यनिबंधनमेवेति ॥

यत्तु ॥ दमपदग्रहणवैयर्थ्यमपि तन्मते । शमादीत्यत्रत्यादिपदेनैव सर्वसंग्रहादिति । तदपि ग्रंथांध्यमूलमेव ॥ भाष्ये टीकायां चंद्रिकायांवा समदमाद्यानंतर्यमथशब्दार्थ इत्यनुक्तेः । भाष्ये अथशब्दो अधिकारानंतर्यार्थे इति स्ववचनं आनंतर्येधिकारस्येति प्रमाणोदाहरणंच टीकायांतु अथशब्दस्यानंतर्यमात्रार्थत्वेप्यधिकारस्य योग्यतया संबंध इत्युक्तं । चंद्रिकायांतु तस्मादधिकारानंतर्यार्थोथशब्द इत्युपसंहारः कृतः । सतिचैवं ग्रंथसंदर्भे दीपिकाकारीयमिदं दूषणभासाभिधानमनुक्तोपालंभनमेव । परमत इवास्मन्मते विवेकादिसंग्राहकमादिपदं शमदमादीति प्रयुज्य पुनः पदां-

तरेण विवेकादिकमुपादाय साधनचतुष्टयानंतर्यार्थत्वानभिधानात् । अधिकारसंपत्यनंतरमित्यत्राथशब्दार्थकथनाच्च । क्वचित्व्याख्यातृभिः शमदमादिग्रहणमधिकारस्वरूपज्ञापनार्थं । तत्रापि इंद्रियनिग्रहस्य सकलसाधनांगत्वेन शमसमकक्षतया प्राधान्यसूचनाय दमग्रहणमित्यवैयर्थ्यमेवेति ।

यदपि ॥ अथशब्दस्योभयार्थत्वे वृत्तिद्वयविरोध इति । तत्प्रकाश एव तंत्राद्याश्रयणेनपरिहृतं । यत्पुनस्तत्राप्रकृतशब्दरत्नमुपन्यस्य वाक्यभेदापादनं । तदप्यज्ञानमूलं ॥ "पृथगेवच वाक्यत्वं पृथगन्वयतो भवे"दित्युक्तरीत्या वाक्यभेदप्रयोजक पृथगन्वस्याथशब्दाभिधेयमंगलस्यामंगीकारेणापादकासिद्धेः । अत एव पिंगाक्ष्यागवेत्यादौ पृथक्पृथक्क्रियापदेनान्वयादेवहि तत्र वाक्यभेदोंगीकृतः । यदप्यत्र ॥ वाक्यार्थानन्वितमंगलाभिधायकत्वं व्यर्थमिति । तदपि अथशब्दस्य विष्णुरूपमंगलार्थत्वे उक्ते विष्णुवाचकत्वात् अथशब्दोच्चारणं विघ्ननिवारणकारणत्वान्मंगलक्रियारूपं भवति भगवन्नामसंकीर्तनवत् । अन्यथा घटादिशब्दोच्चारण श्रवणादेरपि मंगलत्वापत्तेः । विष्णुवाचकत्वंच "अकारस्सर्ववागात्मापरब्रह्माभिधायकः । तथौ प्राणात्मकौ प्रोक्तौ व्याप्तिस्थितिविधायका" वित्यादिप्रमाणसिद्धमित्यादिना प्रकाश एव परिहृतमिति । यत्तु चशब्दास्वारस्यादिव्युत्पादनं तदपि मृतमारणमेव । तत्र चशब्दास्वारस्यकथनंतु चशब्दस्यावधारणार्थत्वेन समुच्चायकत्वानंगीकाराद्भ्रमःस्वावेणेव गतं । तच्चानंतर्यार्थ एव न तु कात्स्न्यार्द्यर्थकः वैयर्थ्यादित्यन्यनिषेधायेत्याकरे व्यक्तं । समुच्चयार्थत्वेप्युपपत्तिर्बहुधा समर्थिता प्रकाशप्रसरे । एतेन कात्स्न्यार्द्यर्थत्वापादनमपास्तं । मंगलप्रयोजनकत्वेतु न वाक्यभेदशंका । त्वयैव कार्यज्ञाप्ययोरन्वयानंगीकारात् । त्वद्भाष्येपि मंगलस्याथशब्दकार्यत्वोक्तेः ॥

यदपि ॥ नहि गोशब्दः सास्नादिमदर्थः दुग्धार्थश्चेति संभवतीति । तदसत् । दुग्धस्य गोशब्दकार्यत्वाभावेन वैषम्यात् ।

साक्षावदर्थः तदुच्चारणार्थश्चेति प्रयोगस्त्विष्ट एव । एतेन मंडनोक्तं समाहितं ॥ तंत्राद्याश्रयणेन युगपद्वृत्तिद्वयेन मंगलवाचकत्वस्यानुक्तत्वात् । यत्तु ॥ सुकृती धनीच देवदत्त इत्यादौ संबंधभेदेनापि विधेयसमुच्चयबोध इत्यपास्तं । संबंधसमान्यार्थेनिप्रत्ययेनापेक्षितसंबंधबोधवदित्यादि । तदप्यसारं ॥ उक्तप्रयोगद्वये इनिप्रत्ययस्यैकत्वेपि तदर्थस्याधाराधेयभाव स्वस्वामिभावादिरूपस्य भिन्नभिन्नत्वेनोक्तदोषावारणात् । तत्वप्रकाशिकापाठस्योपपत्तिः प्रकाशप्रसरे सम्यग्व्यक्तेति पुनरत्र तदुद्गीर्णनमांध्यनिबंधनमेव ॥

यदपि ॥ अतश्शब्दार्थखंडनं ॥ तदपि मृतमारणमेव ॥ प्रकाशप्रसर एवास्याः शंकायाः परिहृतत्वात् । तथापि श्रोतृबुद्धिसौकार्याय किंचिदुच्यते । यत्तावदुक्तमतःशब्दस्य सप्रयोजनत्वादित्येवार्थोस्तु न तु जिज्ञासैकसाध्येत्यादिरर्थः । वैयर्थ्यादिति ॥ तदेतत्तत्ववादिसिद्धांताज्ञानविजृंभितं । तथाहि तत्र हि निष्प्रयोजनत्वशंका द्विविधा । एका ब्रह्मशब्दनिवर्त्या अन्या तु अतआदिपदव्यावर्त्याचेति । तत्राद्या ब्रह्ममिति ज्ञायमानेपि मोक्षानुपलंभान्निष्प्रयोजनत्वमित्येवं रूपा विषयसमर्पकब्रह्मपदेनैव सति विषयभूते ब्रह्मणि तज्ज्ञानं प्रयोननं तत्कामोधिकारीच सूचित इति व्यावर्तिता । द्वितीया तु ॥ नतावद्ब्रह्मज्ञानं तत्प्रयोजनं तस्य कर्मणा ज्ञानमातनोतीत्यादिना लघूपायसाध्यकर्मणैव सिद्धेः । नापि तत्प्रसादः ॥ तस्यापि तत्कर्महरितोषं यदित्यादिना कर्मणैव संभवात् । मिथ्याभूतबंधनिवृत्तिरूपमोक्षस्य प्रसादनैरपेक्ष्याच्च । नापि मोक्षः तस्याप्यपामसोमममृता अभूमेत्यादिना कर्मणैव सिद्धिसंभवात् निष्प्रयोजनत्वमित्येवं रूपा । एवं मुमुक्षुमात्रस्याधिकारित्वे स्त्रीशूद्रादीनामप्यधिकारप्राप्त्या त्रयी न श्रुतिगोचरेत्यादिविरोधात् । अन्यस्य च तद्व्यावृत्तस्याधिकारस्याभावान्निरधिकारिकत्वमित्येवं रूपा चाथातःपदाभ्यां व्यावर्तिता ।

ततश्च श्रौतस्य प्रयोजनादेर्न्यायेनोपपादनार्थं सूत्रमितिविवरणेपि व्यक्तमुक्तत्वेन श्रुतिस्मृत्यादि सहकृतन्यायेन जिज्ञासयैव ज्ञानं ज्ञानेनैव प्रसादः । बंधस्य सत्यत्वात्प्रसादापेक्षा प्रसादादेव मोक्ष इत्याद्यर्थकलापस्यैव जिज्ञासाकर्तव्यत्वे प्रयोजनाभिधायिनातःशब्देनावश्यवक्तव्यतया सुदृढप्रयोजनत्वादुक्तंयुक्तमिति। उक्तशंकाव्यावृत्तिप्रकारस्तु। "श्रवणं मननंचैवेत्यादिस्मृतौ"नचैतानि विना कश्चिज्ज्ञानमापकुतश्चनेति नियतान्वयव्यतिरेकवत्वोक्त्याश्रवणादेरेव मुख्यसाधनत्वं कर्मणां तु परंपरया ज्ञानांगत्वं" । कर्मणात्वधमःप्रोक्तः प्रसादः श्रवणादिभिः । मध्यमो ज्ञानसंपत्या प्रसादस्तूत्तमो मतः । प्रसादात्वधमाद्विष्णोः स्वर्गलोकः प्रकीर्तितः "इत्यादिना ज्ञानजन्यप्रसादस्यैव मोक्षसाधनता बंधस्य प्रत्यक्षादिमानसिद्धत्वेन सत्यतया प्रसादसापेक्षतातन्निवृत्तेः । कर्माधीनमोक्षस्य" यावदिंद्रो यावन्मनुरि"त्यादिना गौणत्वमित्याद्युपपादनेनाकरेव्यक्तः । प्रसादस्याप्रकृतत्वंतु" यस्य प्रसादात्परमार्तिरूपादस्मा त्संसारान्मुच्यते नापरेण, । नारयणोसौ परमो विचिंत्यो मुमुक्षुभिः कर्मपाशादमुष्मादि"त्यादिविचारविधायक विषयवाक्य एव प्रकृतत्वादसंभवदुक्तिकं ॥

यदपि ॥ यमेष आत्मा प्रसन्नस्सन् वृणुते इति प्रकाशे प्रसन्नपदाध्याहार इति शब्दतः प्रसादस्य न लाभ इति च । तदप्यज्ञानमूलं ॥ प्रकाशे प्रसन्न इत्यस्य श्रौत एष इति पदव्याख्यानरूपत्वेनाध्याहाराभावात् । इषुइच्छायामित्यस्मात अर्शआदिभ्योऽचिकृते गुणे च एष इति निष्पत्तेः । प्रसादस्यापीच्छाविशेषत्वात् । अत एव एष एष इत्यन्यंतरवैयर्थ्यमिति च निरस्तं । प्रसादवाचकपदाभावशंकापिपरास्ता । तथाचोक्तमिदं दूषणं कथममंदधीगम्यं । तमेव विदित्वेत्यत्रत्यावधारणस्य मुमुक्षुसंबंधिमुख्यसाधनांतरव्यावर्तकत्वेन मोचकसंबंधिप्रसादव्यावर्तकत्वाभावप्रकारस्य सुधादौ व्यक्तत्वात् । अयोगव्यवच्छेदकत्वसंभवाच्च तेन प्रसादसाधनत्वनिषेधोक्तिरप्यज्ञानादिनिबंधनैव । एतेन जगत इव प्रसादस्य मोक्षसाध-

नत्वादेः प्रमितत्वाभावान्नातःपदेन ग्रहणं युक्तमित्यपास्तं । "यस्य प्रसादात्परमार्तिरूपात्" । यमेवैषवृणुते "प्रसादस्तूत्तमोमतः" ॥ उत्तमस्त्वेवमुक्तिदः "नतादृशीप्रीतिरीशस्यविष्णोः" ज्ञानिनोहिप्रीत्योत्यर्थं "सचमेप्रियः" इत्यादिभिर्ज्ञानसाध्यत्वेन मोक्षसाधनत्वेनच प्रसादस्य प्रमितत्वात् । एतेनैव यस्य प्रसादादित्यादेर्बहुप्रमाणविरोधोक्तिरपि तिरोहिता । तमेवेत्यादेर्मुमुक्षुसंबंधिसाधनावधारणायोगव्यवच्छेदाद्यर्थत्वेनाविरोधकत्वस्योक्तत्वात् । प्रमाणांतराविरोधायान्यथानुपपत्यालक्षणादिना ज्ञानस्य प्रसादद्वारकसाधनत्वार्थकतायाः आकरे व्यवस्थापितत्वाच्च ॥

यदपि ॥ जन्मसूत्रेश्रौतमिमानीति पदं वचनविसक्त्यादिव्यत्यासेनानूद्यते नतु प्रमाणसिद्धं जगदितीति । तदेतदुन्मादमूलमेव ॥ अनूदितस्यापीदं शब्दस्य बुद्धिस्थवाचकत्वेन सौत्रेणपदेनाप्राकृतत्वाज्जगतः प्रमाणांतरेणैव बुद्धिस्थत्वमंगीकृत्येदं पदेन तत्परामर्शस्य वक्तव्यतया उक्तसमाधेस्सुपपन्नत्वात् । श्रौतस्यापीदं पदस्य प्रमाणांतरसिद्धजगत्समर्पकत्वस्यानिवारणाच्च । "ब्रह्मतर्कस्तर्कशास्त्रं विष्णुनायत्समीरित"मित्याद्यनेकप्रमाणप्रमितस्य ब्रह्मतर्कस्य वचनान्युदाहृत्य तत्वनिर्णयादौ प्रमाणलक्षणादिव्यवस्थापनेन तस्यार्वाचीनेनात्यल्पविदा कूपकूर्माभितेनाज्ञातत्वमात्रेणापलापायोगात् । प्रमाणमीमांसाशास्त्रयोरंगांगिभावापन्नत्वेनांगशास्त्रे प्रकृतस्यांगिनि परामर्शसंभवेनोक्तप्रलापस्यानादरणीयत्वात् । अत एव जगत्सत्यत्वादिकमप्यतश्शब्दार्थं इत्युक्तं समाहितं । नहि विषयवाक्यप्रमितत्वमेव सर्वनामपरामर्शप्रयोजकबुद्धिस्थत्वसंपादकं । किंतु यथायथं प्रत्यक्षादिप्रमाणप्रमितत्वमित्यन्यत्र समर्थितत्वात् । एतेनैव मंडनोक्तमपिसमाहितं । "द्रव्यं कर्मचेत्यत्र मोक्षयोग्यत्वादिस्वभावस्येश्वराधीनत्वोक्त्या स्वरूपेणावस्थितिरूपमोक्षस्यापि प्रसादसाध्यत्वावगमात्" । न ऋते इत्यादिकंतु मोक्षसाधनज्ञानांगक्रियादेरीश्वरप्रसादाधीनत्वमवगमयति ॥

यदपि ॥ मंडने वक्ष्यमाणं मोक्षस्य प्रसादसाध्यत्वादिकमतःश-ब्देन परामृश्यते इत्युक्तमकिंचित्करमिति । तदप्येतेन निरस्तं ॥ प्रसादमोक्षयोःसाधनसाध्यभावस्य विषयवाक्य एव प्रतिपाद्यत्वोपपादनात् । प्रमितत्वमात्रस्य प्रयोजकत्वेन विषयवाक्येनैव प्रमितत्वस्य सर्वनामपरामर्शा-प्रयोजकत्वाच्च । यत्तु ॥ अकारस्य विष्णुवाचकत्वेपि न तत्प्रसादवाच-कत्वं प्रमितमिति । तदपि भ्रांतिमूलं ॥ एतादृशप्रसादस्य जिज्ञासा-कर्तव्यत्वे प्रमाणत्वाभावेन जिज्ञासाजनकत्वरूपहेतुत्वस्यात्र विवक्षितत्वात् । तस्यच ''सहिसर्वमनोवृत्तिप्रेरकस्समुदाहृत'' इत्यादिप्रमाणसिद्धत्वात् । तत्र प्रसन्नस्यैव ब्रह्मणः सर्वमनोवृत्तिप्रेरकत्वात् । ''परस्य ब्रह्मणो विष्णोः प्रसादादिति वा भवेदि''त्यादिप्रमाणबलेनप्रसादार्थकत्वे सिद्धे प्रसन्नाद्ब्रह्मत इति तत्पर्यवसितार्थस्योक्तौ बाधकाभावात् । मंडने तु ॥ कृत्वा चिंत-या लक्षणाश्रयणं । यद्वा उदाहृतस्मृत्यनुरोधेनात इत्यस्य विष्णुप्रसादादि-त्यर्थकत्वे वक्तव्ये अकारस्य प्रसादे मुख्यवृत्यभावविवक्षायां लक्षणाश्रयणं युक्तमेव । सति प्रयोजने लक्षणाया अदोषत्वात् । विवरणे जिज्ञासा-पदस्यविचारे ब्रह्मपदस्य चैतन्यमात्रे च लक्षणाश्रयणाच्च । त्वन्मते उपक्रमादेरिवात्रापि परस्य ब्रह्मण इत्यादिस्मृतेरेव लक्षणातात्पर्यग्राहकत्वात् ॥

वस्तुतस्तु ॥ अन्विताभिधानवादे घटे न जलमाहरेत्यादौ पदां-तरसमभिव्याहारेण घटशब्देन छिद्रेतरघटस्येवात्रत्याशब्देन जिज्ञासादिपदांतर सन्निधानेन प्रसन्नब्रह्मण एवान्वययोग्यतयोपस्थितिरिति न लक्षणा नवा त्वन्मते उपक्रमादिलाभोपि पूर्वमेव निरस्तत्वात् । एतेन प्रसरोक्ति-रपि समाहिता । यत्तु ॥ प्रकाशप्रसरे प्रसादमात्रस्यातःशब्दार्थत्वक-थनमयुक्तमितियत् तत्खंडनाकाराशयानवबोधविजृंभितमिति । तन्न ॥ अतशब्दस्य जिज्ञासाकर्तव्यत्वे प्रमाणरूपहेतुपरत्वेन प्रसादद्वारकमोक्षफलकत्व-स्यैवातःशब्दार्थतया प्रसादस्य तदर्थत्वाभावात् । अतश्शब्दार्थभूतस्तु

प्रसादो जिज्ञासाजनक एव न मोक्षजनकः । तथाच प्रसादस्य जिज्ञासा-कर्तव्यत्वे ज्ञापकतयातहेतुत्वभ्रांतिमूलमत इत्यस्य ब्रह्मप्रसादादित्यर्थमभ्युपेत्य तत्राशब्दस्य प्रसादार्थकत्वखंडनं तत्प्रसादस्य मोक्षहेतुत्वज्ञानसाध्यत्वाक्षिखं-डनंच खंडनकारीयं तत्ववादिसिद्धांताज्ञानविलसितंवा प्रकाशप्रसरोक्तिः खंड-नकाराशयाज्ञानविजृंभितावेति भवानेव पृष्टो व्याचष्टां । इत्थंचाथमुन्मत्त-प्रलापो नादेय इतिसंक्षेपः ॥

यत्तु ॥ ब्रह्मशब्देन गुणपूर्णं त्विवक्षितमिति मध्वसिद्धांतोपि दुरुपपाद एव । आविद्यकभेदातिरिक्तविशेषेप्रमाणाभावेन कल्पितभेदेन तदाश्रयत्वस्य व्यावहारिकत्वेन कल्पितविशेषवतो ब्रह्मशब्दार्थत्वे न कोपि विरोध इति । तदपि मोहमूलं ॥ विशेषस्य प्रकाशप्रसर एव सम-र्थितत्वेन तेन तात्विकपूर्णत्वसिध्या चैतन्यमात्रग्रहणे विरोधस्यावर्जनीय-त्वात् । अनंदो न ब्रह्मेत्यादिप्रतीत्यभावेन भेदकल्पनायोगेन तेनानंदंब्र-ह्मण इत्यादिव्यवहारानिर्वाहात् । प्रतीतिं विना प्रातीतिकासिद्धेः । आनंदो ब्रह्मेति अभेदे गृह्यमाणे भेदभ्रमस्याप्ययोगाच्च । प्रातिभासि-कस्य शुक्तिरूप्यादिवदर्थक्रियासंभवाच्च । संभवेवा प्रतीतिद्वितीयक्षणेतूत्प-न्नस्याधाराधेयभावस्य तथैवावस्थाने प्रतीतिनाशकाले प्रातीतिकभेदस्याप्यभा-वादभिन्न एवाधाराधेयभावपर्यवसानेन भेदकल्पनाया व्यर्थत्वात् । अता-त्विकस्य तात्विककार्यविघातकत्वेनातात्विकभेदेन तात्विकाभेदकार्याधाराधे-यभावानुपपत्तिशमनानुपपत्तेः । वस्तुतस्तद्धर्महीनस्यापि कल्पितभेदेन तद्ध-र्मवत्वांगीकारे शून्यवादिकल्पितासत्वादिनापि ब्रह्मणः कल्पितभेदेन गुणि-त्वापाताच्च । स्वस्मिन्नपि स्वाधारत्वप्रतीत्यापत्तेश्च । प्रातीतिक इति कोर्थ इत्यादिना तादात्म्यानिरसनप्रस्तावे अस्य दूषितत्वाच्चेति । एतेन ॥ वेदांतदर्शने व्यवहारदशायामेव गुणगुण्यादिभेदस्य विचारेण मिथ्यात्वनिश्च-यात् तादृशो भेदः प्रातीतिकः अभेदस्तु व्यावहारिकोतोभिन्नसत्ताकत्वाच्च-

योरविरोध इति अद्वैतचंद्रिकोक्तमपास्तं । तथासति भेदस्य विचारेणमिथ्यात्वनिश्चयोत्तरं विशिष्टबुद्धौ भेदभानानुपपत्तेः । अन्यथा घटादेरपि प्रातीतिकत्वप्रसंगात् । उक्तदोषाच्चेति ॥

यदपि ॥ मायांतु प्रकृतिं विद्यादित्यादौ सृष्ट्यादिप्रयोजकतया ईश्वरव्यवहारप्रयोजकतयाच्च मायैव विवक्षिता । साचानिर्वाच्या विनश्वराचेत्यादि । तदपि ॥ श्रुत्यर्थाज्ञानमूलं । तथाहि ॥ नतावत् "अविद्यायामंतरेवर्तमाना इति श्रुतिस्थाविद्यापदेन त्वदभिमतानिर्वाच्याज्ञानसिद्धिः । जीवस्वरूपबंधिकायाः प्रकृतेरेव तत्राविद्यापदवाच्यत्वात् । "तथापि प्रकृतेर्बंधो ब्रह्मणा सह भिद्यते" इति वचनात् । नच सैवास्माकमविद्येति वाच्यं । त्वदविद्यायाः ज्ञानसमानविषयकत्वेन सदसद्विलक्षणत्वेनच त्वयाभ्युपगतत्वेनास्याअनीदृशत्वात् । नासदासीदित्यादिश्रुत्या सदसद्विलक्षणत्वसिद्धिरितितु न शंक्यं । ब्रह्मणोपि मिथ्यात्वापत्यादिना तद्युतेस्तदर्थकताया निरस्तत्वात् । निरासप्रकारश्चाकरे व्यक्तः । नाप्यजामेकामित्यादिश्रुतिस्तत्र मानं । तस्या अपि त्रिगुणात्मकप्रकृतिपरत्वात् । त्वया अविद्याया ज्ञाननिवर्त्यत्वारोपितत्वयोरंगीकारात् । एतच्छुत्युक्तप्रकृतेस्तु "गौरनाद्यंतवती कालश्च नित्यः पुरुषश्च नित्यः प्रकृतिश्च नित्या किंतु देवदेवः" इत्यादिभिर्नित्यत्वावगमात् । एवं श्वेताश्वतरोपनिषदि "यादांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदंति । अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः" इति पूर्ववाक्ये मायिशब्देन परमेश्वरस्य मायाप्रयुक्तस्यैव जगत्स्रष्टृत्वमुक्त्वा मायया जडनिर्माणस्यानुपयोगमाशंक्य तस्मिंश्चान्य इति वाक्येन स्वाधीनप्रकृत्या बद्धानां जीवानां अर्थे इदं जगद्भवतीत्युच्यते । तत्र स्वस्वरूपभूतजीवबंधकस्याप्रेक्षात्वमाशंक्यान्य इत्युक्तं । तदुपरि मायया जगत्प्रवर्तकत्वे ईश्वरस्यैंद्रजालिकतुल्यतया न महत्वं प्रत्युत सत्यपदार्थनिर्माणसामार्थ्याभावेनापकृष्टत्वमेव स्यादित्याक्षेपपरि-

ह्वारयोत्तरोमंत्रः । "मायांतु प्रकृतिं विद्यान्मायिनं तु महेश्वरं । अस्या-वयवभूतैस्तु व्याप्तं सर्वमिदं जग"दिति । अत्र मायानाम नैंद्रजालविद्या । किंनामानाद्यनंताप्रकृतिरेव तत्प्रवर्तकस्तु महेश्वर एवाचिंत्याप्रतिहतशक्तिमा-नेव । प्रकृतेर्व्याप्तत्वात् परिच्छिन्नघटाद्यात्मना परिणामः कथमि-त्याशंक्य तस्यावयवभूतैरित्युक्तं । तत्पदं पूर्वमस्मादितिपदंच प्रकृतिपरा-मर्शकं । पुल्लिंगंतु छांदसं ॥ तदभिमानिचेतनप्रकृतेः पुंवच्छक्तिसद्भा-वाच्च । तदवयवास्तदंशास्तैस्तैर्भूतैरुत्पन्नैः पदार्थैः प्राकृतैः चराचरं व्याप्त-मित्यर्थः । इत्थंच जगत्कारणत्वेनाभिमतमायाया उक्तश्रुतौ प्रकृति रूप-त्वाभिधानात् । "सा वा एतस्य संद्रष्टुः शक्तिस्सदसदात्मिका । मायानाम महाभागययेदं धार्यते जग"दिति भागवते तृतीये जगत्कारणपर-मेश्वरस्योपकरणभूतायाः कार्यकारणात्मिकायाः प्रकृत्यात्मकशक्तेरेव माया-शब्दाभिधेयत्वप्रतिपादनाच्च । तथाच मायाया जडभूताया ईश्वरनियता-या अनादिजीवेश्वरादिकल्पकत्वं न श्रुत्यर्थः । ननु मायाख्याविद्यात्र स्वय-मेव भवतीति प्रकृतेरेवाज्ञानरूपत्वं सिद्धमितिचेन्न । स्वयंभूरित्यादावित्र स्वयंपदस्य परमात्मवाचितया स्वयमेव परमेश्वरेणैव कर्त्रा अविद्यात्र भवति विद्याविरोधिनीत्यर्थस्यात्राभिमतत्वेन त्वदभिमतजीवेश्वरस्वरूपतद्भेदेश्वरनिष्टसर्व-ज्ञत्वादिगुणसंपादकानिर्वाच्याज्ञानस्यानेनालाभात् । आद्यश्चशब्दः इत-राधीनत्वरूपविशेषसूचकः । किंच मायांतु प्रकृतिं विद्यादितिश्रुतौ माया शब्दोक्तस्य जगदुपादानत्वरूपं प्रकृतित्वमभिधीयते । जगत्प्रवाहस्यचा-नाद्यनंतं जगदित्यादिश्रुत्या अनाद्यनंतत्वमवगम्यते । निरुपादानसृष्टेरयो-गात् । त्वदभिमताज्ञानंतु ज्ञाननिवर्त्यं सविषयकंच । निर्विषयनित्यप्रकृ-तिस्वरूपप्रतिपादकश्रुतिबोध्यं कथं स्यात् । नच प्रकृतिरपि सविषयस्वभा-वा । तथासति मृत्परिणामे मृत्वाप्रच्युतिवत्प्रकृतिपरिणामभूतघटादेरपि तत्स्वभावभूतसविषयकत्वापत्तेः । नत्राज्ञाननिष्टं सविषयकत्वं न

भाव इति युक्तं । अनादितश्चिद्विषयकत्वस्य स्वतः अनागंतुकत्वात् । एतेनैवाविद्यकभेदेनैव सर्वनिर्वाह इति परस्याशापि पराहता । तन्निराकरणेन विशेषस्य समर्थितत्वात् ॥

यत्तु ॥ घटावद्भूतलमित्यादौ स्वाश्रयप्रतियोगिकभेदसमानाधिकरणसंयोगस्य संबंधत्वं भवदभिमतमित्यादि । तदप्यज्ञानविजृंभितं ॥ अद्वैतचंद्रिकाभिमतैतत्कल्पस्यास्माभिरन्यत्र दूषितत्वात् । तथाहि ॥ अत्रोक्तमद्वैतचंद्रिकायां गुर्व्यां लघ्व्यांच । तद्घटैतद्भूतलसंयोगस्य तद्घटेसत्त्वेपि तद्घटस्तद्वानितिप्रमानुदयात्सर्वत्र विशिष्टबुद्धौ विशेषणभेदसमानाधिकरण एव संबंधः । संबंधमर्यादया भासते । नच तद्घटसंयोगस्य तद्घटभिन्नेपि सत्वादुक्तदोषः । विशेषणभेदवद्वृत्तित्वविशिष्टसंयोगादेरेव संबंधत्वोपगमात् । तस्यच तद्घटे बाधादिति । तन्न ॥ तादृशसंयोगस्यापि प्रतियोगितासंबंधेन तद्घटे सत्वेनोक्तापत्तेर्दुर्वारत्वात् । यदिच तादृशसंयोगः स्वानुयोगिन्येव स्वप्रतियोगिनस्संबंधः नतु स्वप्रतियोगिनीति नियमान्नोक्तापत्तिरित्युच्यते तर्हि व्यर्थं भेदस्य मध्ये प्रवेशनं तद्घटप्रतियोगिकसंयोगानुयोगित्वस्य तद्घटे अभावादेव तस्य संबंधत्वानुपपत्तेः । अधिकमाकरे व्यक्तं । तथाचैतत्कल्पस्यास्मदभिमतत्वकथनमज्ञानमूलमेव । सिद्धांते क्वचिद्भेदविषयकत्वव्यवहारस्तु भेदाविनाभूतसंबंधविषयकत्वेन भेदकधर्मविषयकत्वेनवा निर्वाह्यः । यत्तु ब्रह्मशब्देन सविशेषब्रह्मव्यवस्थापनार्थं प्रपंचसत्यत्वं भवतां सधनीयमित्यादि । तदप्यबोधविलसितं ॥ निरवकाशप्रबलानेकप्रत्यक्षादिप्रमाणबलेनैवाद्वैतसिध्यादिनिरासेन प्रपंचसत्यताया "अपरोक्षदृशो मिथ्यादर्शनं न क्वचिद्भवे"दित्यादिना गुर्वामोदादौ समर्थितत्वत् । ग्रंथगौरवभयान्नेह पुनस्तत्प्रपंच्यते । एतेन क्वचिज्जीवेश्वरभेदबोधनेपि सभेदः काल्पनिक एव न तात्विक इत्यादिकमपास्तं । अविद्यानिवृत्त्यनंतरमपि भेदाभिधात्रीणां श्रुतीनामुदाहरणेन श्रुतेर्व्यावहारिकभेदपरत्वनिरासेनत्र

भेदतात्विकत्वायास्समर्थितत्वात् । "भेदाभेदभिदाचेत्स्यात्कथं भेदो निवार्यते । भेदाभेदभिदानोचेत्कथं भेदो निवार्यत" इत्यादिना भेदखंडनव्याहत्या जीवेश्वरभेदस्यातात्विकत्वे तस्य तात्विककार्याविघातकतया परस्परानुसंधानापत्त्यादिदूषणेनच तत्सत्यत्वस्यान्यत्रोपपादितत्वाच्च । तत्प्रकारस्तु विस्तरभयान्नेह प्रदर्श्यते । एतेनैव जीवस्वरूपभूतज्ञानानंदादेरावरणानुपपत्तिमाशंक्य ज्ञानाभावातिरिक्ततन्निमित्ताविद्याभ्युपगमादिति टीकावचनस्य स्वाभिमतार्थसाधकत्वभ्रांत्योदाहरणमपि प्रत्युक्तं । अनुपदमेव त्रिगुणात्मकप्रकृतिप्रभेदस्यैव विद्याविरोधित्वेनाविद्यापदवाच्यतायाअवेदितत्वात् । बहुस्यामित्यादेरज्ञानोपादानतायामनुपयोगात् । प्रामाणिकार्थांतरवर्णनेन त्वत्कल्पितबाधितार्थकताया निरस्तत्वाच्च । अत एव ब्रह्मण एव स्वाविद्यया जीवभाव इत्यप्यपास्तं । ब्रह्मैव स्वाविद्ययासंसारतीत्यस्य नहि कोपि स्वस्थात्मा निरुपाधिकं स्वात्मानं अनर्थभाजं कुर्वाणः प्रेक्षावन्दृष्ट इत्यादिना सुधायां सोपपत्तिकं निराकृतत्वादिति ॥

यदपि ॥ भेदश्रुतिः कल्पितभेदविषयेति । तद्दीर्घभ्रांतिहेतुत्वादिना अत्यंताप्रमाण्यापत्तेर्निरस्तं । किंच गृष्टचोर्विरोधेसति पृथक्पृथक् तृणपिण्याकादितत्तद्योग्याहारदानादिना विरोधशांतिं कृत्वा गोद्वयस्यापि पालनमास्तिको धर्मः तत्रापराङ्मुखीमेकां गां निहत्य विरोधशांतिः म्लेंछकुमाराणां धर्मः । प्रकृते अभेदवाक्यस्य स्वातंत्र्य विशिष्टत्व सादृश्यस्यानैक्यमत्यैक्याद्यनेकार्थेषु सावकाशत्वेनाभेदवाक्यानां अविरुद्धान्यार्थवर्णनेन तत्र प्रामाण्यसमर्थनं भेदवाक्यानां भेदातिरिक्तार्थांतरे निरवकाशानां स्वार्थे प्रामाण्यसमर्थनंच वैदिकानां धर्मः नत्वन्यतरगोवधवत् भेदश्रुतेर्व्याहारिकभेदपरत्वेनात्यंताप्रामाण्यापरपर्यायातत्वावेदकप्रामण्यसमर्थनमिति वैदिकं मन्यमानैरेवं वक्तुमशक्यमेव । अधिकंतु न्यायामृते श्रुतेर्व्याहारिकभेदपरत्वनिरासे व्यक्तं ॥

यदपि ॥ ममैवांशो जीवलोक इति स्मृतः जीवस्य ब्रह्मांशत्वसाधकत्वभ्रांत्योदाहरणं । तदप्यज्ञानमूलं ॥ त्वद्भाष्ये अंशइवांशः । नह्यखंडस्य चैतन्यस्यैकदेशःसंभवतीत्युक्तत्वेन गीतोक्तेश्वरांशत्वस्य त्वन्मते अनंगीकारात् । महारत्नस्य सहस्रांशोयं रत्नाभास इत्यादिव्यवहारेण "द्विरूपा वंशकौ तस्य स्वरूपं बाह्यमेवचे"त्यादिप्रमाणेनाचांशत्वैनैक्यभंगोक्तरीत्या अंशत्वस्योपकार्यत्वादिरूपत्वस्य वा भिन्नांशरूपत्वस्यवा वक्तव्यत्वात् । एतेन एक आत्मनः शरीरे भावादिति सूत्रोपन्यासोपि परास्तः । तत्ववादिमते जीवे ब्रह्मस्वरूपांशत्वाभावेपि अर्जुनादाविंद्रादिस्वरूपांशत्वस्वीकारात् तेन स्वसमीहितस्यासिद्धेः । एतेनैवेंद्रार्जुनादीनामिव जीवब्रह्मणोरभेदेपि नानुसंधानं । मायारूपेशशक्त्या तन्निर्वाहादित्यादिक्रमपि प्रत्युक्तं । तत्रैक्ये प्रमिते भेदकार्यस्य कस्यचिद्विशेषकृतत्वात् । प्रकृते ऐक्यस्योपजीव्यानेकप्रमाणबाधितस्याप्रमितत्वेन वैषम्यात् । तत्र प्रधानोपासनादिजन्यसुखाद्यनुसंधानसद्भावात् । ईश्वरस्य परिच्छिन्नत्वबाध्यत्वाद्यपकर्षसंपादकमायारूपाज्ञानस्येश्वर स्वरूपाभिन्नाचिंत्यशक्तिरूपतायास्सचेतसावक्तुमशक्यत्वाच्च । दैवात्मशक्तिमित्यादौ तुशक्नोतीति व्युत्पत्योपादानभूतत्रिगुणात्मकप्रकृतिरेव विवक्षितेत्यनुपदमेवोक्तं। अधिकंतु प्रकाशप्रसरे व्यक्तं । एतेनैव मंडनोक्तमपि समाहितं । इंद्रार्जुनयोरिव जीवब्रह्मणोरभेदस्याप्रमितत्वात् । महावाक्यार्थखंडन प्रकरणे तत्वमस्यादिवाक्यानामबाधितान्यार्थत्वेन सम्यग्व्याख्याततत्वाच्च ॥

यत्तु ॥ यत्र मुख्याबाधः तत्र मुख्यालाभे प्रतिनिधिरिति नियमः नतु यत्र मुख्यस्य बाधः तत्रेत्यादि । तदेतदापातरमणीयं मानांतरगृहीताभावोहि बाधः । सोमालाभस्थलेप्ययं बाधः सोमेपि सुलभ एव । तत्स्थले सोमस्य प्रत्यक्षादिना प्रमितत्वे तत्यागायोगात् । वस्तु वस्तु मुख्यासंभवे प्रतिनिधिरित्येव न्यायः नत्वबाधे इत्यस्य नियमप्रवेशः ।

दर्शादिस्थलेतु मुख्यालाभे पूतीके सोमकार्यकारितायाः इव तदीयद्रव्यालाभे तत्कार्यकारितायाः अनुक्तत्वादेव तत्र प्रतिनिधित्वानर्हत्वसंभवात् । अधिकं भावप्रकाशे व्यक्तं ॥

यत्तु ॥ न्यायरत्नावल्यां विशिष्टतादात्म्यज्ञानस्यैवोपहितभेदधीविरोधित्वादेः साधितत्वेनेत्यादि । तदसारं ॥ अद्वैतचंद्रिकायामेव विशिष्टयोस्तादात्म्यस्य प्रातीतिकताया उक्तत्वेनोपहितयोरपि मिथ्यात्वेन तयोर्भेदस्य व्यावहारिकत्वेन प्रातीतिकज्ञानस्य व्यावहारिकज्ञानबाधकतायाः असंभवद्युक्तिकत्वात् । उपलक्षितभेदबुद्धिप्रतिबंधस्य द्वारभूतेनोपलक्षिताभेदबोधेनैव त्वन्मते उक्तत्वाच्च ॥

यदपि ॥ निर्विकल्पकज्ञानस्य भेदबाधकत्वस्य त्वन्मतरीत्यैवासंभवादिति मंडनोक्तमपास्तमिति तदप्यज्ञानमूलं ॥ त्वन्मते द्वारीभूतबोधस्य भेदबाधकत्वांगीकारेपि फलीभूतस्य निर्विकल्पकसाक्षात्कारस्य तद्बाधकत्वानंगीकारात् । यत्तु द्वितीयाद्वैभयंभवतीति वाक्येन द्वैतमिवाद्वैतं कुत्रापि न निंदितमित्यादि। तत्तुच्छं तत्र तस्मादेकाकी न रमत इति तस्यापि निंदितत्वात् ॥

यदपि ॥ "ब्रह्मण्यनृततोभेदस्सत्यश्चेत्तद्देदखंडनं । व्याहतंस्यादसत्यश्चेद्ब्रह्मण्यनृतता भवे"दिति न्यायामृतवचनमनादरणीयं । अनृताभेदस्य ब्रह्मव्यतिरेकेणानृताभावरूपस्य सत्यत्वेपि व्यावहारिकाभेदनिषेधवचनं न व्याहतं तदनृतभेदसत्यतापक्षस्त्वनंगीकारपाहत इत्यादि । तदपि मोहमूलं ॥ अनृतस्य ब्रह्मव्यतिरेकेणाभावे ब्रह्मात्मना सत्वापत्या तस्य मिथ्यात्वसाधनस्य व्याहतत्वात् । ब्रह्मानृतयोर्व्यावहारिकभेदखंडनस्य तयोस्तात्विकतादात्म्यं विना अयोगेन ब्रह्मण्यनृततापत्तेर्दुर्वारत्वात् । तथाच ब्रह्म सत्यं अनृतं मिथ्येति विवेकार्थं ब्रह्मानृतयोस्सत्यभेदांगीकारे तत्खंडनं व्याहतमेव । तादृशाभेदानंगीकारे तात्विकतादात्म्यापत्या ब्रह्मण्यनृतत्वा-

पत्तिर्दुर्वारेति न्यायामृतोक्तं दूषणं दुरुद्धरमिति स्वानिष्टसंपादकत्वादेव तत्रा-नादेरोयुष्माकं युक्त एव । परंतु तत्र स्वोक्तार्थे उपपत्तिः त्वन्मते अनुपपत्तिश्चानेन बोध्यत इति महार्थत्वात्प्रेक्षावतामादरणीयमेव न्याया-यामृतवचनमिति । एतेन जगन्मिथ्यात्वं जीवब्रह्मभेदोवा न कुत्रापि प्रमित इति प्रकाशप्रसरोक्तिस्समाहिता । यथाचैतत्तथा गुर्वामोदादौद्रष्टव्यं ॥

यत्तु ॥ असत्यमप्रतिष्टंते इत्यादिवचनं सौगतविषयं नाद्वैतिविषय-मिति ॥ तदप्यसारं । तथाहि ॥ अत्रोक्तं श्रुतिमतोद्योते । अस-त्यमप्रतिष्टंते इत्यादीनि नाद्वैतदर्शनविरोधीनि । असत्यमित्यस्य न सत्यं यस्मिन्निति शून्यवादस्य अप्रतिष्ठितमिति स्थैर्यनिषेधेन क्षणभंगवादस्य अनी-श्वरमिति निरीश्वरवादस्य अपरस्परसंभूतमिति स्वभाववादस्य किमन्यद्वक्तव्यं काम्यत इति कामः परमाण्वादिः सः हेतुः यस्येति तद्धेतुकमित्यनेन स्वबु-ध्युन्नीतकारणकमित्यवैदिकमतानामेव निंदितत्वेन ब्रह्मवादस्यानिंदनात् । नच न सत्यमसत्यमिति अद्वैतनिंदापि लभ्यत इतिवाच्यं । एवं सति जगद्बुद्धिगम्यं भवतीत्यादित्वन्मतदूषणस्यापि वक्तुं शक्यत्वात् ॥

यत्तु ॥ काम इति तत्कारणाविद्या उपलक्ष्यत इति । तदसत् ॥ मतांतरानिरासन्यूनताप्रसंगात् । यच्च सत्यं नचेत्किमसदेव परस्परसंभूतं नचेत् किं स्वतोजातं । आद्यस्योत्तरं अन्यतू सदसद्भ्यामिति शेषः । द्वितीयस्योत्तरं कामहेतुकमित्यपव्याख्यानं । तदसत् ॥ सदसद्भ्या-मित्यस्याध्याहारे मानाभावात् । किंपदास्वारस्याच्च ॥ अपरस्परसंभूत-त्वस्य विश्वस्याहेतुत्वेपि अव्याघाताच्च । अप्रतिष्ठितमित्यस्य ज्ञानोच्छे-दमित्यर्थवर्णनंतु उदक्षरमिति स्पष्टमेव । तस्मान्नास्मन्मतनिंदात्रेति । तदसारं । तथाहि असत्यमित्यस्य त्वदुक्तार्थांगीकारेपि शून्यमतत्वन्मत-योरविशेषस्य तत्वोद्योतादौ वर्णितत्वेन शून्यमतनिरासकसूत्राणामेव त्वन्मत-निरासकत्वस्योपपादितत्वेन त्वन्मतनिंदाया अपरिहारेण तदप्रयासवैफल्यात् ।

किंचासत्यमित्यनेन सद्भिन्नस्यैव स्फुरणात्प्रसिद्धिश्रद्धालुना तदेवादर्तव्यं नतु बहुव्रीहिः अप्रसिद्धत्वात् । अनृतासत्यादिपदघटितश्रुत्यंतरंतु व्यासस्मृत्यैवान्यथा व्याख्यातमिति नास्माकं प्रसिध्यतिक्रमे बीजाभावः । एवं कामपदेपि प्रसिद्धार्थत्यागः । इछाया एव तदर्थत्वेन प्रसिद्धत्वात् । प्रसिद्धार्थत्यागे आवश्यके स्वोत्प्रेक्षितयोगापेक्षया लक्षणैव ज्यायसी । अन्यथा घटत इति व्युत्पत्यापटादेरपि घटपदार्थत्वापातात् । प्रसिद्धार्थबाध नानावयवघटकपदवृत्तिज्ञानाधीनशाब्दबोधस्य लक्षणाधीनबोधापेक्षयामंथतरगामित्वाच्च । किंच परमाण्वादेः कामनाविषयत्वमपि दुर्घटं । तस्येष्टसाधनत्वाद्यभावात् । नच जगत्कारणतयेष्टत्वमिति वाच्यं । तथात्वे त्वदभिमतेश्वरस्य अविद्यायाश्च तथात्वेन तत्कारणत्ववादस्यापि निंदाप्रसंगात् ॥

यदपि ॥ न्यूनताव्युत्पादनं । तदसत् । नानामतनिंदापरत्वेनैतस्याप्रवृत्तत्वेन न्यूनतायाः अप्रसंगात् । तर्हि सर्वमतविषयतया व्याख्यानस्याकृतत्वात् न्यूनतेतिचेत् तर्हिटीकारीत्याअप्रतिष्ठितपदव्याख्याने विज्ञानवादालाभेन तत्रापि न्यूनतानुक्तौ बीजाभावात् । नच कामहेतुकपदमात्रस्यासदुक्तरीत्यार्थवर्णने सर्ववैदिकमतलभोभवतीति तत्रैवन्यूनता दोषउद्भावित इति वाच्यं । तर्हितेनैव सर्ववैदिकमतलाभे असत्यमित्यादिपूर्वभागस्य वैयर्थ्यापत्तेः । शून्यवाद्यादिभिरपि स्वेच्छानुसारेणैव जगत्कारणस्य कल्पितत्वात् । नच विशेषरूपेण तन्मतोपन्यासार्थं पूर्वभाग इति वाच्यं । जैनादिमतानां विशिष्टरूपेणानुपन्यासेन त्वन्मते न्यूनतापातात् । किंच जगति प्रयुक्तासत्यादिपदानां अन्यार्थप्रदर्शनपूर्वकं प्रवृत्तव्यासस्मृतौ असत्यमप्रतिष्टंते इत्यादिपदानां सद्भिन्नार्थत्वमेव । तत्रापि प्रसिध्यतिक्रमे बीजाभावात् । प्रत्युतजगतोसत्यत्वे तत्र प्रयुक्तानामसत्यादिपदानामर्थांतरवर्णनस्यानुपयोगेन सत्यत्वाभिमतेरेव स्मृतिकर्तुरावश्यकतया मतांतरानु-

वादकवाक्ये स्वाभिमतविरोध्यर्थकत्वस्यैव युक्तत्वात् । तादृशवाक्यानुरोधेन टीकोक्तव्याख्यैव युक्ता । नचभवद्व्याख्यानेकिंपदास्वारस्यमितिवाच्यं । तस्यार्जुनकृतप्रश्नतया किंपदस्वारस्यापरित्यागात् । किंच त्वन्मतएव किंपादास्वारस्यं किंचित्संभावितस्यानुपपत्त्यादिकं प्रदर्श्य कैमुत्यान्यायं तदपेक्षयानुपपन्नार्थे दर्शयंति । यथा पंडिता अपि मुह्यंति किमु प्राकृता जना इति । प्रकृतेच अत्यंतवेदविरुद्धसौगतादिमतं प्रदर्श्य किंचिद्विरुद्धपरमाणुकारणत्वादिमतस्य कैमुत्यन्यायेन प्रदर्शनस्य लोक मर्यादातिक्रमेणास्वरसत्वात् ॥

यदप्युदक्षरत्वमिमितिति ॥ तदप्यसारं ॥ अतोन्यदार्तमित्यत्र आर्तमित्यस्य ज्ञानबाध्यार्थकतया व्याकुर्वतस्त्वद्गुरोरप्युदक्षरत्वापत्तेः । नच-पीडितमात्रं तदर्थः । पीडाच स्वरूपोपघातकव्यापारः ततश्च कार्यकारणादिसकलरूपैर्जगदुपघातप्रयोजकं ज्ञानमेव मुख्यपीडेति वाच्यं । अत्राप्येकरूपापगमेपि अंतत एकरूपेणस्थितिरूपप्रकृष्टस्थित्यभावबोधने कारणात्मनाप्युच्छेदलाभेन ज्ञानोच्छेद्यत्वस्य पर्यवसितत्वात् । अन्यथा अप्रतिष्टितपदेन स्थिरत्वाभावमात्रबोधने त्वदभिमतविज्ञानवादस्याप्यलाभात् । यदप्यपरस्परसंभूतत्वस्येति । तदपि मंदं ॥ अपरस्परसंभूतत्वव्याघातेन कामहेतुकत्वस्यानवतारितत्वात् । त्वदुक्तरीत्यास्वभाववादपरत्वे परासंभूतमित्यस्यैव वक्तव्यतया परस्परेत्युक्तेरसांगत्यापत्तेः । अपिचोक्तवचनस्य नानामतपरत्वे एतांदृष्टिमित्येकवचनायोगः । जात्येकवचनत्वेपि तत्पदास्वारस्यमेव अस्तुवा त्वदुक्तरीत्यैव गीतावाक्यार्थः । तावतापि त्वन्मतस्यैतद्वाक्यनिंद्यत्वमव्याहतमेव । दृष्टिसृष्टिपक्षे जगतो विज्ञानसमकालिकत्वेन विज्ञानवादाविशेषात् । एवमनीश्वरवादनिंदापि त्वन्निदैव । एकजीववादे ईश्वरस्यापि स्वप्नदृष्टराजादिवत् जीवकल्पितत्वेन सर्वस्यापि स्वाविद्याकल्पितत्वांगीकारेणेश्वराभावात् । नहि स्वरूपतः परिकल्पितः निव-

त्यैश्च श्रीकृष्णसम्मत ईश्वररूपो भवति । तेन यो मामजमनादिंच यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । ईश्वरःसर्वभूतानां हृद्देशेर्जुनतिष्ठति इत्यादिना ईश्वरस्यानादित्वाव्ययत्वसर्वोत्तमत्वादिकथनात् । एकजीवसंबंधिज्ञाननिवर्त्यस्य तदज्ञानकल्पितस्य त्वदंगीकृतत्वात् । एवं स्वभाववादनिंदापि त्वन्निंदैव । अविद्यारोपस्य स्वत एवांगीकारात् । मच तस्या अनादित्वं मयांगीकृतं नतु स्वतोजातत्वमिति वाच्यं । आरोपसामान्यस्यापि दोषजन्यत्वेन दंडं विना घटांगीकारवदुक्तानादित्वस्याप्यप्रामाणिकस्य स्वभाववादपर्यवसानात् । कामहेतुकत्वोक्तिस्तु स्फुटं त्वन्निंदकैव । त्वया जीवाविद्याकल्पित एव सर्वप्रपंचः । ब्रह्मतु तत्स्वरूपत्वात्तथोच्यते इति । अंबरादिकमीश्वरमायाकल्पितं दुःखादिकं जीवाविद्याकल्पितं । मायाब्रह्मणीसितासितरज्जुवज्जगत्कारणे मायैव जगत्कारणं ब्रह्मतु तदधिष्टातृत्वात्तथोच्यत इतिच स्वेच्छानुसारेण सर्वश्रुत्यादिसिद्धेश्वरकारणत्वादेरुपचरितत्वादिकल्पमया तत्कारणकत्वं विहाय जगदुत्पत्तेरंगीकृतत्वात् । तथाच सौगतविषयमेवेतिरिक्तंवच उपेक्ष्यमेवेति ॥

यत्तु ॥ ऐतदात्म्यंच यदिदमिति वचनमापातज्ञानमात्रेण सर्वब्रह्मभावव्यवहारायोगमेव गमयतीति । तन्न ॥ भारते मोक्षधर्मे ऐकात्म्यंनामेति पाठस्य प्रमितत्वेनान्यथानुवादात् । अस्तुवा तथापि तत्रैव "शास्त्र तत्वमविज्ञायेति याथातथ्यमविज्ञायेति ब्रह्मस्तेना इति । यतः स्वरूपतश्चान्योजातितश्श्रुतितोर्थत" इतिच स्पष्टमुक्तत्वेन तस्यापातज्ञानमात्रेण ब्रह्मभावव्यवहारो न भवतीत्यर्थकत्वस्य त्वदन्येन केनापि सचेतसा वक्तुमशक्यत्वेनानादरणीयत्वात् ॥

यदपि ॥ जिज्ञासाशब्दो रूढ इति महताडंबरेण संसाध्य पुनस्तत्रैव लक्षणाश्रयणेन श्रवणादेर्ग्रहणे मुख्यार्थबाधादेरपरिहारात् । त्रित-

यग्रहणे सूत्रकारविवक्षाज्ञापकाभावेन लक्षणादोषस्यापरिहरणीयत्वादित्यादि । तदपि मृतमारणमेव ॥ प्रकाशप्रसर एव निरस्तत्वात् । सुधातत्वप्रकाशिकाग्रंथयोरपातप्रतीतविरोधपरिहाराय मननमात्रे शक्तस्याजहल्लक्षणया श्रवणादिपरत्वस्योक्तत्वेन तत्र टीकाविवक्षाज्ञापकाकांक्षायामपि सूत्रकारविवक्षाया अप्रकृतत्वात् । नहि सूत्रकारः क्वचिज्जिज्ञासामननमिति क्वचित् श्रवणादित्रितयमित्याह । येन तद्विवक्षापेक्षिताभवेत् । किंतु टीकाकारैरेव तथोक्तत्वात्तद्विवक्षैव ज्ञापनीया । अस्तुवा तथापि "श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ । संशयंच पराणुद्यलभते ब्रह्मदर्शनमिति" सूत्रकारवचनमेव विवक्षाज्ञापकमिति संतोष्टव्यं । त्रितयेपि शक्तिपक्षेनोक्तशंकावकाशोपि । तस्मान्मतांतरोक्तार्थस्यात्यंतायुक्तत्वात्पदवाक्यप्रमाणविदामग्रेसरैः सर्वज्ञतैमरसद्भाष्यकारैरुक्त एव सूत्रार्थो ह्यद्योनवद्यश्चेति सिद्धं ॥

यत्तु ॥ क्रतु शब्दप्रयोगमात्रेणाहीनद्वादशाहस्य श्रेष्टता न ज्ञापयितुं शक्यते इति तथा भावदीपोक्तिरयुक्तेति । तन्न ॥ अहीनपदस्थाने क्रतुपदप्रयोगे सति क्रतुशब्दयज्ञशब्दयोः पर्यायत्वेन स्वपर्याययज्ञशब्दघटितश्रेष्टयज्ञोवेति श्रुतिसरणद्वारा तत्रोक्तश्रेष्टत्वस्योपस्थापनसंभवेनोक्तरीत्या ज्ञापकत्वस्याक्षुण्णत्वात् ॥

यदपि ॥ लिंगभूयस्त्वाधिकरणे यागीयहिंसायामिति कर्तव्यताया एव प्राबल्यदर्शनादिति भावप्रकाशिकाप्यपास्तेत्यादि । तदज्ञानमूलं ॥ अस्य टीकावाक्यत्वात् । एतेन भावदीपवाक्यानामन्यथाव्याख्यानमपि प्रत्युक्तं । मोहमूलत्वात् । यागरूपहिंसायाः पापजननस्वाभावत्वेपि तत्स्वरूपनिष्पादकवेदमंत्रोच्चारणतदर्थानुसंधानादिपूर्वकं क्रियमाणत्वेन मंत्रादिरूपस्वरूपोपकारकसहकारिरूपेतिकर्तव्यताया हिंसायां पुण्यजननशक्त्याधायकत्वपरस्य भावदीपवाक्यस्य यागरूपहिंसानिष्टपुण्यजनकत्वस्य तादृशहिंसानिष्ठेतिकर्तव्यतात्वप्रयुक्तत्वार्थ कताकल्पनस्यातिहेयत्वात् । इतिकर्तव्यताप्रयुक्तमित्य-

स्येतिकर्तव्यतात्वप्रयुक्तमित्यर्थकल्पनात् । हिंसाया एवेतिकर्तव्यतारूपत्वे पापजनकेतिकर्तव्यतायाः पुण्यजनकत्वं कथमित्यस्येतिकर्तव्यतात्वादेवेत्युक्ते-रनुत्तरत्वात । तत्र स्वभावसिद्धस्येतिकर्तव्यतात्वस्य तत्रैव स्वभावसिद्ध-पापजननशक्तिपरिभावकत्वपुण्यजननशक्त्याधायकत्वयोरयोगात् । किंच पुण्यजननशक्तिः खलु परमापूर्वोत्पादकत्वं तदाधानंच करणभूते याग एव नतु उपकारकमात्ररूपेतिकर्तव्यतात्मकत्वदभिमतहिंसायां तथाच हिंसा न यागरूपेति त्वत्पक्षे यागनिष्ठापूर्वोत्पादकशक्त्याधायकत्वं इतिकर्त-व्यतारूपहिंसाया इति वक्तव्यं । ततश्च पापजननस्वभावया हिंसया अन्यत्र तदुपकार्ये यागे पुण्यजननशक्तिः स्वयं संपद्यत इत्युक्तं स्यात् । इदंच नोपपन्नं चर्मद्वारकपादरक्षादानांगगोवधस्यापि तत्र पुण्यजननशक्त्या-धायकत्वप्रसंगात् । हिंसातिरिक्ते यागे पापजननशक्तेरेवाभावेन तत्परि-भावकत्वायोगाच्च । किंच हिंसानिष्ठां पापजननानुकूलां सहजशक्तिं परि-भाव्य तत्रैव तद्विरुद्धपुण्यजननशक्तिसंपादनं तदुपकारकमंत्रादिसहकारिशक्त्या भवति । सहकारिणोहि सहजामपि शक्तिं प्रतिबध्य विपरीतां शक्तिमा-दधाना बहुलं दृश्यंते । दावदहनदग्धवेत्रबीजस्य कदलीकांडजनकत्वदर्श-नात् । योगजधर्मसहकारेण योगींद्रियाणां अतीतादिविषयकज्ञानजनकत्व-शक्तिसंपत्तेश्च । एवंच म्लेंछादिभिः स्वजीवनार्थं कृतहिंसाया एव पापज-नकत्वं होमांगताबुध्याविधिसिद्धमंत्रोच्चारणतदर्थानुसंधानपूर्वकयागीयहिंसायांतु स्वोपकारकमंत्रादिरूपसहकारिसंभूतैव पुण्यजनकत्वशक्तिरिति स्फुटं भावदीपे व्यक्तस्यार्थस्यापलापेनात्यंतहेयार्थवर्णनं सहजध्वांतसिद्धमेव । अन्यथा हिंसाया अन्यत्र पापजननशक्तिपरिभावकत्वं पुण्यजननशक्त्याधायकत्वंच पापजननस्वभावायाः कथमित्यस्य हिंसात्वादेवेत्युत्तरं कथं सचेतसा वक्तुं शक्यं स्यात् । परिभाव्यशक्तेराधेयशक्तेश्च सहचरितत्वेन स्वस्मिन्नपूर्वोत्पा-दकत्वाभावेन तस्यच करणनिष्ठत्वात् । तत्रैव पापशक्तिपरिभावकत्वं

हिंसाया वक्तव्यमिति हिंसानिष्टपापशक्तिप्रतिबंधेन करणनिष्टपुण्यशक्तिसंपादकत्वे इतिकर्तव्यतारूपमंत्रादेरिति त्वद्व्याख्याने भावदीपोक्तिः कथमुपपन्ना भवेदिति भवानेवालोचयतु ॥

यत्तु ॥ हिंसाया न यागरूपत्वमिति । तन्न ॥ मरणानुकूलव्यापारोहि हिंसा - तथाच वपाहोमः पश्वंगहोमश्च भूयादितीच्छया वपाद्यंगकयागोद्देशेन मंत्रपूर्वकं पशुमरणे प्रवृत्तेः स्वर्गादेरिव प्रवृत्तिप्रयोजकेच्छाविषयत्वेन तादृशवपाद्यंगकयागस्योक्तमरणानुकूलत्वेन हिंसारूपत्वस्याकामेनापि वक्तव्यत्वात् । मंत्रपूर्वकसंस्काराभावे पशुमरणायोगेन मरणानुकूलव्यापाररूपहिंसास्वरूपोपकारकत्वेन तत्रेतिकर्तव्यतारूपत्वं मंत्रादेरक्षुण्णमेव । मंत्रादेः सिद्धार्थत्वेपि सहकारित्वेनेतिकर्तव्यतात्वस्याविरोधात् । भावदीपे मंत्रादीतिकर्तव्यताया हिंसादिरूपयागस्वरूपनिष्पादकत्वेनचेति पाठापलापस्तु बद्धेर्थांध्यमूल इत्युपेक्ष्य एव । न केवलं पुण्यजननशक्त्याधायकत्वेन किंतु तत्स्वरूपनिष्पादकत्वेनचेति समुच्चायकत्वेन वैयर्थ्यशंकाप्यज्ञानमूलैव । स्वरूपोपकारकत्वंतूक्तमेव । भागवतादौ यागस्य हिंसादिरूपतायास्तत्र तत्र प्रतिपादनात् । यद्वा भावदीपे हिंसादिरूपेत्यत्र रूप्यते अनेनेति व्युत्पत्या हिंसादिरूपत्वं तदंगकत्वं । अत एव तत्रैव यागीयहिंसाया इत्युक्तिरूपपद्यते । ततश्च यागीयहिंसारूपव्यापारे स्वभावभूतपापशक्तिं परिभाव्य यागनिष्टापूर्वोत्पादकत्वशक्त्याधायकत्वं मंत्रादिरूपहिंसेतिकर्तव्यतया इति न किंचिदवद्यं ॥

यदपि ॥ ज्योतिष्टोमपदे तत्पुरुषानुपपत्तिचोदनं तत्प्रकाशप्रसर एव निरस्तं ॥

यदपि ॥ यजमानपदस्य लक्षणेति तन्मंदं । टीकास्थस्यायजमानानामित्यस्य यजमानभिन्नानामित्यर्थकत्वायोगेनयजमानपदेन गृहपतिर्विवक्षितः तत्र गृहपतिशब्दमप्रयुज्य यजमानशब्दप्रयोगे निमित्तंतु गृहपतेरपि

द्रव्यादिस्रष्टुर्यजमानस्यैवाधिकफलभागित्वेपि तदतिरिक्तानामल्पं फलमिति गौण्यावृत्याधिकफलबोधतात्पर्यमेवेति गौणप्रयोगस्याप्यदुष्टत्वात् । क्रतु-शब्दस्तु अन्यत्र व्याख्यात इति न भावदीपे विवृतः । सोपि योगेन क्रियापर इत्यपि प्रकाशप्रसरएवोक्तं यत्र कुत्रचिद्गौणव्यवहारस्तु सर्वतंत्रेष्व-पीति यत्किंचिदेतत् । किंच त्वया विशिष्टशक्तेनापि ब्रह्मपदेन विशेष्य-मात्रबोधांगीकारेण प्रकृतेपि दीक्षारूप संस्कारविशिष्टयागीयाधिकफलभा-गिनि शक्तेनापि यजमानपदेन शक्त्यैव दीक्षाशून्यतादृशविशेष्यमात्रभूतस्य गृहपतेः प्रत्यायनसंभवेनात्र लक्षणादोषकथनमयुक्तमेव । एवं वैदिकसर्वश-ब्दानां चैतन्ये लक्षणामंगीकुर्वतः क्वचित् क्रतुशब्दे योगाश्रयणे दूषणकथनं कथंनाम न लज्जाकरं इति संक्षेपः । तस्मात्परोक्तमयुक्तमिति न तत्व-वादिमते कोपि मीमांसाविरोध इति सिद्धं ॥

यदपि ॥ पूर्वतंत्रे कस्याधिकारः न तावदधीतब्रह्मतंत्रस्य । अनुपयोगात् ॥ अज्ञस्याप्यनधिकारे निरधिकारिकं तदापद्येतेति प्रसरोक्त मस्मन्मतस्वरूपाज्ञानविजृंभितमनुक्तोपालंभनं चेति । तदेवाज्ञानमूलं ॥ स्वेनैव कर्मतंत्रे नाधीतब्रह्मतंत्रोज्ञानी अधिकारीत्युक्तत्वेनाज्ञस्यानधीतब्रह्मतं-त्रस्याप्यनधिकारे निरधिकारित्वस्यावर्जनीयतया अज्ञाधिकारिकत्वस्यैव भाम त्यादौ व्यक्तमुक्तत्वेनाद्वैतमतसिद्धप्रमेयकथने मताज्ञानमूलकत्वदूषणाभिधान-स्याभिधातुरेवाज्ञानकल्पकत्वात् । ततश्चाकौशलं कस्य व्यक्तमिति भवा-नेव निराग्रहो विचारयतु । यत्तु सर्ववेदस्यापि ब्रह्मपरत्वे अमुख्यार्थपरो वेदभागः क इति । नहि कर्मकांडस्यामुख्यार्थत्वं ज्ञानिनोपि कर्मनियमा-भावप्रसंगादिति । तदपि मंदं ॥ अपरममुख्यवृत्या अन्यपरत्वे निरवकाशब्रह्मश्रुतिलिंगादिबाधकरहितस्य धर्माधर्मदेवतास्वरूपादिप्रतिपादक-वेदभागस्यैव तथात्वातु । नहि ज्ञानिनोपि कर्मानुष्ठाने कर्मणां वेदमुख्यार्थत्वंनियामकं किंतु तत्प्रमापकश्रुतिस्मृत्यादिप्रमाणप्रमितत्वमेव ।

अधिकमाकरे व्यक्तं । ततश्चेदं दूषणं तत्ववादिसिद्धांताज्ञानविलसितमेव ॥

यदपि ॥ कर्मब्रह्मविचारयोः कथमपि हेतुहेतुमद्भावाभावे भामतीसन्मतिकथनं तदुक्तं भामत्यामिति । तदप्यज्ञानमूलमेव ॥ भामत्यांहि "कृत्स्नैवच नित्यानां कर्मणां नित्याहितेनोपात्तदुरितनिबर्हणेन पुरुषसंस्कारेण ज्ञानोत्पत्तावंगभावोपपत्तौ न संयोगपृथुक्त्वेन साक्षादंगभाव इत्युक्तत्वेन तयोर्हेतुहेतुमद्भावस्यैवांगीकारात् । तत्ववादिमतेपि अंतःकरणशुद्धिद्वारैव कर्मणां ज्ञानांगतास्वीकारात् । इह जन्मनि अननुष्टितकर्मणः पुरुषधौरेयस्यापि प्राग्भावीयकर्माधीनविशुद्धसत्ववत एव ब्रह्मतंत्राधिकारोक्त्या सर्वथा इह जन्मनि जन्मांतरेवा कर्मानुष्टानसाध्यसत्वशुद्धये कर्मतंत्रविचारस्योत्तरतंत्रविचारपूर्वत्वस्याकामेनाप्यंगीकर्तव्यतया ब्रह्मविचारानंतरमकर्तव्यस्य कर्तव्यत्वेन सम्मतस्य च पूर्वतंत्रविचारस्योत्तरतंत्रविचार पूर्वत्वमेवसिद्धमिति अद्वैतमते सर्वथा कर्मविचारानंतर्यमथशब्दार्थो युक्त एव ॥

यदपि ॥ विशिष्टाद्वैतमते तमेतमितिवाक्ये इष्यमाणं वेदनमुपासनात्मकमेव । यज्ञादीनां तदितिकर्तव्यतात्वमेव । सूत्रेतु जिज्ञासापदेन विचारमेव मन्यंते । नहि विचारेतिकर्तव्यतात्वमपि कर्मणामिति तन्मतेपि तदुपपत्तिरिति । तदेतत्तन्मताज्ञानविलसितमेव । श्रुतप्रकाशे इष्यमाणं विचारात्मकं ज्ञानमेव विधेयं । तर्कानुगृहीतवाक्यजन्यप्रमितिरूपज्ञानंतु फलत्वान्नविधेयमित्युक्तत्वेन जिज्ञासापदेनापि तमेतमित्यत्र विवक्षितज्ञानस्यैव तन्मते विवक्षितत्वात् । अधिकं प्रकाशप्रसरे व्यक्तं ॥ यत्तु । ये तु कर्मणां ज्ञानेप्युपयोगमुपयंति तेषां कर्मविचारानंतर्यमथशब्दार्थ इत्यस्याभ्युपेयमित्यादि । तन्न ॥ तत्ववादिमतेपि त्वन्मत इवांतःकरणशुद्धिद्वारेवोपयोगांगीकारेणसाक्षाज्ज्ञानोपयोगस्यानंगीकारात् । अधिकं चंद्रिकायां ॥

यदपि ॥ चंद्रिकायां श्रुत्यर्थपाठस्थानादीनां क्रमप्रमाणानामप्रसंगादिति वचनं । कर्मज्ञानयोर्हेतुमद्भावस्यासिद्धत्वादसंभवदुक्तिकमिति । तदप्येतेन परास्तं ॥ साक्षादंगांगिभावासिद्धेरिष्टत्वात् तथाच तत्ववादिमतेसामान्यतःपित्राद्युपदेशेन धर्मशास्त्रविमर्शादिनावा ज्ञातस्य कर्मणोनुष्टानेन सत्वशुद्धिद्वारा ब्रह्मविचारप्रवृत्तौ अधीतब्रह्मतंत्रस्यापि "अन्यार्थंतु जैमिनि"रित्यादिसूत्रार्थपर्यालोचनया विशेषज्ञानायानंतरमपि विशेषतो कर्मानुष्टानार्थं कर्मतंत्रविचारसंभवेपि परमते एवं वक्तुमशक्यत्वेनाद्वैतमत एव कर्मतंत्रविचारानंतर्यमथशब्दार्थ इत्युपेयमिति अकौशलं परस्य वज्रलेपायितमिति । तस्मात्परोक्तमयुक्तमिति सिद्धं

यत्तु ॥ नित्यानित्यवस्तुविवेकादेरधिकारिविशेषणत्वं पूर्वमेव विवेचितमिति । तत्प्रकाशप्रसर एव व्यक्तं निरस्तत्वादुपेक्ष्यमेव ।

यदपि ॥ आपाततो अनंतस्थिरफलत्वसंभावनाया विचारहेतुत्वोक्तिरयुक्तेत्यादिकमनुक्तोपालंभनमेवेत्यादि । तदपि । अधीतस्वाध्यायस्य विचारात्प्रागुक्तसंभावनोत्पत्तौ मानाभावः अतएव नियामकादुक्तसंभावनोत्पत्तिसंभव इत्यादिखंडनकारवाक्यान्यनूद्य दूषितत्वेनानुक्तोपालंभनवचनस्य खंडनग्रंथप्रकाशप्रसराद्यज्ञाननिबंधनत्वादनादेयमेवेति । तस्मात्परोक्तमयुक्तमिति सिद्धं ॥

यत्तु ॥ विवरणमते तितिक्षापदेन सन्यासग्रहणं सचोपनीतस्येवानुपनीतस्यापि संभवति । अनुपनीतस्यापि आरण्यकाध्ययनसंभवात् । तथाच विरक्तः कोपि यदि सन्यस्तो भवति तर्हि तस्यापि विप्रत्वादुपनयनांतरेण वेदांताध्ययने सति विचारो युक्त इत्यादि । तदपि मंदं ॥ विवरणे "तदेवमध्ययनविधिसामर्थ्यादुपदीयमानेसत्याचार्योपगमने तदाश्रितोपनयनविधिजन्यसंस्कारस्यापि तद्द्वारेणाध्ययनविधिसंबंधस्योपनयनविधिसामर्थ्यादेव सिद्धेरुभयविधिविध्युपादानसामर्थ्यादध्ययनांगमुपनयनमिति

सिद्धं । उपनयनाध्ययनयोः परस्परसाकांक्षत्वस्य दर्शितत्वादिति । तस्माद्युक्तं संस्कारश्चस्वाध्यायाध्ययनार्थः" इत्यादिना अध्ययनसामान्यस्यापि उपनयनसापेक्षत्वाभिधानात् । अनुपनीतस्यारण्यकाध्ययने प्रमाणाभावाच्चायुक्तत्वादिति । अधिकं प्रकाशप्रसरे व्यक्तं ॥ विरागातिरिक्तस्यापि तत्र सन्न्यासाधिकारिविशेषणतायाः समर्थितत्वादिति । ततश्च दुराग्रहमूलकमेवासद्दूषणाभिधानमिति । तस्मात्परोक्तमयुक्तमिति सिद्धं ॥

यत्तु ॥ न ह्यद्वैतसिध्यादिषु यादृशं न्यायामृतादिखंडनंकृतं तन्निरासपरः कोपि ग्रंथः केनापि बहिरानीत इत्यादि । तदेतत्तत्ववादिमताकरग्रंथांध्यमूलं । तादृशाकरोक्तीरुपजीव्यत्वदीयैतादृशदुराशयनिरासायाद्वैतसिद्धिभद्वैतचंद्रिकादिखंडनप्रकारस्यात्रैवप्रथमतः तत्रतत्रचोपदर्शितत्वात् । कंटकोद्धार गुर्वामोद मक्षिकाव्यजन न्यायामृतमाधुरी महावाक्यार्थखंडन वनमालिमिश्रीय द्वैतदिवाकर न्यायामृतप्रपंचनादिग्रंथानां त्वदीयाद्वैतसिध्यादिनिरासकानां सुप्रसिद्धत्वात् । तथाच ज्ञानदौर्बल्यैकनिबंधनमिदं प्रलपनमकिंचित्करमेव । एतेनाद्वैतसिद्धिकारीय श्लोकलेखनमपि प्रत्युक्तं । प्रागेवकिंचिद्धिकारेण त्वांप्रत्यपि प्रहितत्वेन स्वविघातादिति । तस्मात्परोक्तमयुक्तमिति सिद्धं ॥

यत्तु । ब्रह्मजिज्ञासा धर्ममीमांसानिरूपितैकशास्त्रत्ववती तत्संगतार्थत्वात् । तद्व्याख्येयवेदव्याख्यानत्वात् । तदुद्देश्योद्देस्यकप्रवृत्तिविषयत्वात् । तदर्थतात्पर्यकशैलीघटितत्वादित्यत्र । प्रकाशप्रसरे तत्संगतार्थ मीमांसाशास्त्रत्वादित्युक्तमयुक्तं । व्यर्थविशेषणत्वादिति । तन्न ॥ वात्स्यायनविचारे कामुकतंत्रे व्यभिचारवारणार्थत्वाद्विशेषणस्य । मीमांसांतरे पक्षीकृतमीमांसयाभेदेपि मीमांसात्वोपपत्या अप्रयोजकताशंकावारणद्वाराव्याप्त्युपयोगित्वाच्च । परस्परसंगतार्थत्वस्यैवैक्यप्रयोजकत्वाच्च । एते

न्नात्राप्रयोजकत्ववर्णनमज्ञानमूलमेव ॥

यदपि ॥ तदर्थतात्पर्यकशैलीघटितत्वस्थतद्व्याख्येयव्याख्यानत्वस्यच तादृक्सुधुनि-कश्लोके व्यभिचारकथनं । तदपि मंदं ॥ तत्रापि तादृशमीमांसा त्वस्य विवक्षयोक्तदोषवारणात् । यच्च योगसांख्यमतयोर्मोक्षस्वरूपवैल-क्षण्यव्युत्पादनं तदप्यज्ञानमूलं ॥ सांख्यमते योगमतेच मोक्षसाधनानां विलक्षणत्वेन तत्साध्यमोक्षस्यापि वैलक्षण्यप्राप्त्या तयोर्मोक्षभेदस्य तत्र तत्र सुव्यक्तत्वात् । अत एव एतेनेत्युक्तं परास्तं ॥

यदपि ॥ प्रकाशप्रसरीयचतुर्थहेतोरपि दृष्टांतासिद्धिपराहतत्वं पूर्व-मेवोक्तमिति तदपि अज्ञानव्यामोहकमेव । धर्मजिज्ञासाघटकाध्याया-दिरूपदृष्टांतस्य जागरूकत्वेनेतःपूर्वं कुत्रापि तन्निरासस्याकृतत्वात् । तद-सिद्धेर्दुरुपपादत्वाच्च । तथाचेदमपि ज्ञानदौर्बल्याधीनमेवेति । तस्मात्प-रोक्तमयुक्तमिति सिद्धं ॥

एतेन ॥ सर्वार्थसंग्रहेणोपसंहारोपि पराहतः । अस्मिन्नद्वैतदी-पिकावातागमे परोपसंहृतानां सर्वेषामपि विषयाणां सम्यग्दूषितत्वेनाद्वैतदीपि-कायाः श्रीमत्समीरसमयाख्यजंझावातागमेन सामस्त्येनोन्मूलितत्वात् । यथाचायं दीपिकाग्रंथोऽतिनिर्दलत्वात्प्रेक्षावद्भिरुपेक्ष्यस्तथा प्रागेव विवेचितमि-त्यलं अपहस्तनीयप्रक्रियानिराक्रिययेत्युपरम्यते । तस्मात् श्रीमत्तात्पर्य-चंद्रिकोक्तानि अद्वैतमतसंश्लिष्टानि सर्वाण्यपि दूषणानि वज्रलेपायितान्य र्वाचीनैरल्पज्ञैर्दुराग्रहग्रस्तैर्मंदेन माणवकेन मंदर इव नोद्धर्तुं शक्यानीति सुस्थानेवेति सिद्धं ॥ अतः .... ....

"प्रतिसूत्रं प्रकाश्यते घटनाघठने मया ।
स्वीयान्यपक्षयोस्सम्यग्विदांकुर्वंतु सूरय" ॥

इति साधूक्तं पदवाक्यप्रमाणविदामग्रेसरै स्सर्वतंत्रस्वतंत्रैर्हृद्यानवद्य-वादिभिर्ग्रंथकारैरित्यशेषमतिमंगलं ॥ .... ....

आनंदतीर्थवरदे दानवारण्यपावके ।
ज्ञानदायिनि सर्वेशे श्रीनिवासेस्तु मे मनः ॥ ॥ १ ॥
वेदव्यास गुणवास विद्याधीश सतां वश ।
मां निरासं गतक्लेशंकुर्वनाशं हरेनिशं ॥ श्रीः ॥

इति श्रीमद्विदितप्रभावानां पंडितप्रवराणां गौडगिरि महीधर कुलावतंस वासुदेवाचार्याणामात्मजेनाल्पज्ञेन पूर्वाचार्य निबंधोपजीविना वेंकटरमणाचार्येण संपादितो-यमद्वैतदीपिकावातागमनामा निबंधः समाप्तः.



# अकारादिवर्णक्रमेण विषयसूची.

---

# ॥ शुद्धाशुद्ध पत्रिका ॥

| पृ. | प. | अशु. | शु. |
|---|---|---|---|
| ५ | २० | म्रम | भ्रम |
| ६ | ६ | न्यते | म्यते |
| ,, | ,, | णाया | णया |
| ,, | १८ | ह्यत्व | ह्मत्व |
| ,, | ,, | ह्यापद्य | ह्मापद्म |
| ,, | ,, | पद्ये | पद्मे |
| ,, | १९ | ,, | ,, |
| ,, | २१ | पद्य | पद्म |
| ७ | १५ | त्यास्य | त्यस्य |
| ८ | २ | व्याति | व्यति |
| ,, | ६ | कात्व | काशत्व |
| ,, | ११ | प्राश | प्रकाश |
| ,, | १६ | नाका | नका |
| ,, | १७ | द्रिक्रू | द्रिकाकृ |
| ,, | २० | प्रब | प्राब्र |
| ९ | १ | द्धत्म | द्धात्मा |
| ,, | २ | कल्पनां | कल्पानां |
| ११ | १२ | दान् | दात् |
| १२ | २० | र्द्धिवि | र्द्धि |

| पृ. | प. | अशु. | शु. |
|---|---|---|---|
| १३ | १२ | कार | काकार |
| ,, | ,, | कल्प | फल |
| १५ | १३ | स्फुटि | स्फटि |
| १६ | १० | मेद | भेद |
| ,, | १४ | नगा | नवगा |
| १९ | १ | सद | साद |
| २३ | ५ | समा | सामा |
| २७ | २ | ध्यस | ध्यास |
| २७ | अग्रे | शुद्धस्य-ज्ञानवि-षयता- | परमतेता-दात्म्यस्व-रूपभंगः |
| २९ | ,, | ,, | ,, |
| ३१ | ,, | ,, | ,, |
| ३६ | १ | भव | भाव |
| ३७ | १५ | शोक्लच | शौक्लच |
| ३९ | १३ | न्थव | न्यवा |
| ४० | ५ | णर्म | धर्म |
| ,, | ६ | ष्यनु | प्यनु |
| ,, | ७ | ग्रति | प्रति |

| पृ. | प. | अशु. | शु. |
|---|---|---|---|
| ४० | २१ | साम | सामा |
| ४१ | ५ | नम्ा | नम्यु |
| ,, | १५ | धश्व | श्व |
| ,, | १९ | मन | मान |
| ,, | २३ | ल्यास | ल्पास |
| ४३ | अग्रे | परमतेता | परोक्तशु- |
| | | दात्म्यस्व | द्धशब्दार्थ- |
| | | रूपभंग- | भंगः |
| ,, | ३ | स्यंत | त्यंत |
| ,, | २० | द्धेना | द्धेदेना |
| ४४ | १६ | शत्वं | शकत्वं |
| ,, | ,, | पक्ष | क्ष |
| ,, | १७ | दत्वे | दकत्वे |
| ४५ | ७ | सद्य | साद्य |
| ४५ | अग्रे | परमतेता | परोक्तशु- |
| | | दात्म्यस्व | द्धशब्दार्थ- |
| | | रूपभंगः | भंगः |
| ४७ | ७ | ,, | ,, |
| ,, | १० | द्यना | द्याना |
| ,, | २० | कात्वे | काशत्वे |
| ४८ | ४ | द्यना | द्याना |
| ,, | ११ | तदज | ताज |
| ४९ | ८ | द्यायो | द्यो |

| पृ. | प. | अशु. | शु. |
|---|---|---|---|
| ५२ | १५ | चिम्त्ये | चित्ये |
| ५३ | २४ | स्यैनि | स्यैवनि |
| ५४ | ,, | वस्य | वश्य |
| ५६ | १२ | युक्ति | शुक्ति |
| ६० | ६ | थोगे | योगे |
| ,, | २३ | थोगि | योगि |
| ६२ | १ | न्यया | न्याया |
| ,, | २ | पोठ | पाढः |
| ६४ | २२ | नदि | नादि |
| ६६ | ३ | त्पिड | पिण्ड |
| ६७ | ७ | त्यात् | स्यात् |
| ६९ | १० | पती | पिती |
| ७० | २० | क्षेत | क्षते |
| ,, | २२ | नान | दान |
| ७३ | ९ | ग्राग | प्राग |
| ७९ | १२ | षत्व | षयत्व |
| ८१ | २४ | त्तिदा | त्तिद |
| ८२ | १३ | ज्ञाक | ज्ञान |
| ,, | १६ | च्छिलं | च्छिन्नं |
| ,, | १९ | गभे | गवदभे |
| ८३ | २३ | मंड | खण्ड |
| ८५ | २ | पारः | परः |
| ८६ | १० | मेद | भेद |

| पृ. | प. | अशु. | शु. |
|---|---|---|---|
| ८६ | २३ | त्रनं | चनं |
| ८८ | ६ | भवा | भावा |
| ,, | १२ | चिदु | चिदुत्प |
| ,, | १६ | तनि | तन्नि |
| ८९ | १ | बध्य | बाध्य |
| ९० | २ | तत्वे | तुत्वे |
| ९३ | २२ | क्षयां | क्षायां |
| ९४ | १९ | दंद | सन्द |
| ९६ | १ | कटौ | कोटौ |
| ,, | ९ | कारे | करे |
| १०० | २४ | कपादि | कम्पादि |
| १०१ | ,, | कलादी | कलापादी |
| १०२ | २० | दगं | दङ्ग |
| १०४ | १ | गंध | बन्ध |
| १०५ | २३ | पूर्न | पूर्व |
| १०७ | २ | शांस्त्रं | शास्त्रं |
| ,, | ६ | यथ्या | यर्थ्या |
| १०८ | २३ | व्रत्र | व्रत |
| १०९ | १५ | त्कावि | त्कारवि |
| ११० | ४ | वाच्य | वाच्यम् |
| ११४ | ६ | जीवा | जीयवा |
| ,, | २३ | कात्वे | काशत्वे |
| ११५ | ,, | निवि | निर्वि |
| ११७ | ८ | कोक्त | कोक्तं |
| ११९ | ३ | विस्तार | विस्तर |
| १२० | ८ | स्निग्गु | स्निन्गु |
| ,, | पुटसंख्या | ११० | १२० |
| १२० | ११ | सार | सर |
| १२२ | ३ | भ्याय | न्याय |
| ,, | १७ | पाट | पाठ |
| ,, | १९ | कोदू | कोक्तदू |
| १२६ | १ | ब्दत्य | ब्दस्य |
| १२७ | ८ | नर | नार |
| १२८ | १५ | जिजि | जि |
| १३० | १७ | त्पये | क्षये |
| १३१ | १२ | चाख्य | चारस्य |
| ,, | १४ | त्वामि | त्वमि |
| १३२ | ४ | प्राणि | प्रामाणि |
| ,, | २४ | निरनिर | निर |
| १३६ | २४ | जब्द | शब्द |
| १३९ | १ | स्यनु | त्यनु |
| १४३ | १८ | वैर्थ्य | वैयर्थ्य |
| ,, | २३ | निनि | विनि |
| १४७ | ४ | र्द्थं | दार्थ |
| ,, | ८ | ध्वंसा | ध्वंसा |
| ,, | १३ | दितं | हितं |

| पृ. | प. | अशु. | शु. |
|---|---|---|---|
| १४७ | २३ | लंबा | लम्भा |
| १४८ | ९ | मन | मान |
| ,, | २४ | कालिकालि | कालि |
| १५० | ९ | नुक्तंप | नुकम्प |
| ,, | २१ | धध्य | ध्य |
| १५१ | २३ | कुर्त | कुर्वत |
| १५२ | १० | दुखा | दुःखा |
| १५६ | ७ | दर्नीं | दानीं |
| १५७ | ५ | दृष्टांत | दृष्टान्त |
| १५९ | २४ | प्रमा | प्रामा |
| १६३ | अग्रे | विवरणोक्त नित्यानित्य विवेकभंगः | विवरण-मते वैष-यिकसुखे पि विरा-गायोगः |
| १६४ | १३ | क्षत | क्षित |
| १६५ | अग्रे | विवरणोक्त नित्यानित्य विवेकभंगः | परमते - मुमुक्षा - द्यसंभवः |
| १६६ | ६ | शुक्तो | शुक्रो |
| ,, | १५ | ग्राग | प्राग |
| ,, | १६ | इस्त्या | इत्या |

| पृ. | प. | अशु. | शु. |
|---|---|---|---|
| १६७ | अग्रे | विवरणोक्त नित्यानित्य विवेकभंगः | परमते - मुमुक्षाद्य संभवः |
| ,, | २२ | त्याद्धि | त्यादिद्धि |
| १६८ | ४ | न्योच्द | न्योच्छेद |
| १६९ | अग्रे | विवरणोक्त नित्यानित्य विवेकभंगः | परमते - मुमुक्षाद्य संभवः |
| ,, | २३ | णष्य | णस्य |
| १७१ | ५ | दन | देन |
| ,, | ८ | प्रकश | प्रकाश |
| ,, | १४ | लंब | लम्भ |
| ,, | २३ | म्यव | म्यक् |
| १७२ | ३ | पले | फले |
| १७३ | १२ | तत्त | त |
| ,, | २० | ग्योप्ता | ग्योत्पा |
| १७७ | अग्रे | विवरणोक्त न्नित्यानित्य विवेकभंगः | विवरणाद्यु क्तातःपदा र्थभंगः |
| ,, | २ | प्रायस | प्रयास |
| १८० | १५ | वृतः | वतः |
| १८१ | १२ | सूचत | सूच्यत |
| ,, | २२ | लंब | लम्ब |

| पृ. | प. | अशु. | शु. |
|---|---|---|---|
| १८२ | ८ | ख्यर्थ | ख्यार्थ |
| ,, | १५ | शात्। श | शातूश |
| १८३ | अग्रे | परोक्ताथ- | विवरणाद्यु |
| | | शब्दार्थ- | क्तब्रह्मपदा |
| | | भंगः | र्थभंगः |
| ,, | १६ | वत्त | वत |
| १८६ | १५ | तोत्व | तो |
| १८७ | ४ | भास | भासि |
| १८८ | १४ | श्चेति | चेति |
| १९० | १५ | परा | पर |
| १९२ | १४ | म्मत | न्मत्त |
| १९३ | १६ | त्ररो | त्परो |
| १९५ | ४ | दसु | दशु |
| १९८ | १२ | विविप्र | विप्र |
| ,, | २३ | सूत्रार्थः॥ | सूत्रार्थः- |
| | | श्री | श्री |
| २०० | ८ | न्वस्या | न्वयस्य |
| २०१ | अग्रे | क्तब्रह्म | क्तातः |
| ,, | ३ | सृकृती | सुकृती |
| ,, | २६ | मूते | भूते |
| २०४ | १६ | त्पर्थ | त्पर्य |
| २०५ | २२ | त्म्यानि | त्म्यनि |
| ,, | २४ | मिन्न | भिन्न |

| पृ. | प. | अशु. | शु. |
|---|---|---|---|
| २०६ | १८ | मूतं | भूतं |
| ,, | १९ | वाख्ये | वाक्ये |
| ,, | २२ | मूत | भूत |
| २०७ | १ | रयो | रायो |
| ,, | १२ | मूता | भूता |
| २०८ | ४ | घटा | घट |
| ,, | १९ | स्यादि | त्यादि |
| ,, | २१ | त्वत् | त्वात् |
| २०९ | ८ | अवे | आवे |
| ,, | ११ | सार | सर |
| २१० | १६ | शन्को | शक्नो |
| ,, | १९ | श्यादि | स्यादि |
| २१२ | २ | देरो | दरो |
| ,, | ४ | ह्मभे | ह्माभे |
| २१३ | १६ | लभो | लाभो |
| २१४ | ४ | पादा | पदा |
| ,, | ९ | मिमि | मि |
| ,, | २२ | न्निदै | न्निन्दै |
| २१५ | पुटसंख्या | २२५ | २१५ |
| २१६ | ,, | २२६ | २१६ |
| ,, | १३ | यितं | यितु |
| २१८ | ११ | पाढा | पाटा |
| २२० | २२ | वस्या | वश्या |
| २२२ | १९ | दृस्य | दृश्य |